आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४१

श्रीमद्द्वैपायनमुनिप्रणीतम्

# आग्नेपुराणम् ।

( तत्तदध्यायगतविषयानुक्रमसनाथीकृतम् )

एतत्पुस्तकम्

आनन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालयं

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२२

खिस्ताब्दाः १९००



मूल्यं रूपकपञ्चकं चत्वार आणकाश्च । (५०४)

# आदर्शपुस्तकोल्लेखपत्रिका।

---

अथास्य श्रीमद्द्वैपायनमुनिप्रणीतस्याग्निपुराणस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

(क.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां रा. रा. विनायक वामन ऊर्फ "रावसाहेब दामले" इत्येतेषाम्। लेखनकालः— शके १७१९। संवत् १८५४।

(ख.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, एतत्पुस्तकं नागपुरनिवासिनां रा. रा. "हरि महादेव पण्डित" इत्येतेषाम्। लेखनकालः—शके १७३७।

(ग.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां वे. शा. रा. रा. "वासुदेव गङ्गाधर शास्त्री शेण्ड्ये" इत्येतेषाम्। लेखनकालः— शके १६९१।

(घ.) इति संज्ञितम्—अग्निपुराणमपूर्णं द्विचत्वारिंशदधिकद्विशततमाध्यायपर्यन्तं "बिब्लिओथिका इण्डिका" इति ग्रन्थावल्यां मुद्रितम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां रा. रा. "नारायण महादेव कुण्टे" इत्येतेषाम्।

(ङ.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां श्रीयुत "तात्यासाहेब खासगीवाले" इत्येतेषाम्।

(च.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, एतत्पुस्तकं बडलीग्रामनिवासिनां वे. शा. रा. रा. "यज्ञेश्वरदीक्षितबडलीकर" इत्येतेषाम्।

(छ.) इति संज्ञितम्—अग्निपुराणं पूर्णम्, कलिकातायां सरस्वतीयन्त्रे मुद्रितम्, एतत्पुस्तकं पुण्यपत्तननिवासिनां रा. रा. "नागोपंत पटवर्धन" इत्येतेषाम्।

## समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका।

# अथाग्निपुराणान्तर्गताध्यायविषयानुक्रमः ।

समाप्तेयमग्निपुराणान्तर्गताध्यायविषयानुक्रमणी ।

श्रीमद्द्वैपायनमुनिप्रणीतम्

# अग्निपुराणम् ।

तत्र प्रथमः प्रश्नाध्यायः ।

मङ्गलाचरणश्लोकः ।

*श्रियं सरस्वतीं गौरीं गणेशं स्कन्दमीश्वरम् । ब्रह्माणं वह्निमिन्द्रादीन्वासुदेवं नमाम्यहम् ॥ १

पुराणारम्भप्रस्तावनाश्लोकाः ।

नैमिषे हरिमीजाना ऋषयः शौनकादयः । तीर्थयात्राप्रसङ्गेन स्वागतं सूतमब्रुवन् ॥ २

ऋषय ऊचुः—

सूत त्वं पूजितोऽस्माभिः सारात्सारं वदस्व नः । येन +विज्ञातमात्रेण सर्वज्ञत्वं प्रजायते ॥ ३

सूत उवाच—

सारात्सारो हि भगवान्विष्णुः सर्गादिकृद्विभुः । ब्रह्माहमस्मि तं ज्ञात्वा सर्वज्ञत्वं प्रजायते ॥ ४

द्वे ब्रह्मणी वेदितव्ये *शब्दब्रह्म परं च यत् । द्वे विद्ये वेदितव्ये हि इति चाऽऽथर्वणी श्रुतिः ५

अहं शुकश्च पैलाद्या गत्वा बदरिकाश्रमम् । व्यासं नत्वा पृष्टवन्तः सोऽस्मान्सारमथाब्रवीत् ॥ ६

व्यास उवाच—

शुकाद्यैः शृणु सूत त्वं वसिष्ठो मां यथाऽब्रवीत् । ब्रह्म सारं हि पृच्छन्तं मुनिभिश्च [3]परात्परम् ७

[+ वसिष्ठ उवाच— ]

[4]द्विविधं ब्रह्म वक्ष्यामि शृणु व्यासाखि[5]लात्मगम् । यथाऽग्निर्मां पुरा प्राह मुनिभिर्दैवतैः सह ॥ ८

पुराणं परमाग्नेयं ब्रह्मविद्याऽक्षरं परम् । ऋग्वेदा[6]द्यपरं ब्रह्म स[7]र्वदेवसु[8]खं परम् ॥ ९

अग्निनोक्तं पुराणं [9]यदाग्नेयं वेदसंमितम् । भुक्तिमुक्तिप्रदं [10]पुण्यं पठतां शृण्वतां नृणाम् ॥ १०

कालाग्निरूपिणं विष्णुं ज्योतिर्ब्रह्म परा[11]त्परम् । मुनिभिः पृष्टवान्देवं पूजितं ज्ञानकर्मभिः ॥ ११

वसिष्ठ उवाच—

संसारसागरोत्ता[12]रनावं ब्रह्मेश्वरं वद । विद्यासारं यद्विदित्वा सर्वज्ञो जायते नरः ॥ १२

अग्निरुवाच—

विष्णुः कालाग्निरुद्रोऽहं विद्यासारं वदामि ते । [13]ब्रह्माऽऽग्नेयं पुराणं यत्सर्वं सर्वस्य कारणम् ॥ १३

सर्गस्य प्रतिसर्गस्य वंशमन्वन्तरस्य च । वंशानुचरितादेश्च मत्स्यकूर्मादि[14]रूपधृक् ॥ १४

---

* लक्ष्मीमिति क्वचित्पुस्तके पाठः । + विज्ञानमात्रेणेति ङ. पुस्तके पाठः । * 'अपरं च परं च यत्' इति कुत्राचित्पुस्तके पाठः । + इदमधिकम् ।

---

१ क. ङ. °त् । शु° । २ क. घ. यदब्र° । ३ ख. ङ. च. परापरम् । ४ ख. ग. द्वैविद्यं । घ. द्वैविध्यं । ५ क. ङ. °लाध्वग° । घ. °लानुगम् । ६ क. °दाद्यं प° । ङ. °दादिप° । ७ ख. ग. सर्ववेदमुखं । ८ घ. °सुखावहम् । ९ घ. ङ. °यं ब्रह्मसं° । १० घ. ङ. दिव्यं । ११ क. ङ. °रापर° । १२ क. °त्तारं नादं ब्र° । १३ क. ङ. विद्यासारं । १४ क.

द्वे विद्ये भगवान्विष्णुः परा चैवापरा [1]द्विज । ऋग्यजुःसामाथर्वाख्या वेदा[2] अङ्गानि षड्द्विज १५
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोभिधानं मीमांसा धर्मशास्त्रं पुराणकम् १६
न्यायो वैद्यकगान्धर्वं धनुर्वेदोऽर्थशास्त्रकम् । अपरेयं, परा विद्या यया ब्रह्मा[3]वगम्यते ॥ १७
यत्तददृश्यमग्राह्यमगोत्रचरणं ध्रुवम् । विष्णुनोक्तं यथा मह्यं देवेभ्यो ब्रह्मणा पुरा ॥ १८
तथा ते कथयिष्यामि हेतुं मत्स्यादिरूपिणम् ॥ १९

इत्यादिमहापुराण आग्नेये व्यासप्रोक्ते प्रथमः प्रश्नाध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९.

---

अथ द्वितीयोऽध्यायः ।

---

मत्स्यावतारकथावर्णनम् ।

वसिष्ठ उवाच—

मत्स्यादिरूपिणं विष्णुं ब्रूहि सर्गादिकारणम् । पुराणं ब्रह्म चाऽऽग्नेयं यथा विष्णोः पुरा श्रुतम् १

अग्निरुवाच—

मत्स्यावतारं वक्ष्येऽहं वसिष्ठ शृणु वै हरेः । अवतारक्रिया दुष्टनष्ट्यै सत्पालनाय हि ॥ २
आसीदतीतकल्पा[5]न्ते ब्रा[6]ह्मो नैमित्तिको लयः । समुद्रोपप्लुतास्तत्र लोका भूरादिका मुने ॥ ३
मनुर्वैवस्वतस्तेपे तपो वै भुक्तिमुक्तये । एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ ४
तस्याञ्जल्युदके मत्स्यः स्वल्प एकोऽभ्यपद्यत । क्षेप्तुकामं जले प्राह न मां क्षिप [7]नृपोत्तम ॥ ५
ग्राहादिभ्यो भयं मे[8]ऽत्र तच्छ्रुत्वा[9] कलशेऽक्षिपत् । मनुं [10]वृद्धः पुनर्मत्स्यः प्राह तं देहि मे बृहत् ६
स्थानमेतद्वचः श्रुत्वा राजाऽथोदञ्चनेऽक्षिपत् । तत्र वृद्धोऽब्रवीद्भूपं पृथु देहि पदं मनो ॥ ७
सरोवरे पुनः क्षिप्तो ववृधे तत्प्रमाणवान् । ऊचे देहि बृहत्स्थानं प्राक्षिपच्चाम्बुधौ [11]मनुः ॥ ८
लक्षयोजनविस्तीर्णः क्षणमात्रेण सोऽभवत् । मत्स्यं तमद्भुतं दृष्ट्वा विस्मितः प्राब्रवीन्मनुः ॥ ९
को भवान्न[12]नु विष्णुस्त्वं नारायण नमोऽस्तु ते । मायया मोहयासि मां किमर्थं त्वं जनार्दन॥१०
मनुनोक्तोऽब्रवीन्मत्स्यो मनुं वै पालने [13]रतः । अवतीर्णो भवायास्य जगतो दुष्टनष्टये ॥ ११
सप्तमे[14]ऽथ दिने [15]ऽब्धिः प्लावयिष्यति वै जगत् । उपस्थितायां नावि त्वं बीजादीनि [16]निधाय च
सप्तर्षिभिः परिवृतो निशां ब्राह्मीं [17]चरिष्यसि । उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥१३
इत्युक्त्वाऽ[18]न्तर्दधे मत्स्यो मनुः कालप्रतीक्षकः । स्थितः समुद्र उद्वेले नावमारुरुहे तदा ॥ १४
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः । नावं [19]बद्ध्वा तस्य शृङ्गे मत्स्याख्यं च पुराणकम् ॥
शुश्राव मत्स्यात्पापघ्नं संस्तुवन्स्तुतिभिश्च तम् । ब्रह्मवेदप्रहर्तारं हयग्रीवं च दानवम् ॥ १६

---

१ घ. च ह । २ क. °दाङ्गानि च यद्द्विज । ३ घ. ङ. °ह्माभिग° । ४ घ. परम् । ङ. ब्रुवन् । ५ ख. ग. °न्ते ब्रह्मनैमि° । ६ क. ङ. ब्राह्मे । ७ घ. ङ. नरोत्तम । ८ घ. मेऽद्य । ९ घ. °त् । स तु वृ° । १० ग. क्रुद्धः । ११ घ. ङ. ततः । १२ घ. ङ. °नु वै विष्णुर्नारा° । १३ क. घ. ङ रतम् । १४ ङ. °मे दिवसे ह्य° । १५ ग. घ. त्वब्धिः । १६ घ. ङ. विधाय । १७ ख. ङ. चरिष्यति । १८ ग. °न्तर्हिते मत्स्ये म° । °न्तर्हितो म° । १९ घ. ङ. बबन्ध तच्छृङ्गे ।

अवधीद्वेदमन्त्राद्यान्पालयामास केशवः । प्राप्ते कल्पेऽथ वाराहे कूर्मरूपोऽभवद्धरिः ॥ १७

इत्यादिमहापुराण आग्नेयेऽग्निप्रोक्ते विद्यासारे मत्स्यावतारवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६

---

अथ तृतीयोऽध्यायः ।

---

कूर्मावतारकथावर्णनम् ।

अग्निरुवाच—

वक्ष्ये कूर्मावतारं च [1]संश्रुतं पाप[3]नाशनम् । पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिता[4]ः ॥ १
दुर्वाससश्च शापेन निश्रीकाश्चाभवंस्तदा । [5]सुराः क्षीराब्धिगं विष्णुमूचुः पालय वै सुरान् ॥
ब्रह्मादिकान्हरिः प्राह संधिं कुर्वन्तु चासुरैः । क्षीराब्धिमथनार्थं च[6] अमृतार्थं श्रिये सुराः ॥ ३
अरयोऽपि हि संधेयाः सति का[7]र्यार्थगौरवे । युष्मानमृतभाजो[8]ऽथ करिष्यामि न दानवान् ॥ ४
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च[9] वासुकिम् । क्षीराब्धिं मत्सहायेन निर्मथत ह्यतन्द्रिताः ॥ ५
विष्णूक्ताः संविदं कृत्वा दैत्यैः क्षीराब्धिमागताः । ततो मथितुमारब्धा यतः पुच्छं ततः सुराः
फणिनिश्वास[10]संग्लाना हरिणाऽऽप्यायिताः सुराः । मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्
कूर्मरूपं समास्थाय दध्रे विष्णुश्च मन्दरम् । क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलं ह्यभूत् ॥ ८
हरेण धारितं कण्ठे नीलकण्ठस्त[11]तोऽभवत् । ततोऽभूद्वारुणी देवी पारिजातश्च कौस्तुभः ॥ ९
गावश्चाप्सरसो दिव्या लक्ष्मीर्देवी हरिं गता । पश्यन्तः सर्वदेवास्तां स्तुवन्तः सश्रियोऽभवन् ॥
ततो धन्वन्तरिर्विष्णुरायुर्वेद[12]प्रदर्शकः । बिभ्रत्कमण्डलुं पूर्णममृतेन [13]समुत्थितः ॥ ११
अमृतं तत्कराद्दैत्याः सुरेभ्योऽर्धं प्रदाय च । गृहीत्वा जग्मुर्जम्भाद्या विष्णुः स्त्रीरू[14]पधृक्ततः ॥
तां दृष्ट्वा रूपसंपन्नां दैत्याः प्रोचुर्विमोहिताः । भव भार्याऽमृतं [15]गृह्य पाययास्मान्वरानने ॥ १३
तथेत्युक्त्वा हरिस्तेभ्यो गृहीत्वाऽपाययत्सुरान् । चन्द्ररूपधरो राहुः पिबंश्चार्केन्दुना+ऽर्पितः ॥
हरिणाऽप्यरिणा छिन्नं [16]सबाहु [17]तच्छिरः पृथक् । कृपयाऽमरतां नीतं वरदं हरिमब्रवीत् ॥ १५
राहुर्मत्तस्तु चन्द्रार्कौ प्राप्स्येते ग्रहणं ग्र[18]हैः । तस्मिन्काले च यद्दानं दास्यन्ते स्यात्तदक्षयम् ॥१६
तथेत्याहाथ तं विष्णुस्ततः [19]सर्वैः सहामरैः । (* स्त्रीरूपं संपरित्यज्य [20]हरेणोक्तं प्रदर्शय ॥१७
दर्शयामास रुद्राय स्त्रीरूपं भगवान्हरिः । ) मायया मोहितः शंभुर्गौरीं त्यक्त्वा स्त्रियं गतः॥१८
नग्न उन्मत्तरू[21]पोऽभूत्स्त्रियः(याः) केशानधारयत् । अगाद्विमुच्य केशान्स्त्री अन्वधावच्च तां गताम्

---

+ क्वचित्पुस्तके—°र्दुसूचितः । इति पाठो वर्तते । * धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तके नास्ति ।

---

१ क. ङ. पातुं रुद्रेऽथ । २ घ. ङ. श्रुत्वा । ३ घ. ङ. °पप्रणाश° । ४ ङ. °ताः । सु° । ५ ग. घ. ङ. स्तुत्वा । ६ ख. घ. हि । ७ ख. ग. कार्यस्य गौ° । ८ घ. ङ. °जो हि कारयामि । ९ ग. घ. ङ. तु । १० घ. ङ. °संतप्ता ह° । ११ ख. ग. °तो हरः । त° । १२ ख. ग. °प्रवर्तकः । १३ ङ. समन्वितम् । १४ ग. °पमागतः । १५ ग. गुह्यं । १६ घ. स राहुस्तच्छि° । १७ ग. कण्ठतः शिरः । १८ क. ख. ग. च. °हः ॥ भवेयं ये तदा दानं । १९ ङ. च. सर्वैस्तदाऽमरैः । २० क. ख. घ. हरेणोक्तः । २१ ख. ग. °पोऽपि स्त्रियः ।

स्खलितं तस्य वीर्यं कौ यत्र यत्र हरस्य हि । तत्र [1]तत्राभवत्क्षेत्रं लिङ्गानां कनकस्य च ॥ २०
मायेयमिति तां ज्ञात्वा स्वरूपस्थोऽभव[2]द्धरः । शिवमाह हरी रुद्र जिता माया त्वया हि मे॥२१
न जेतुमेनां शक्तो मे [3]त्वदृतेऽन्यः पुमान्भुवि । [4]अप्राप्ताश्चामृतं दैत्या देवैर्युद्धे निपातिताः ॥ २२
त्रिदिवस्थाः सुराश्चाऽऽसन्दैत्याः पातालवासिनः । यो नरः पठते देवविजयं त्रिदिवं व्रजेत् २३

इत्यादिमहापुराण आग्नेये विद्यासारे कूर्मावतारवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८९

---

अथ चतुर्थोऽध्यायः ।

---

## वराहनारसिंहादीनामवताराणां वर्णनम् ।

अग्निरुवाच—

अवतारं वराहस्य वक्ष्येऽहं पापनाशनम् । हिरण्याक्षोऽसुरेशोऽभूद्देवाञ्जित्वा [6]दिवि स्थितः॥ १
देवैर्गत्वा स्तुतो विष्णुर्यज्ञरूपो वराहकः । अभूत्तं दानवं हत्वा दैत्यैः [7]सार्धं तु कण्टकम् ॥ २
धर्मदेवादिरक्षाकृत्ततः सोऽन्तर्दधे हरिः । हिरण्याक्षस्य वै भ्राता हिरण्यकशिपुस्तथा ॥ ३
जितदेवयज्ञभागः सर्वदेवाधिकारकृत् । नारसिंहं वपुः कृत्वा तं ज[8]घान सुरैः सह ॥ ४
स्वपदस्थान्सुरांश्चक्रे नारसिंहः सुरै[9]ः स्तुतः । देवासुरे पुरा युद्धे बलिप्रभृतिभिः सुराः ॥ ५
जिताः स्वर्गात्परिभ्रष्टा हरिं [10]ते शरणं गताः । सुराणामभयं दत्त्वा अदित्या कश्यपेन च ॥ ६
स्तुतोऽसौ वामनो भूत्वा [11]ह्यदित्यां स क्रतुं ययौ । बलेः श्रीयजमानस्य, गङ्गाद्वा[12]रे गृणन्स्तुतिम् ७
वेदान्पठन्तं तं श्रुत्वा वामनं वरदोऽब्रवीत् । (*निवारितोऽपि शुक्रेण बलिर्ब्रूहि यदिच्छसि ॥८
तत्तेऽहं संप्रदास्यामि, वामनो बलिमब्रवीत् ।) पदत्रयं मे गुर्वर्थं देहि दास्ये तमब्रवीत् ॥ ९
तोये तु पतिते हस्ते वामनोऽभूदवामनः । भूर्लोकं स भुवर्लोकं [13]स्वर्लोकं च पदत्रयम् ॥ १०
चक्रे बलिं च सुतले तच्छक्राय ददौ हरिः । शक्रो देवैर्हरिं स्तुत्वा भुवनेशः सुखी त्वभूत्॥ ११
वक्ष्ये परशुरामस्य चावतारं शृणु द्विज । उद्धतान्क्षत्रियान्मत्वा भूभारहरणाय सः ॥ १२
अवतीर्णो [15]हरिः शान्त्यै देवविप्रादिपालकः । जमदग्ने रेणुकायां भार्गवः शस्त्रपारगः ॥ १३
दत्तात्रेयप्रसादेन कार्तवीर्यो नृपस्त्वभूत् । सहस्रबाहुः सर्वोर्वीपतिः स मृगयां गतः ॥ १४
[16]श्रान्तो निमन्त्रितोऽरण्ये मुनिना जमदग्निना । कामधेनुप्रभावेण भोजितः सबलो नृपः ॥ १५
अप्रार्थय[17]त्कामधेनुं यदा स न ददौ तदा । हृतवानथ रामेण शिरश्छित्त्वा निपातितः ॥ १६
(* युद्धे परशुना राजा सधेनुः स्वाश्रमं ययौ । कार्तवीर्यस्य पुत्रैस्तु जमदग्निर्निपातितः) ॥ १७
रामे वनं [18]गते वैरादथ रामः समागतः । पितरं निहतं दृष्ट्वा पितृनाशाभिमर्षितः ॥ १८

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तके नास्ति । * धनुश्चिह्नान्तर्गतं ग. पुस्तके नास्ति ।

---

१ क तत्र च तत्क्षे° । २ ख. °द्धरेः । शि° । ३ क. मे त्वामृते° । ४ ग. घ. अप्राप्याथामृ° । ५ क. ङ. च. °सन्यः पठेत्स दिवं । घ. सन्यः पठेत्त्रिदिवं । ६ क. ङ. च. दिवं । ७ घ. ङ. सार्कं च । ८ ख. ग. ङ. °घानासु° । ९ च. °रैः सह । दे° । १० घ. ङ. वै । ११ क. °दित्याश्च क° । १२ ख. च. °रे गृणञ्श्रुतिम् । घ. °रेऽगृणाच्छ्रुतिम् । १३ च. स्वर्गलोकं प° । १४ ङ. च. °रतर° । १५ ग. °रिः साक्षाद्देव° । १६ क. शान्तो । १७ ख. ग. °यद्धोम° । १८ क. ङ.

त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रामकरो[1]द्विभुः । कुरुक्षेत्रे पञ्च कुण्डान्कृत्वा संतर्प्य वै पितॄन् ॥ १९
कश्यपाय[2] महीं दत्त्वा महेन्द्रे पर्वते स्थितः । कूर्मस्य च वराहस्य नृसिंहस्य च वामनम् ॥ २०
अवतारं[3] च रामस्य श्रुत्वा याति दिवं नरः ॥ २१

इत्यादिमहापुराण आग्नेये वराहनृसिंहवामनपरशुरामावतारवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८०

---

अथ पञ्चमोऽध्यायः ।

---

श्रीरामावतारकथावर्णनम् ।

अग्निरुवाच—

रामायणमहं वक्ष्ये नारदेनोदितं पुरा । वाल्मीकये[4] यथा तद्वत्पठितं भुक्तिमुक्तिदम् ॥ १

नारद उवाच[5]—

विष्णुनाभ्यब्जजो ब्रह्मा मरीचिर्ब्रह्मणः सुतः । मरीचेः कश्यपस्तस्मात्सूर्यो वैवस्वतो मनुः ॥ २
ततस्तस्मात्तथेक्ष्वाकुस्तस्य वंशे ककुत्स्थकः । ककुत्स्थस्य रघुस्तस्मादजो दशरथस्ततः ॥ ३
रावणादेर्वधार्थाय चतुर्धाऽभूत्स्वयं हरिः । राज्ञो दशरथाद्रामः कौसल्यायां बभूव ह ॥ ४
कैकेय्यां भरतः पुत्रः सुमित्रायां च लक्ष्मणः । शत्रुघ्नश्चर्ष्यशृङ्गेण[6] तासु संदत्तपायसात् ॥ ५
प्राशिताद्यज्ञसंसिद्धाद्रामाद्याश्च समाः पितुः । यज्ञविघ्नविनाशाय विश्वामित्रार्थितो नृपः ॥ ६
रामं संप्रेषयामास लक्ष्मणं मुनिना सह । रामो गतोऽस्त्रशस्त्राणि शिक्षितस्ता[7]डकान्तकृत् ॥ ७
मारीचं मा[8]नवास्त्रेण मोहितं दूरतोऽनयत् । सुबाहुं यज्ञहन्तारं सबलं चावधीद्बली[9] ॥ ८
सिद्धाश्रमनिवासी च विश्वामित्रादिभिः सह । गतः क्रतुं मैथिलस्य द्रष्टुं चा[10]पं सहानुजः[11] ॥ ९
शतानन्दनिमित्तेन विश्वामित्रप्रभावतः[12] । रा[13]मश्च प्र[14]थितो राज्ञा समुनिः पूजितः क्रतौ ॥ १०
धनुरापूरयामास लीलया स बभञ्ज तत् । वीर्यशुल्कां स जनकः सीतां कन्यां त्वयोनिजाम् ११
ददौ रामाय रामोऽपि पित्रादौ हि समागते । उपयेमे जानकीं तामूर्मिलां लक्ष्मणस्तदा[15] ॥ १२
श्रुतकीर्तिमाण्डवी च कुशध्वजसुते तथा । जनकस्यानुजस्यैते शत्रुघ्नभरतावुभौ ॥ १३
कन्ये द्वे तूपयेमाते, जनकेन सुपूजितः[16] । रामोऽगात्स वसिष्ठाद्यैर्जामदग्न्यं विजित्य च ॥ १४
अयोध्यां, भरतोऽप्यागात्सशत्रुघ्नो[17] युधाजितः* । १५

इत्याग्नेये महापुराणे श्रीरामायणे बालकाण्डे पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९५

---

* पुरीमिति शेषः ।

१ ख. ग. °रोत्प्रभुः । २ घ. काश्यपाय । ३ क. ङ. च. °रं स रा° । ४ ख. ग. वाल्मीकाय । ५ ग. °च—सृष्ट्यर्थं च हरेर्ब्रह्मा । ६ ख. ग. घ. °घ्न ऋष्य° । ७ ख. ग. °स्ताटका° । ८ क. पावकास्त्रेण । ङ. च. पावनास्त्रेण । ९ ख. °धीद्व्रती । सि° । १० क. चायं । ११ क. °जः । सदान° । १२ ख. ग. ङ. च. °वकः । रा° । १३ ख. ग. घ. ङ. च. रामाय । १४ ख. ग. ङ. कथितो । १५ घ. ङ. °स्तथा । श्रु° । १६ ङ. च. सुपूजिताः । १७ क. °घ्नोऽथ राजिताम् । ख. ग. ङ. °घ्नो युधाजितम् ।

अथ षष्ठोऽध्यायः ।

---

रामायणेऽयोध्याकाण्डम् ।

नारद उवाच—

भरतेऽथ गते रामः पित्रादीनभ्यपूजयत् । राजा दशरथो राममुवाच शृणु राघव ॥ १
गुणानुरागाद्राज्ये त्वं प्रजाभिरभिषेचितः । मनसाऽहं प्रभाते ते[2] यौवराज्यं ददामि ह ॥ २
रात्रौ त्वं सीतया सार्धं संयतः सुव्रतो भव । राज्ञश्च मन्त्रिणश्चाष्टौ[3] सवसिष्ठास्तथाऽब्रुवन्[4] ॥ ३
दृष्टिर्जयन्तो विजयः सिद्धार्थो राज्यवर्धनः[5] । अशोको[6] धर्मपालश्च सुमन्त्रः सवसिष्ठकः ॥ ४
पित्रादिवचनं श्रुत्वा तथेत्युक्त्वा स राघवः । स्थितो देवार्चनं कृत्वा कौसल्यायै[7] निवेद्य तत् ५
राजोवाच वसिष्ठादीन्रामराज्याभिषेचने । संभारान्संभरन्तु[8] स्म इत्युक्त्वा कैकयीं गतः ॥ ६
अयोध्यालंकृतिं दृष्ट्वा ज्ञात्वा रामाभिषेचनम् । भविष्यतीत्याचचक्षे कैकेयीं मन्थराऽसती[9] ॥ ७
पादौ गृहीत्वा रामेण कर्षिता साऽपराधतः । तेन वैरेण सा रामं वनवासं च[10] काङ्क्षति ॥ ८
कैकेयि[11] त्वं समुत्तिष्ठ रामराज्याभिषेचनम् । मरणं तव पुत्रस्य मम ते नात्र संशयः ॥ ९
कुब्जयोक्तं च तच्छ्रुत्वा एकमाभरणं ददौ । उवाच मे यथा[12] रामस्तथा मे भरतः सुतः ॥ १०
उपायं[13] तं न पश्यामि भरतो येन राज्यभाक् । कैकेयीमब्रवीत्क्रुद्धा[14] हारं त्यक्त्वाऽथ मन्थरा ११

मन्थरोवाच—

बालिशे रक्ष भरतमात्मानं मां च राघवात् । भविता राघवो राजा राघवस्य ततः सुताः[15] ॥१२
राजवंशस्तु कैकेयि भरतात्परिहास्यते । देवासुरे पुरा युद्धे शम्बरेण हताः सुराः ॥ १३
रात्रौ भर्ता गतस्तत्र रक्षितो विद्यया त्वया । वरद्वयं तदा प्रादाद्याचेदानीं नृपं च यत् ॥ १४
रामस्य च वने वासं नव वर्षाणि पञ्च च । यौवराज्यं च भरते तदिदानीं प्रदास्यति ॥ १५
प्रोत्साहिता कुब्जया सा अनर्थे चार्थदर्शिनी । उवाच सदुपायो[16] मे कथितः *स करिष्यति १६
क्रोधागारं प्रविश्याथ[17] पतिता भुवि मूर्छिता । द्विजादीनर्चयित्वाऽथ राजा दशरथस्तदा ॥ १७
ददर्श कैकयीं रुष्टामुवाच कथमीदृशी । रोगार्ता किं भयोद्विग्ना किमिच्छसि करोमि तत् ॥ १८
येन रामेण हि विना न जीवामि मुहूर्तकम् । शपामि तेन कुर्यां ते वाञ्छितं तव सुन्दरि ॥ १९
सत्यं ब्रूहीति सोवाच नृप मह्यं ददासि[19] चेत् । वरद्वयं पूर्वदत्तं सत्यार्थं[18] देहि मे नृप ॥ २०
चतुर्दश समा रामो वने वसतु संयतः । संभारैरेभिरद्यैव भरतोऽत्राभिषेच्यताम्[20] ॥ २१
विषं पीत्वा मरिष्यामि दास्यसि त्वं[21] न चेन्नृप । तच्छ्रुत्वा मूर्छितो भूमौ वज्राहत इवापतत् २२
मुहूर्ताच्चेतनां प्राप्य कैकेयीमिदमब्रवीत् ॥ २२

---

* स दशरथः ।

---

१ क. ङ. गुणान्धरागा° । च. गुणान्धकाराद्रा° । २ ङ. त्वां । ३ क. °श्चाऽऽऽशु स° । ४ ख. °स्तदाऽब्रु° । ५ ग. घ. राष्ट्रवर्धनः । ६ क. °को मन्त्रपा° । ७ क. ख. ग. घ. ङ. कौशल्या° । ८ क. ख. घ. °भवन्तु । ९ घ. °रा सखी । हा° । १० क. च. च कां गतिम् । कै° । ग. ङ. च काङ्क्षती । कै° । ११ क. ग. कैकर्यी । ख. घ. ङ कैकयि । १२ च. रामो भरतो मत्सुतस्तथा । उ° । १३ ख. ग. घ. ङ. च. °यं तु न । १४ क. °वीत्कुब्जा हा° । १५ ख. घ. सुतः । १६ क. ङ. च. स त्वया यन्मे कथितं कारयिष्यति । ख. घ. सदुपायं मे कथितं कारयिष्यति । १७ ख. घ. च. प्रविष्टाऽथ । १८ घ. सत्यात्त्वं । १९ क. ग. संगतः । २० ख. ग. ङ. च. °भिषिच्य° । २१ ग. न मे नृप ।

दशरथ उवाच—

किं कृतं तव रामेण मया वा पापनिश्चये । यन्मामेवं ब्रवीषि त्वं सर्वलोकाप्रियंकरि ॥ २३
केवलं त्वत्प्रियं कृत्वा भविष्यामि सुनिन्दितः । न त्वं भार्या कालरात्रिर्भरतो नेदृशः सुतः २४
प्रशाधि विधवा राज्यं मृते मयि गते सुते । सत्यपाशनिबद्धस्तु राममाहूय चाब्रवीत् । २५
कैकेय्या वञ्चितो राम राज्यं कुरु निगृह्य माम् । * त्वया वने तु वस्तव्यं कैकेयीभरतो नृपः+
*पितरं चैव कैकेयीं नमस्कृत्य प्रदक्षिणम् । कृत्वा नत्वा च कौसल्यां समाश्वास्य सलक्ष्मणः॥
सीतया भार्यया सार्धं सरथः ससुमन्त्रकः । दत्त्वा दानानि विप्रेभ्यो दीनानाथेभ्य एव सः २९
मातृभिश्चैव पित्राद्यैः शोकार्तैर्निर्गतः पुरात् । उषित्वा तमसातीरे रात्रौ पौरान्विहाय च+॥३०
प्रभाते तमपश्यन्तोऽयोध्यां ते पुनरागताः । रुदन्राजाऽपि कौसल्यागृहमागात्सुदुःखितः ॥ ३१
पौरा जनाः स्त्रियः सर्वा रुरुदू राजयोषितः । रामो रथस्थश्चीराढ्यः शृङ्गवेरपुरं ययौ ॥ ३२
गुहेन पूजितस्तत्र इङ्गुदीमूलमाश्रितः । लक्ष्मणः सगुहो रात्रौ चक्रतुर्जागरं हि तौ ॥ ३३
सुमन्त्रं सरथं त्यक्त्वा प्रातर्नावाऽथ जाह्नवीम् । रामलक्ष्मणसीताश्च तीर्त्वा तेऽगुः प्रयागकम् ३४
भरद्वाजं नमस्कृत्य चित्रकूटगिरिं ययुः । वास्तुपूजां तत्र कृत्वा स्थिता मन्दाकिनीतटे ॥ ३५
सीतायै दर्शयामास चित्रकूटं च राघवः । नखैर्विदारयन्तं तां काकं तच्चक्षुराक्षिपत् ॥ ३६
ऐषिकास्त्रेण(?) शरणं प्राप्तो देवान्विहाय सः । रामे वनं गते राजा षष्ठेऽह्नि निशि चाब्रवीत् ॥
कौशल्यायै कथां पूर्वां यदज्ञानाद्धतः पुरा । कौमारे शरयूतीरे यज्ञदत्तकुमारकः ॥ ३८
(* शब्दभेदाच्च कुम्भेन शब्दं कुर्वंश्च तत्पिता । शशाप विलपन्मात्रा+शोकं कृत्वा रुदन्मुहुः) ३९
पुत्रं विना मरिष्यावस्त्वं च शोकान्मरिष्यसि । पुत्रं विना स्मरञ्शोकात्कौशल्ये मरणं मम॥ ४०
कथामुक्त्वाऽथ हा राममुक्त्वा राजा दिवं गतः । सुप्तं मत्वाऽथ कौशल्या सुप्ता शोकार्तमेव सा ।॥
सुप्रभाते शयानं तं सूतमागधबन्दिनः । (*प्रबोधका बोधयन्ति न च बुध्यत्यसौ नृपः) ॥ ४२
कौशल्या तं मृतं ज्ञात्वा हा हताऽस्मीति चापतत् । नरा नार्योऽथ रुरुदुस्तैलद्रोण्यां निधाय तम् ४३
वसिष्ठेन च तत्कालमानीतो भरतः किल । सुमन्त्राद्यैः सशत्रुघ्नः शीघ्रं राजगृहात्पुरीम् ॥ ४४
दृष्ट्वा सशोकां कैकेयीं निन्दयामास दुःखितः । अकीर्तिः पातिता मूर्ध्नि कौशल्यां स प्रशंस्य च ४५
पितरं तैलद्रोणीस्थं संस्कृत्य शरयूतटे । वसिष्ठाद्यैर्जनैरुक्तो राज्यं कुर्विति सोऽब्रवीत् ॥ ४६
व्रजामि राममानेतुं रामो राजा मतो बली । शृङ्गवेरं प्रयागं च भरद्वाजेन भोजितः ॥ ४७

---

* अर्धपूरणायात्र ' अथवा ' इति प्राह्यम् । + भवत्विति शेषः । * 'इति दशरथवाक्यं श्रुत्वा रामः' इत्यर्थपूरणायात्र प्राह्यम् । + रामो गत इति शेषः । * धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. च. पुस्तकेषु नास्ति । + यज्ञदत्तमात्रा सहेत्यर्थः । * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

---

१ घ. या त्वं भार्या कालरात्री भर° । २ क. ङ. च. °पाशेन ब° । ३ ख. ग. न । ४ ग. सरयूतीरे । ५ ग. रुदमानाऽपि कौशल्या गृहमागात्सुदुःखिता । ६ ग. °तः । सस्त्रीकः सानुजो रामः शृ° । ७ क. ङ. च. °त्रौ ददतु° । ८ ग. प्रातःकालेऽथ । ९ क. ङ. च. °वा च जा° । १० ग. °श्च ययुस्तीर्णाः प्र° । घ. °श्च तीर्णा आपुः प्र° । ११ घ. ग. ततः । १२ क. ङ. च. °वः । एकाक्षेणैव श° । १३ क. घ. °शल्यां स कथां पौर्वा । १४ क. सरयूतीरे । १५ क. ङ. च. °दत्तः कुमा° । १६ क. ङ. च. °ष्यामि त्वं च । १७ क. ङ. च. °थ वा राममुक्तो रा° । १८ ख. घ. मृतः । १९ ख. घ. चाब्रवीत् । २० क. गतो । २१ क. ङ. च. °वेरप्र° ।

नमस्कृत्य भरद्वाजं रामं लक्ष्मणमागतः । पिता स्वर्गं गतो राम अयोध्यायां नृपो भव ॥ ४८
(*अहं वनं प्रयास्यामि त्वदादेशप्रतीक्षकः) । रामः श्रुत्वा जलं दत्त्वा गृहीत्वा[1]पादुके व्रज॥४९
राज्यायाहं न यास्यामि सत्याच्चीरजटाधरः । रामोक्तो भरतश्चागान्नन्दिग्रामे स्थितो बली ॥ ५०
त्यक्त्वाऽयोध्यां पादुके ते पूज्य राज्यं प्रपालयत् ॥ ५१

इत्यादिमहापुराण आग्नेये रामाख्यानेऽयोध्याकाण्डे षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४६

---

अथ सप्तमोऽध्यायः ।

---

रामायणेऽरण्यकाण्डवर्णनम् ।

नारद उवाच—

रामो वसिष्ठं मातॄश्च नत्वाऽत्रिं च प्रणम्य सः । अनसूयां च तत्पत्नीं शरभङ्गं सुतीक्ष्णकम् ॥१
अगस्त्यभ्रातरं नत्वा अगस्त्यं तत्प्रसादतः । धनुः खड्गं च संप्राप्य दण्डकारण्यमागतः ॥ २
जनस्थाने पञ्चवट्यां स्थितो गोदावरीतटे । तत्र शूर्पणखाऽऽयाता भक्षितुं तान्भयंकरी ॥ ३
रामं सुरूपं दृष्ट्वा सा कामिनी वाक्यमब्रवीत् ॥ ४

शूर्पणखोवाच—

कस्त्वं कस्मात्समायातो भर्ता मे भव चार्थितः । एतौ च भक्षयिष्यामि इत्युक्त्वाऽसौ समुद्यता५
तस्या नासां च कर्णौ च रामोक्तो लक्ष्मणोऽच्छिनत् । रक्तं क्षरन्ती प्रययौ खरं भ्रातरमब्रवीत्॥६
मरिष्यामि विनासाऽहं खर जीवामि वै तदा । रामस्य जाया सीताऽस्ति तस्याऽऽसील्लक्ष्मणोऽनुजः७
तेषां यद्रुधिरं कोष्णं पाययिष्यसि मां यदि । खरस्तथेति तामुक्त्वा चतुर्दशसहस्रकैः ॥ ८
रक्षसां दूषणेनागादथ त्रिशिरसा सह । रामं, रामोऽपि युयुधे शरैर्विव्याध राक्षसान् ॥ ९
हस्त्यश्वरथपादातं बलं निन्ये यमक्षयम् । त्रिशीर्षाणं खरं रौद्रं युध्यन्तं चैव दूषणम् ॥ १०
ययौ शूर्पणखा लङ्कां रावणाग्रेऽपतद्भुवि । अब्रवीद्रावणं क्रुद्धा न त्वं राजा च रक्षकः ॥ ११
खरादिहन्तू रामस्य सीतां भार्यां हरस्व च । रामलक्ष्मणरक्तस्य पानाज्जीवामि नान्यथा ॥ १२
तथेत्याह च तच्छ्रुत्वा मारीचं प्राह वै व्रज । स्वर्णचित्रमृगो भूत्वा रामलक्ष्मणकर्षकः ॥ १३
सीताग्रे तां हरिष्यामि अन्यथा मरणं तव । मारीचो रावणं प्राह रामो मृत्युर्धनुर्धरः ॥ १४
रावणादपि मर्तव्यं मर्तव्यं राघवादपि । अवश्यं यदि मर्तव्यं वरं रामो न रावणः ॥ १५
इति मत्वा मृगो भूत्वा सीताग्रे व्यचरन्मुहुः । सीतया प्रेरितो रामः शरेणाथावधीच्च तम् ॥१६
म्रियमाणो मृगः प्राह हा सीते लक्ष्मणेति च । सौमित्रिः सीतयोक्तोऽथ विरुद्धं राममागतः१७

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. च पुस्तकेषु नास्ति ।

---

१ ग. °प्ररक्ष° । २ ग. सत्यं चीर° । ३ ख. ग. घ. °श्चायान्न° । ४ ख. ग. घ राज्यमपा° । ५ क. गं. तत्प्रमाणतः । ६ क. ग. घ. °क्त्वा तं स° । च. °क्त्वाऽन्तं स° । ७ ख. ग. घ. भार्या सीताऽसौ । ८ च. °जा न

रावणोऽप्यहरत्सीतां हत्वा गृध्रं जटायुषम् । जटायुषा स विरथो[1] अंसमादाय[2] जानकीम् ॥ १८
गतो लङ्कामशोकाख्ये धारयामास चाब्रवीत् ॥ १९

रावण उवाच—

भव भार्या ममाग्र्या त्वं, राक्षस्यो[3] रक्ष्यतामियम् । रामो हत्वाऽथ मारीचं दृष्ट्वा लक्ष्मणमब्रवीत्

श्रीराम उवाच—

मायामृगोऽसौ सौमित्रे यथा त्वमिह चाऽऽगतः । तथा सीता हृता नूनं नापश्यत्स गतोऽथ ताम्
शुशोच विललापाऽऽर्तो मां त्यक्त्वा क्व गताऽसि वै । लक्ष्मणाश्वासितो रामो मार्गयामास जानकीम्
दृष्ट्वा जटायुस्तं[4] प्राह रावणो हृतवांश्च ताम् । मृतोऽथ संस्कृतस्तेन कबन्धं चावधीत्ततः ॥ २३
शापमुक्तोऽब्रवीद्रामं स त्वं सुग्रीवमाव्रज ॥ २४

इत्यादिमहापुराण आग्नेये रामायणेऽरण्यकाण्डे सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६९

---

अथाष्टमोऽध्यायः ।

---

## रामायणे किष्किन्धाकाण्डम् ।

नारद उवाच—

रामः पम्पासरो गत्वाऽशोचत्स शबरीं गतः । हनूमताऽथ सुग्रीवं नीतो मित्रं चकार ह ॥ १
सप्ततालान्विनिर्भिद्य शरेणैकेन पश्यतः । पादेन दुन्दुभेः कायं चिक्षेप दशयोजनम् ॥ २
तद्रिपुं वालिनं हत्वा भ्रातरं वैरकारिणम् । किष्किन्धां कपिराज्यं च रुमां तारां समर्पयत् ॥ ३
ऋष्यमूके हरीशाय, किष्किन्धेशोऽब्रवीदथ । सीतां त्वं प्राप्स्यसे यद्वत्तथा राम करोमि ते ॥ ४
तच्छ्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार सः । किष्किन्धायां च सुग्रीवो यदा नाऽऽयाति दर्शनम्
तदाऽब्रवीत्तं रामोक्तो[5] लक्ष्मणो व्रज राघवम् । न च संकुचितः पन्था येन वाली[6] हतो गतः ॥ ६
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः । सुग्रीव आह संसक्तो गतं कालं न बुद्धवान् ॥ ७
इत्युक्त्वा स गतो रामं नत्वोवाच हरीश्वरः ॥ ८

सुग्रीव उवाच—

आनीता वानराः सर्वे सीतायाश्च गवेषणे । त्वन्मताः[7] प्रेषयिष्यामि विचिन्वन्तु च जानकीम् ९
पूर्वादौ मासपर्यन्तं मासादूर्ध्वं निहन्मि तान् । इत्युक्ता वानराः पूर्वपश्चिमोत्तरमार्गगाः ॥ १०
जग्मू रामं ससुग्रीवमपश्यन्तस्तु जानकीम्(?) । रामाङ्गुलीयं संगृह्य हनूमान्वानरैः सह ॥ ११
दक्षिणे मार्गयामास सुप्रभाया गुहान्तिके[9] । मासादूर्ध्वं च विन्ध्यस्था[10] अपश्यन्तस्तु जानकीम् ॥
ऊचुर्वृथा मरिष्यामो जटायुर्धन्य एव सः । सीतार्थे योऽत्यजत्प्राणान्रावणेन हतो रणे ॥ १३
तच्छ्रुत्वा प्राह संपातिर्विहाय कपिभक्षणम् । भ्राताऽसौ मे जटायुर्वै मयोड्डीनोऽर्कमण्डलम् ॥ १४
अर्कतापाद्रक्षितोऽगाद्दग्धपक्षो[11]ऽहमत्रगः[12] । रामवार्ताश्रवात्पक्षौ जातौ भूयोऽथ जानकीम् ॥ १५

---

१ ख- ग. भिन्नाङ्गो । २ क. अङ्कमादाय । ख. अंसेनाऽऽदाय । ग. अङ्केनाऽऽदाय । घ. अङ्केनाऽऽदाय । ३ क. °स्यो भक्ष्य° । ४ क. °टायुः संप्रा° । ५ ग. रामोक्तं । ६ क. वालिर्हतो । ७ घ. °न्मतात्प्रेष° । ८ घ. ङ. च. °समायान्तु मा° । ९ क. ङ. च. गुहादिके । १० घ. विन्यस्ता । ११ च. °क्षोऽयम° । १२ घ. °हमभ्रगः ।

पश्याम्यशोकवनिकागतां लङ्कागतां किल । शतयोजनविस्तीर्णे लवणाब्धौ त्रिकूटके ॥ १६
ज्ञात्वा, रामं ससुग्रीवं वानराः कथयन्तु वै ॥ १७

इत्यादिमहापुराण आग्नेये रामायणे किष्किन्धाकाण्डेऽष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८६

---

अथ नवमोऽध्यायः ।

---

रामायणे सुन्दरकाण्डम् ।

नारद उवाच—

संपातिवचनं श्रुत्वा हनूमानङ्गदादयः । अब्धिं दृष्ट्वाऽब्रुवंस्तेऽब्धिं लङ्घयेत्को नु[1] जीवयेत् ॥ १
कपीनां जीवनार्थाय रामकार्यप्रसिद्धये । शतयोजनविस्तीर्णं पुप्लुवेऽब्धिं स मारुतिः ॥ २
[2]दृष्ट्योत्थितं च मैनाकं सिंहिकां विनिपात्य च । लङ्कां दृष्ट्वा राक्षसानां गृहाणि, वनितागृहे ॥३
दशग्रीवस्य कुम्भस्य कुम्भकर्णस्य रक्षसः । विभीषणस्येन्द्रजितो गृहे[3]ऽन्येषां च रक्षसाम् ॥ ४
नापश्यत्पानभूम्यादौ सीतां चिन्तापरायणः । अशोकवनिकां गत्वा दृष्ट्वा[*शिंशपातले ॥५
राक्षसीरक्षितां सीतां, भव भार्येतिवादिनम् । रावणं शिंशपास्थोऽथ नेति सीतां सुवादिनीम्]
भव भार्या रावणस्य राक्षसीर्वादिनीः कपिः । गते तु रावणे प्राह राजा दशरथोऽभवत् ॥ ७
रामोऽस्य लक्ष्मणः पुत्रौ वनवा[4]सं गतौ वरौ । रामपत्नी जानकी त्वं रावणेन हृता बलात् ॥८
रामः सुग्रीवमित्रस्त्वां मार्ग[5]यन्प्रैषयच्च माम् । साभिज्ञानं चाङ्गुलीयं रामदत्तं गृहाण वै ॥ ९
सीताऽङ्गुलीयं जग्राह साऽपश्यन्मारुतिं त[6]रौ । भूयोऽग्रे चोपविष्टं तमुवाच यदि जीवति ॥ १०
रामः कथं न नयति शङ्कितामब्रवीत्कपिः ॥ ११

हनूमानुवाच—

रामः सीते न जा[7]नाति ज्ञात्वा त्वां स नयिष्यति । रावणं राक्षसं हत्वा सबलं देवि मा शुचः
साभिज्ञानं देहि मे त्वं मणिं सीताऽददात्क[8]पौ । उवाच मां यथा रामो नयेच्छीघ्रं तथा कुरु १३
*काकाक्षिपातनकथां प्रातर्याहि हि शोकहा । मणिं कथां गृहीत्वाऽऽह हनूमा[10]न्नेष्यते पतिः॥१४
अथवा ते त्वरा काचित्पृष्ठमारुह मे शुभे । अद्य त्वां दर्शयिष्यामि ससुग्रीवं च राघवम् ॥ १५
सीताऽब्रवीद्धनूमन्तं नयतां मां हि राघवः । हनूमान्स दशग्रीवदर्शनोपायमाकरोत् ॥ १६
वनं बभञ्ज तत्पाला[11]न्हत्वा दन्तनखादिभिः । हत्वा तु किंकरान्सर्वान्सप्त मन्त्रिसुतानपि ॥ १७
पु[12]त्रमक्षं कुमारं च शक्रजिच्च बबन्ध तम् । नागपाशेन पिङ्गाक्षं दर्शयामास रावणम् ॥ १८
उवाच रावणः कस्त्वं मारुतिः प्राह रावणम् ॥ १९

---

* ङ. संज्ञिते पुस्तके धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति । * काकाक्षिपातनकथारूप प्रत्यभिज्ञानं गृहीत्वा त्वं प्रातर्याहि, त्वं मच्छोकहाऽसीत्यर्थः ।

---

१ ग. ङ. न । २ क. ङ च. दृष्ट्वा स्थितं । ३ ङ. °हे तेषां । ४ क. ङ. च. °वासग° । ५ ङ. °र्गयेत्प्रेषयेच्च । ६ ङ. कपिम् । ७ ख. ग. घ. ङ. च. जानीते । ८ ङ. °त्कपेः । उ° । ९ घ. °थां प्रतियाहि हि शोकह । म° । १० क. ख. ग. ङ. च. °मानेष्य° । ११ क. ख. ङ. च. °ला हता द° । १२ क. च. °त्रमक्षक° । ख. ग. °त्रमक्षकु° । ङ. °त्रमुख्यं कु° ।

हनूमानुवाच—

रामदूतो राघवाय सीतां देहि मरिष्यसि । रामबाणैर्हतः सार्धं लङ्कास्थै राक्षसैर्ध्रुवम् ॥ २०
रावणो हन्तुमुद्युक्तो विभीषणनिवारितः । दीपयामास लाङ्गूलं दीप्तपुच्छः स मारुतिः ॥ २१
दग्ध्वा लङ्कां राक्षसानां दृष्ट्वा सीतां प्रणम्य ताम् । समुद्रपारमागम्य दृष्टा सीतेति चाब्रवीत् ॥
अङ्गदादीन्, अङ्गदाद्यैः पीत्वा मधुवने मधु । जित्वा दधिमुखादींश्च दृष्ट्वा रामं च तेऽब्रुवन् २३
दृष्टा सीतेति रामोऽपि हृष्टः पप्रच्छ मारुतिम् ॥ २४

श्रीराम उवाच—

कथं दृष्टा त्वया सीता किमुवाच च मां प्रति । सीताकथामृतेनैव सिञ्च मां कामवह्निगम् ॥ २५

नारद उवाच—

हनूमानब्रवीद्रामं लङ्घयित्वाऽब्धिमागतः । सीतां दृष्ट्वा पुरीं दग्ध्वा सीतामणिं गृहाण वै ॥२६
हत्वा तं रावणं सीतां प्राप्स्यसे राम मा शुचः । गृहीत्वा तं मणिं रामो रुरोद विरहातुरः॥२७
मणिं दृष्ट्वा जानकी मे दृष्टा, सीतां नयस्व माम्। तया विना न जीवामि, सुग्रीवाद्यैः प्रबोधितः ॥
समुद्रतीरं गतवांस्तत्र रामं विभीषणः । गतस्तिरस्कृतो भ्रात्रा रावणेन दुरात्मना ॥ २९
रामाय देहि सीतां त्वमित्युक्तेनासहायवान् । रामो विभीषणं मित्रं लङ्कैश्वर्येऽभ्यषेचयत् ॥३०
समुद्रं प्रार्थयन्मार्गं यदा नादात्तदा शरैः । भेदयामास, रामं च उवाचाब्धिः समागतः ॥ ३१

समुद्र उवाच—

नलेन सेतुं बद्ध्वाऽब्धौ लङ्कां व्रज, गभीरकः। अहं त्वया कृतः पूर्वं, रामोऽपि नलसेतुना ३२
कृतेन तरुशैलाद्यैर्गतः पारं महोदधेः । वानरैः स सुवेलस्थः सह लङ्कां ददर्श वै ॥ ३३

इत्यादिमहापुराण आग्नेये रामायणे सुन्दरकाण्डे नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१९

---

अथ दशमोऽध्यायः ।

---

## रामायणे युद्धकाण्डम् ।

नारद उवाच—

रामोक्तश्चाङ्गदो गत्वा रावणं प्राह जानकी । दीयतां राघवायाऽऽशु अन्यथा त्वं मरिष्यसि १
रावणो हन्तुमुद्युक्तः[३] स आगाद्धतराक्षसः । रामायाऽऽह दशग्रीवो युद्धमेकं तु मन्यते ॥ २
रामो युद्धाय तच्छ्रुत्वा लङ्कां सकपिराययौ । वानरा[४] हनुमान्मैन्दो द्विविदो जाम्बवान्नलः ॥ ३
नीलस्तारोऽङ्गदो धूम्रो सुषेणः केसरी[५] गजः । पनसो[६] विनतो रम्भः शरभः[७] कम्पनो[८] बली ॥४
गवाक्षो दधिवक्त्रश्च गवयो[९] गन्धमादनः । एते[१०] चान्ये च सुग्रीव एतैर्युक्तो ह्यसंख्यकैः ॥ ५
[ * रक्षसां वानराणां च युद्धं संकुलमाबभौ । राक्षसा वानराञ्जघ्नुः शरशक्तिगदादिभिः ॥]६

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थो ङ. पुस्तके नास्ति ।

---

१ ख. ग. घ. राक्षसांश्च । २ क. ख. घ. ङ. च. शुच । ३ घ. °क्तः सङ्ग्रामोद्ध° । ४ घ. ङ. वानरो । ५ ख. घ. च. केशरी । ७ क. पिनसो । ७ क. सरभः । ८ ख. ग. घ. ङ. क्रथनो । ९ क. शरया । १० क. पप्रे ।

वानरा राक्षसाञ्जघ्नुर्नखदन्तशिलादिभिः । हस्त्यश्वरथपादातं राक्षसानां बलं हतम् ॥ ७
हनूमान्गिरिशृङ्गेण धूम्राक्षमवधीद्रिपुम् । [1]अकम्पनं प्रहस्तं च युध्यन्तं नील आवधीत् ॥ ८
इन्द्रजिच्छरबन्धाच्च विमुक्तौ रामलक्ष्मणौ । तार्क्ष्यसंदर्शनाद्बाणैर्जघ्नतू राक्षसं बलम् ॥ ९
रामः शरैर्जर्जरितं रावणं चाकरोद्रणे । रावणः कुम्भकर्णं च बोधयामास दुःखितः ॥ १०
कुम्भकर्णः प्रबुद्धोऽथ पीत्वा घटसहस्रकम् । मद्यस्य महिषादीनां+ भक्षयित्वाऽऽह रावणम् ११

कुम्भकर्ण उवाच—

सीताया हरणं पापं कृतं, त्वं हि गुरुर्यतः । अतो गच्छामि युद्धाय रामं हन्मि सवानरम् ॥१२

नारद उवाच—

इत्युक्त्वा वानरान्सर्वान्कुम्भकर्णो ममर्द ह । गृहीतस्तेन सुग्रीवः कर्णनासं चकर्त सः ॥ १३
कर्णनासाविहीनोऽसौ भक्षयामास वानरान् । रामोऽथ कुम्भकर्णस्य बाहू चिच्छेद सायकैः१४
ततः पादौ ततश्छित्त्वा शिरो भूमौ न्यपातयत् । अथ कुम्भो निकुम्भश्च मकराक्षश्च राक्षसः१५
महोदरमहापार्श्वौ मत्त उन्मत्तराक्षसः । प्रघसो भासकर्णश्च विरूपाक्षश्च [2]संगरे ॥ १६
देवान्तको नरान्तश्च त्रिशिराश्चातिकायकः । रामेण लक्ष्मणेनैते वानरैः सविभीषणैः ॥ १७
युध्यमानास्तथा त्वन्ये राक्षसा भुवि पातिताः । इन्द्रजिन्मायया युध्यन्रामादीन्स बबन्ध ह १८
वरदत्तैर्नाग[3]पाशैरोषध्या तौ विशल्यकौ । [4]विशल्ययाऽव्रणौ कृत्वा मारुत्यानीतपर्वते ॥ १९
हनूमान्धारयामास [5]तत्रागं यत्र संस्थितः । निकुम्भिलायां होमादि[6] कुर्वन्तं तं हि लक्ष्मणः ॥२०
शरैरिन्द्रजितं [7]वीरं [8]युद्धे तं तु [9]व्यपातयत् । रावणः शोकसंतप्तः [10]सीतां हन्तुं समुद्यतः ॥ २१
*[11]अविन्ध्यवारितो राजा रथस्थः सबलो ययौ । इन्द्रोक्तो मातली रामं रथस्थं प्रचकार तम्२२
रामरावणयोर्युद्धं रामरावणयोरिव । रावणो वानरान्हन्ति मारुत्याद्याश्च रावणम् ॥ २३
रामः शस्त्रैस्तमस्त्रैश्च ववर्ष जलदो यथा । तस्य ध्वजं स चिच्छेद रथमश्वांश्च सारथिम् ॥ २४
धनुर्बाहूञ्शिरांस्येव उत्तिष्ठन्ति शिरांसि हि । पैतामहेन हृदयं भित्त्वा रामेण रावणः ॥ २५
भूतले पातितः सर्वै राक्षसै रुरुदुः स्त्रियः । आश्वास्य तं च संस्कृत्य रामाज्ञप्तो विभीषणः २६
हनूमताऽऽनयद्रामः सीतां [12]शुद्धां गृहीतवान् । रामो वह्नौ प्रविष्टां तां शुद्धामिन्द्रादि[13]भिः स्तुतः
ब्रह्मणा दशरथेन, त्वं [14]विष्णू राक्षसमर्दनः । [15]इन्द्रोऽर्थितोऽ[16]मृतवृष्ट्या जीवयामास वानरान्॥२८
रामेण पूजिता जग्मुर्युद्धं दृष्ट्वा दिवं च ते । रामो विभीषणायादाल्लङ्कामभ्यर्च्य वानरान् ॥२९
ससीतः पुष्पके स्थित्वा +गतमार्गेण वै गतः । दर्शयन्वनदुर्गाणि सीतायै हृष्टमानसः ॥ ३०

---

+ अर्थपूरणायात्र “ सहस्रकं च ” इत्यध्याहर्तव्यम् । * सुहृन्निवारित इति घ. पुस्तकटिप्पणस्थः पाठः । + घ. पुस्तकस्थटिप्पण्यां ‘ स्वर्गमार्गेण वै गतः ’ इति पाठो वर्तते ।

---

१ ङ. अकल्पनं । २ घ. संयुगे । ३ ग. घ च. °गबाणैरो° । ४ क. च. विशल्यया वर्णकृतौ मा° । ख. ग. विशल्यया वर्णकृता मा° । ङ. विशिल्यादाय वर्णतो मा° । ५ क. ङ. च तद्रागं यत्र संस्थितम् । ख. ग. तद्रामं यत्र संस्थितम् । ६ ङ. °दि कर्तु हर्तु समुद्य° । ७ ग. वीर्यं । ८ च. °द्धे युद्धे व्य° । ९ ख. घ. व्यशातयत् । १० क. च. °तां तां हन्तुमु° । ११ ग. अवन्ध्य° । १२ ङ. शुद्धिं । १३ च. °भिस्ततः । १४ क. ङ. विष्णुना राक्षसार्दन । इ° । १५ ख. ग. घ. °न्द्रोऽर्चितो । १६ क. ख. ङ. च. °मृतं वृ° ।

भरद्वाजं नमस्कृत्य नन्दिग्रामं समागतः । भरतेन[1] नतश्चागादयोध्यां तत्र संस्थितः ॥ ३१
वसिष्ठादीन्नमस्कृत्य कौशल्यां चैव कैकयीम् । सुमित्रां प्राप्तराज्योऽथ[*द्विजादीन्सोऽभ्यपूजयत्
वासुदेवं[2] स्वमात्मानमश्वमेधैरथायजत् । सर्वदानानि स ददौ, पालयामास स प्रजाः ॥ ३३
पुत्रवद्धर्मकामादीन्] दुष्टनिग्रहणे रतः । सर्वो धर्मपरो लोकः सर्वसस्या च मेदिनी ॥ ३४
नाकालमरणं चाऽऽसीद्रामे राज्यं प्रशासति ॥ ३५

इत्यादिमहापुराण आग्नेये रामायणे युद्धकाण्डे दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५४

---

अथैकादशोऽध्यायः ।

---

रामायण उत्तरकाण्डम् ।

नारद उवाच—

राज्यस्थं राघवं जग्मुरगस्त्याद्याः सुपूजिताः ॥ १

ऋषय ऊचुः—

धन्यस्त्वं विजयी यस्मादिन्द्रजिद्विनिपातितः । ब्रह्मात्मजः पुलस्त्योऽभूद्विश्रवास्तस्य कैकसी २
+पुष्पोत्कटाऽभूत्प्रथमा तत्पुत्रोऽभूद्धनेश्वरः । कैकस्यां रावणो जज्ञे विंशद्बाहुर्दशाननः ॥ ३
तपसा ब्रह्मदत्तेन वरेण जितदैवतः । कुम्भकर्णः सनिद्रोऽभूद्धर्मिष्ठोऽभूद्विभीषणः ॥ ४
स्वसा शूर्पणखा तेषां, रावणान्मेघनादकः । इन्द्रं जित्वेन्द्रजिच्चाभूद्रावणादधिको बली ॥ ५
[3]हतस्त्वया लक्ष्मणेन देवादेः क्षेममिच्छता ॥ ६

नारद उवाच—

इत्युक्त्वा ते गता विप्रा अगस्त्याद्या नमस्कृताः । देवप्रार्थितरामोक्तः शत्रुघ्नो लवणार्दनः॥ ७
अभूत्पूर्मथुरा[4] काचिद्रामोक्तो भरतोऽवधीत् । कोटित्रयं च शैलूषपुत्राणां निशितैः शरैः ॥ ८
शैलूषं दृप्तगन्धर्वं[5] सिन्धुतीरनिवासिनम् । तक्षं च पुष्करं पुत्रं स्थापयित्वाऽथ देशयोः ॥ ९
भरतोऽगात्सशत्रुघ्नो राघवं पूजयन्स्थितः । रामो दुष्टान्निहत्याऽऽजौ शिष्टान्संपाल्य [6]दानतः ॥
पुत्रौ कुशलवौ जातौ वाल्मीकेराश्रमे वरौ । लोकापवादात्त्यक्तायां ज्ञातौ सुचरितश्रवात् ॥ ११
राज्येऽभिषिच्य ब्रह्माहमस्मीतिध्यानतत्परः । दश वर्षसहस्राणि दश वर्षशतानि च ॥ १२
राज्यं कृ[7]त्वा क्रतून्कृत्वा स्व[8]र्गं देवा[9]र्थितो ययौ । सपौरः सानुजः, सीतापुत्रो जनपदा[10]न्वितः*॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । + पौलस्त्यस्य विश्रवसो द्वे भार्ये, एका कैकसी, अन्या पुष्पोत्कटा, तयोः पुष्पोत्कटा प्रथमा, तस्यां कुबेरोऽजीजनदन्यस्यां रावणादय इत्ययमस्य श्लोकस्यार्थः । * राज्यं चकारेति शेषोऽर्थः ।

---

१ क. ङ. च. °न गत° । २ क. °वं मुखात्मा° । च. °वं युध्यमान° । ३ क. हतः स्वयं ल° । च. हतस्त्वयं ल° । ४ क. °रा काशी रामो° । ङ. च. °राकारा रामो । ५ घ. च. दुष्टगन्धर्वं । ६ ख. ग. घ. मानवः । च. दानदः । ७ क. च. दत्त्वा । ८ ङ. स्वर्गे । ९ घ. ङ. च. देवार्चितो । १० क. ङ. च. °दास्थितः ।

अग्निरुवाच—

वाल्मीकिर्नारदाच्छ्रुत्वा रामायणमकारयत् । सविस्तरं, य एतच्च शृणुयात्स दिवं व्रजेत् ॥ १४

इत्यादिमहापुराण आग्नेये रामायण उत्तरकाण्ड एकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६८

---

अथ द्वादशोऽध्यायः ।

---

## कृष्णावतारकथावर्णनम् ।

अग्निरुवाच—

हरिवंशं प्रवक्ष्यामि विष्णुनाभ्यम्बुजादजः* । ब्रह्मणोऽत्रिस्ततः सोमः सोमाज्जातः पुरूरवाः १
तस्मादायुरभूत्तस्मान्नहुषोऽतो ययातिकः । यदुं च तुर्वसुं तस्माद्देवयानी व्यजायत ॥ २
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी । यदोः कुले यादवाश्च वासुदेवस्तदुत्तमः ॥ ३
भुवो भारावतारार्थं देवक्यां वसुदेवतः । हिरण्यकशिपोः पुत्राः षड्गर्भा योगनिद्रया ॥ ४
विष्णुप्रयुक्तया नीता देवकीजठरं पुरा । अभूच्च सप्तमो गर्भो देवक्या जठराद्बलः ॥ ५
संक्रामितोऽभूद्रोहिण्यां रौहिणेयस्ततो हरिः । कृष्णाष्टम्यां च नभसि अर्धरात्रे चतुर्भुजः ॥ ६
देवक्या वसुदेवेन स्तुतो बालो द्विबाहुकः । वसुदेवः कंसभयाद्यशोदाशयनेऽनयत् ॥ ७
यशोदाबालिकां गृह्य देवकीशयनेऽनयत् । कंसो बालध्वनिं श्रुत्वा तां चिक्षेप शिलातले ॥ ८
वारितोऽपि स देवक्[1]या मृत्युर्गर्भोऽष्टमो मम । श्रुत्वाऽशरीरिणीं वा[2]चमतो गर्भास्तु मारिता[3]ः ॥ ९
सा क्षिप्ता बालिका कंसमाकाशस्थाऽब्रवीदिदम् । १०

बालिकोवाच—

किं मया क्षिप्तया कंस जातो यस्त्वां वधिष्यति । सर्वस्वभूतो देवानां भू[4]र्भारहरणाय सः ॥ ११

अग्निरुवाच—

इत्युक्त्वा सा च शुम्भादीन्हत्वा इन्द्रेण च स्तुता । आर्या दुर्गा दे[5]वगर्भा अम्बिका भद्रकाल्यपि
भद्रा क्षेम्या क्षेमकरी नैकबाहुर्नमामि ताम् । त्रिसंध्यं यः पठेन्नाम सर्वान्कामा[6]न्स चाऽऽप्नुयात् ॥
कंसोऽपि पूतनादीं[7]श्च प्रैषयद्बालनाशने । यशोदापतिनन्दाय वसुदेवेन चार्पितौ ॥ १४
रक्षणाय च कंसादेर्भीतेनैव हि गोकुले । रामकृष्णौ चेरतुस्तौ गोभिर्गोपालकैः सह ॥ १५
सर्वस्य जगतः पालौ गोपालौ तौ बभूवतुः । कृष्णश्चोलूखले बद्धो दाम्ना व्यग्रयशोदया ॥ १६
यमलार्जुनमध्येऽगाद्भग्नौ च यमलार्जुनौ । परिवृत्तश्च शकटः पादक्षेपात्स्तनार्थिना ॥ १७
पूतना स्तनपानेन सा हता हन्तुमुद्यता । वृन्दावनगतः कृष्णः कालियं यमुनाह्रदात् ॥ १८
जित्वा निःसार्य चाब्धिस्थं चकार बलसंस्तुतः । क्षेमं तालवनं चक्रे हत्वा धेनुकगर्दभम् ॥ १९
अरिष्टवृषभं हत्वा केशिनं हयरूपिणम् । शक्रोत्सवं परित्यज्य कारितो गोत्रयज्ञकः ॥ २०

---

* अजीजनदिति शेषः ।

---

१ ग. °क्या विवाहसमयेरितः । सा । २ घ. वाचं मत्तो ग° । ३ घ. °ताः । समर्पितास्तु देवक्या विवाहसमयेरिताः । सा । ४ क. °भाराह° । ५ ख. घ. वेदगर्भा । ६ ख. ग. घ. °मानवाप्नुया° । ७ घ. °दींश्चाप्रे° ।

( कृष्णावतारकथावर्णनम् )

पर्वतं धारयित्वा च शक्राद्वृष्टिर्निवारिता । [1]नमस्कृतो महेन्द्रेण [2]गोविन्दोऽथार्जुनोऽर्पितः ॥ २१
इन्द्रोत्सवस्तु तुष्टेन भूयः कृष्णेन कारितः । रथस्थो मथुरां चागात्कंसोक्ताक्रूरसंस्तुतः ॥ २२
गोपीभिरनुरक्ताभिः क्रीडिताभिर्निरीक्षितः । रजकं *चाप्रयच्छन्तं हत्वा वस्त्राणि[3] सोऽग्रहीत्॥
सह रामेण माला[4]भृन्मालाकारे वरं ददौ । दत्तानुलेपनां कुब्जामृजुं चक्रे[6]ऽहनद्गजम् ॥ २४
मत्तं कुवलयापीडं द्वारि रङ्गं[5] प्रविश्य च । कंसादीनां पश्यतां च मञ्च[7]स्थाने नियुद्धकम् ॥ २५
चक्रे चाणूरमल्लेन मुष्टिकेन बलोऽकरोत् । चाणूरमुष्टिकौ ताभ्यां हतौ मल्लौ तथाऽपरे ॥ २६
मथुराधिपतिं कंसं हत्वा तत्पितरं हरिः । चक्रे यादवराजानमस्तिप्राप्ती च कंसगे ॥ २७
जरासंधस्य ते पुत्र्यौ, जरासंधस्तदीरितः । चक्रे स मथुरारोधं यादवैर्युयुधे शरैः ॥ २८
रामकृष्णौ च मथुरां त्यक्त्वा गोमन्तमागतौ । जरासंधं विजित्याऽऽजौ पौण्ड्रकं वासुदेवकम् ॥
पुरीं तु द्वारकां कृत्वा न्यवसद्यादवैर्वृतः । भौमं तु नरकं हत्वा तेनाऽऽनीताश्च कन्यकाः ॥ ३०
देवगन्धर्वयक्षाणां ता उवाह जनार्दनः । षोडशस्त्रीसहस्राणि रुक्मिण्याद्यास्तथाऽष्ट च ॥ ३१
सत्यभामासमायुक्तो गरुडे नरकार्दनः । मणिशैलं सरत्नं च इन्द्रं जित्वा हरिर्दिवि ॥ ३२
पारिजातं समानीय सत्यभामागृहेऽकरोत् । सांदीपने[9]श्च शस्त्रास्त्रं[10] ज्ञात्वा तद्बालकं ददौ ॥ ३३
जित्वा पञ्चजनं दैत्यं यमेन च सुपूजितः । अवधीत्कालयवनं मुचुकुन्देन पूजितः ॥ ३४
वसुदेवं देवकीं च भक्त[11]विप्रांश्च सोऽर्चयत् । रेवत्यां बलभद्राच्च जज्ञाते[12] निषधोल्मुकौ[13] ॥ ३५
कृष्णा[14]त्साम्बो जाम्बवत्यामन्यास्वन्येऽभवन्सुताः । प्रद्युम्नोऽभूच्च रुक्मिण्यां षष्ठेऽह्नि स हृतो बलात्
शम्बरेणाम्बुधौ क्षिप्तो मत्स्यो जग्राह, धीवरः। तं मत्स्यं शम्बरायादान्मायावत्यै च शम्बरः ॥ ३७
मायावती मत्स्यमध्ये दृष्ट्वा स्वं पतिमादरात् । पुपोष सा तं[15] चोवाच रतिस्तेऽहं पतिर्मम ॥ ३८
[*कामस्त्वं शम्भुनाऽनङ्गः कृतोऽहं शम्बरेण च । हृता, न तस्य पत्नी, त्वं मायाज्ञः शम्बरं जहि
तच्छ्रुत्वा शम्बरं हत्वा प्रद्युम्नः सह भार्यया । ] मायावत्या ययौ कृष्णं कृष्णो हृष्टोऽथ रुक्मिणी
प्रद्युम्नादनिरुद्धोऽभूदुषापतिरुदारधीः । बाणो बलिसुतस्तस्य सुतोषा शोणितं पुरम् ॥ ४१
तपसा शिवपुत्रोऽभू[16]न्मयूरध्वजपाततः । युद्धं प्राप्स्यसि बाण त्वं बाणं तुष्टः शिवोऽ[17]भ्यधात् ४२
शिवेन क्रीडतीं[18] गौरीं दृष्ट्वोषा[19] सस्पृहा पतौ । तामाह गौरी भर्ता ते निशि स्वप्ने[20] तु दर्शनात् ४३
वैशाखमासद्वादश्यां[21] पुमान्भर्ता भविष्यति । गौर्युक्ता हर्षिता चोषा गृहे सुप्ता ददर्श तत् ॥ ४४
आत्मना संगतं ज्ञात्वा तत्सख्या चित्रलेखया । लिखितात्तै चित्रपटादनिरुद्धं[22] समानयत् ॥ ४५
कृष्णपौत्रं द्वारकातो दुहित्रा बाणमन्त्रिणः । कुम्भाण्डस्यानिरुद्धोऽगाद्रराम ह्युषया सह ॥ ४६

* 'च प्रजल्पन्तं' इति घ. पुस्तकटिप्पणीस्थः पाठः । * धनुश्चिह्नान्तर्गतो ग्रन्थश्चपुस्तके नास्ति ।

१ क. ख. ग. ङ. च. नमस्कृत्य । २ क. ख. ङ. च. गोविन्देऽथा° । ३ ख. घ. ङ. च. °णि चाग्र° । ४ क. ख. ग. ङ. च. °लाभून्मा° । ५ ङ. धनं । ६ क. ङ. च. °क्रे हरिः कुजम् । ७ घ. मञ्चस्थानां । ८ घ. च. । ९ ग. सांदीपिने° । ङ. सांदीपनाच्च । १० च सच्छास्त्रं । ११ ङ. भक्तं वि° । १२ क. ख. घ. यज्ञाते । ग. ङ. यज्ञास्ते । च. यज्ञान्ते । १३ ख. ग. घ. निशठोन्मुकौ । १४ घ. ङ. च. °ष्णाच्छाम्बो । १५ ङ. तं प्रोवा° । १६ ग. घ. ङ. °भून्मायूरध्वजपातितः । १७ क. ख. ग. ङ. च. °भ्ययात् । १८ ङ. क्रीडितां । १९ क. ङ. च. दृष्ट्वा सा स° । २० घ. सुप्तेति । २१ क. घ. ङ. च. °श्यां पुंसो भर्ता । २२ क. ङ. च. °द्धं च साऽऽनय° ।

बाणध्वजस्य संपातो रक्षिभिः स निवेदितः । अनिरुद्धस्य बाणेन युद्धमासीत्सुदारुणम् ॥ ४७
श्रुत्वा तु नारदात्कृष्णः प्रद्युम्नबलभद्रवान् । गरुडस्थोऽथ जित्वाऽग्नीञ्ज्वरं माहेश्वरं तथा ॥४८
हरिशंकरयोर्युद्धं बभूवाथ शराशरि । नन्दिविनायकस्कन्दमुख्यास्तार्क्ष्यादिभिर्जिताः ॥ ४९
जृम्भिते शंकरे सुप्ते जृम्भणास्त्रेण विष्णुना । छिन्नं सहस्रं बाहूनां रुद्रेणाभयमर्थितम् ॥ ५०
विष्णुना जीवितो बाणो द्विबाहुः प्राब्रवीच्छिवम् ॥ ५१

कृष्ण उवाच—

त्वया यदभयं दत्तं बाणस्यास्य मयाऽपि तत् । आवयोर्नास्ति भेदो वै भेदी नरकमाप्नुयात् ॥

अग्निरुवाच—

शिवाद्यैः पूजितो विष्णुः सानिरुद्ध उषादियुक् । द्वारकां तु गतो रेमे उग्रसेनादियादवैः ॥ ५३
अनिरुद्धात्मजो वज्रो मार्कण्डेयात्तु सर्ववित् । बलभद्रः प्रलम्बघ्नो यमुनाकर्षणोऽभवत् ॥ ५४
द्विविदस्य कपेर्भेत्ता कौरवोन्मादनाशनः । हरी रेमेऽनेकमूर्ती रुक्मिण्यादिभिरीश्वरः ॥ ५५
पुत्रानुत्पादयामास त्वसंख्यातान्स यादवान्+ । हरिवंशं पठेद्यस्तु प्राप्तकामो हरिं व्रजेत् ॥ ५६

इत्यादिमहापुराण आग्नेये हरिवंशे द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४

---

अथ त्रयोदशोऽध्यायः ।

---

भारताख्यानम् ।

अग्निरुवाच—

भारतं संप्रवक्ष्यामि कृष्णमाहात्म्यलक्षणम् । भूभारमहरद्विष्णुर्निमित्तीकृत्य पाण्डवान् ॥ १
विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः । सोमः सोमाद्बुधस्तस्मादैल आसीत्पुरूरवाः ॥
तस्मादायुस्ततो राजा नहुषोऽतो ययातिकः । ततः पुरुस्तस्य वंशे भरतोऽथ नृपः कुरुः ॥ ३
तद्वंशे शंतनुस्तस्माद्भीष्मो गङ्गासुतोऽनुजौ । चित्राङ्गदो विचित्रश्च सत्यवत्यां च शंतनोः ॥ ४
स्वर्गं गते शंतनौ च भीष्मो भार्याविवर्जितः । अपालयद्भ्रातृराज्यं बालश्चित्राङ्गदो हतः ॥ ५
*चित्राङ्गदेन, द्वे कन्ये काशिराजस्य चाम्बिका । अम्बालिका च भीष्मेण आनीते विजितारिणा
भार्ये विचित्रवीर्यस्य यक्ष्मणा स दिवं गतः । सत्यवत्या ह्यनुमतादम्बिकायां नृपोऽभवत् ॥ ७
धृतराष्ट्रोऽम्बालिकायां पाण्डुश्च व्यासतः सुतः । गान्धार्यां धृतराष्ट्राच्च दुर्योधनमुखं शतम् ॥ ८
शतशृङ्गाश्रमपदे भार्यायोगादथो +मृतः । ऋषिशापात्ततो धर्मात्कुन्त्यां पाण्डोर्युधिष्ठिरः ॥ ९
वाताद्भीमोऽर्जुनः शक्रान्माद्र्यामश्विकुमारतः । नकुलः सहदेवश्च पाण्डुर्माद्रीयुतो मृतः ॥ १०
कर्णः कुन्त्यां हि कन्यायां जातो दुर्योधनाश्रितः । कुरुपाण्डवयोर्वैरं दैवयोगाद्बभूव ह ॥ ११
दुर्योधनो जतुगृहे पाण्डवानदहत्कुधीः । दग्धागाराद्विनिष्क्रान्ता मातृषष्ठास्तु पाण्डवाः ॥ १२

---

+ स कृष्णो यादवान्पुत्रवत्पालयामासेत्यर्थः । * चित्राङ्गदाख्येन गन्धर्वेण हत इत्यर्थः । + पाण्डुर्मृत इत्यर्थः ।

---

१ क. ङ. च. नन्दी विनायकः स्कन्दमुखास्ता° । २ क. ख. घ. च नष्टे । ३ क. ङ. च. °यसंनिभम् । ४ क. ख. ग. ङ. च. °तो ध्वजौ । ५ ख. °त्याऽभ्यनु° । ६ क. °गायतो मृ° । ख. ग. °गाच्च तन्मृतिः । ऋ° । ७ क. ङ. च. °द्रीसुतो नृपः । क° ।

ततस्त एकचक्रायां ब्राह्मणस्य निवेशने । मुनिवेषाः स्थिताः सर्वे निहत्य बकराक्षसम् ॥ १३
ययुः पाञ्चालविषयं द्रौपद्यास्ते स्वयंवरे । संप्राप्ता बहुवेषेण द्रौपदी पञ्चपाण्डवैः ॥ १४
अर्धराज्यं पुनः प्राप्ता ज्ञाता दुर्योधनादिभिः । गाण्डीवं च धनुर्दिव्यं पावकाद्रथमुत्तमम् ॥ १५
सारथिं चार्जुनः संख्ये कृष्णमक्षय्यसायकान् । ब्रह्मास्त्रादींस्तथा द्रोणात्सर्वे सर्वविशारदाः १६
कृष्णेन सोऽर्जुनो वह्निं खाण्डवे समतर्पयत् । इन्द्रवृष्टिं वारयंश्च शरबन्धेन पाण्डवः ॥ १७
जिता दिशः पाण्डवैस्तु राज्यं चक्रे युधिष्ठिरः । बहुस्वर्णं राजसूयं, न सेहे तत्सुयोधनः ॥ १८
भ्रात्रा दुःशासनेनोक्तः कर्णेन प्राप्तभूतिना । द्यूतकार्ये शकुनिना द्यूतेन स युधिष्ठिरम् ॥ १९
अजयत्तस्य राज्यं च सभास्थो मायया हसन् । जितो युधिष्ठिरो भ्रातृयुक्तश्चारण्यकं ययौ॥२०
वने द्वादश वर्षाणि प्रतिज्ञातानि सोऽनयत् । अष्टाशीतिसहस्राणि भोजयन्पूर्ववद्द्विजान् ॥ २१
सधौम्यो द्रौपदीषष्ठस्ततः प्रागाद्विराटकम् । कङ्को द्विजो ह्यविज्ञातो राजा भीमोऽथ सूपकृत् २२
बृहन्नडाऽर्जुनो, भार्या सैरन्ध्री, यमजौ तथा । अन्यनाम्ना, भीमसेनः कीचकं चावधीन्निशि २३
द्रौपदीं हर्तुकामं तमर्जुनश्चाजयत्कुरून् । कुर्वतो गोग्रहादींश्च तैर्ज्ञाताः पाण्डवा अथ ॥ २४
सुभद्रा कृष्णभगिनी अर्जुनात्समजीजनत् । अभिमन्युं ददौ तस्मै विराटश्चोत्तरां सुताम् ॥ २५
सप्ताक्षौहिणीश आसीद्धर्मराजो रणाय सः । कृष्णो दूतोऽब्रवीद्गत्वा दुर्योधनममर्षणम् ॥ २६
एकादशाक्षौहिणीशं नृपं दुर्योधनं तदा । युधिष्ठिरायार्धराज्यं देहि ग्रामांश्च पञ्च वा ॥
युध्यस्व वा, वचः श्रुत्वा कृष्णमाह सुयोधनः । २७

सुयोधन उवाच—

भूसूच्यग्रं न दास्यामि योत्स्ये संग्रहणोद्यतः ॥ २८

अग्निरुवाच—

विश्वरूपं दर्शयित्वा अधृष्यं विदुरार्चितः । प्रागाद्युधिष्ठिरं प्राह योधयैनं सुयोधनम् ॥ २९

इत्यादिमहापुराणे आग्नेये आदिपर्वादिभारताख्यानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५३

---

अथ चतुर्दशोऽध्यायः ।

---

भारताख्याने कुरुपाण्डवसङ्ग्रामवर्णनम् ।

अग्निरुवाच—

यौधिष्ठिरी दौर्योधनी कुरुक्षेत्रं ययौ चमूः । भीष्मद्रोणादिकान्दृष्ट्वा नायुध्यत गुरूनिति ॥ १
पार्थं ह्युवाच भगवानशोच्या भीष्ममुख्यकाः । शरीराणि विनाशीनि न शरीरी विनश्यति॥ २
अयमात्मा परं ब्रह्म अहं ब्रह्मास्मि विद्धि तम् । सिध्यसिद्ध्योः समो योगी राजधर्मं प्रपालय ३
कृष्णोक्तोऽथार्जुनोऽयुध्यद्रथस्थो वाद्यशब्दवान् । भीष्मः सेनापतिरभूदादौ दौर्योधने बले ॥ ४

---

१ ख. ग. घ. ‘तस्तु ए° । २ ख. घ. ङ. बाहुवेधेन । ग. बाहुवेदेन । च. बहुबोधेन ३ क. द्रौपदीं । ४ क. पाण्डवाः । ५ ख. घ. ततः । ६ घ. शस्त्रविशारदाः । ७ ख. ग. घ. शरवर्षेण । ८ ङ. च. हन्तुकामं । ९ क. ग. ङ. च. °श्चावधीत्क’ । १० क. ङ. च. विदुरान्वितः । ११ क. ङ. च. रणे ।

पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह । धार्तराष्ट्राः पाण्डवांश्च जघ्नुर्युद्धे सभीष्मकाः ॥ ५
धार्तराष्ट्राञ्शिखण्ड्याद्याः पाण्डवा जघ्नुराहवे । देवासुरसमं युद्धं कुरुपाण्डवसेनयोः ॥ ६
बभूव स्वस्थदेवानां पश्यतां प्रीतिवर्धनम् । भीष्मोऽस्त्रैः पाण्डवं सैन्यं दशाहोभिर्न्यपातयत् ॥ ७
दशमे ह्यर्जुनो बाणैर्भीष्मं वीरं ववर्ष ह । शिखण्डी द्रुपदोक्तोऽस्त्रैर्ववर्ष जलदो यथा ॥ ८
हस्त्यश्वरथपादातमन्योन्यास्त्रनिपातितम्[1] । भीष्मः स्वच्छन्दमृत्युश्च युद्धमार्गं प्रदर्श्य च ॥ ९
वसूक्तो वसुलोकाय शरशय्यागतः स्थितः । उत्तरायणमीक्षंश्च ध्यायन्विष्णुं स्तुवन्स्थितः ॥ १०
दुर्योधने तु शोकार्ते द्रोणः सेनापतिस्त्वभूत् । पाण्डवे हर्षिते[2] सैन्ये धृष्टद्युम्नश्चमूपतिः ॥ ११
तयोर्युद्धं बभूवोग्रं यमराष्ट्रविवर्धनम् । विराटद्रुपदाद्याश्च निमग्ना द्रोणसागरे ॥ १२
दौर्योधनी महासेना हस्त्यश्वरथपत्तिनी । धृष्टद्युम्नाद्धि[3] पतिता द्रोणः काल इवाऽऽबभौ[4] ॥ १३
हतोऽश्वत्थामा वेत्युक्ते[5] द्रोणः शस्त्राणि[6] चात्यजत् । धृष्टद्युम्नशराक्रान्तः पतितः स महीतले॥ १४
पञ्चमेऽहनि दुर्धर्षः सर्वक्षत्रं प्रमथ्य च । दुर्योधने तु शोकार्ते कर्णः सेनापतिस्त्वभूत् ॥ १५
अर्जुनः पाण्डवानां च तयोर्युद्धं बभूव ह । शस्त्राशस्त्रि महारौद्रं देवासुररणोपमम् ॥ १६
कर्णार्जुनाख्ये सङ्ग्रामे कर्णोऽरीनवधीच्छरैः । द्वितीयेऽहनि कर्णस्तु अर्जुनेन निपातितः ॥ १७
शल्यो दिनार्धं युयुधे ह्यवधीत्तं युधिष्ठिरः । युयुधे भीमसेनेन हतसैन्यः सुयोधनः ॥ १८
बहून्हत्वा नरादींश्च भीमसेनमथाऽऽद्रवत् । गदया प्रहरन्तं तु भीमस्तं तु व्यपातयत् ॥ १९
गदयाऽन्यानुजांस्तस्य तस्मिन्नष्टादशेऽहनि । रात्रौ सुषुप्तं च बलं पाण्डवानां न्यपातयत् ॥ २०
अक्षौहिणीप्रमाणं तु अश्वत्थामा महाबलः । द्रौपदेयांश्च[9] पाञ्चालान्धृष्टद्युम्नं च सोऽवधीत् ॥ २१
पुत्रहीनां द्रौपदीं [10]तां रुदतीमर्जुनस्ततः । शिरोमणिं तु जग्राह ऐषीकास्त्रेण तस्य च ॥ २२
अश्वत्थामास्त्रनिर्दग्धं जीवयामास वै हरिः । उत्तरायास्ततो गर्भं स परीक्षिदभून्नृपः ॥ २३
कृतवर्मा कृपो द्रौणिस्त्रयो* मुक्तास्ततो रणात् । पाण्डवाः सात्यकिः कृष्णः सप्त *मुक्ता न चापरे
स्त्रियश्चाऽऽर्ताः समाश्वास्य भीमाद्यैः स युधिष्ठिरः । संस्कृत्य प्रहतान्वीरान्दत्तोदकधनादिकः ॥
भीष्माच्छान्तनवाच्छ्रुत्वा धर्मान्सर्वांश्च शान्तिदान् । राजधर्मान्मोक्षधर्मान्दानधर्मान्नृपोऽभवत्[11] ॥
अश्वमेधे ददौ दानं ब्राह्मणेभ्योऽरिमर्दनः । श्रुत्वाऽर्जुनान्मौसलेयं यादवानां च संक्षयम् ॥ २७
राज्ये परीक्षितं स्थाप्य सानुजः स्वर्गमाप्तवान्[12] ॥ २८

इत्यादिमहापुराण आग्नेये भारताख्यानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८०

---

* दुर्योधनपक्षीयास्त्रयो रणान्मुक्ताः पाण्डवपक्षीयाश्च सप्तेत्यर्थः ।

---

१ क. ङ. च. °निपीडित° । २ च. °षितः सै° । ३ क. ङ. च. °म्राभिप° । घ. °म्राधिप° । ४ क. °वाचले । ह° । ५ घ. चेत्युक्ते । ६ क. च. सस्त्वानि । ७ क. ख. घ. ङ. °थाब्रवीत् । ८ क. च. °न्यात्मजाँ° । ङ. °न्यांस्तथा तस्य । ९ घ. °देयान्सपा° । १० च. तां सुद° । ११ क. ङ. च. °ले स या° । १२ ग. ङ. °माप्नुयात् । इ° ।

( पाण्डवस्वर्गारोहणवर्णनं बुद्धावतारवर्णनं च )

अथ पञ्चदशोऽध्यायः ।

पाण्डवस्वर्गारोहणवर्णनम् ।

अग्निरुवाच—

*युधिष्ठिरे तु राज्यस्थे आश्रमादाश्रमान्तरम् । धृतराष्ट्रो वनमगाद्गान्धारी च पृथा द्विज ॥ १
विदुरस्त्वग्निना दग्धो वनजेन दिवं गतः । एवं विष्णुर्भुवो भारमहरद्दानवादिकम् ॥ २
धर्मायाधर्मनाशाय निमित्तीकृत्य पाण्डवान् । स विप्रशापव्याजेन मुसलेनाहरत्कुलम् ॥ ३
यादवानां भारकरं, वज्रं राज्येऽभ्यषेचयत् । देवादेशात्प्रभासे स देहं त्यक्त्वा स्वयं हरिः॥ ४
इन्द्रलोके ब्रह्मलोके पूज्यते स्वर्गवासिभिः । बलभद्रोऽनन्तमूर्तिः पातालस्वर्गमीयिवान् ॥ ५
अविनाशी हरिर्देवो ध्यानिभिर्ध्येय एव सः । विना तं द्वारकास्थानं प्लावयामास सागरः ॥ ६
संस्कृत्य यादवान्पार्थो दत्तोदकधनादिकः । स्त्रियोऽष्टावक्रशापेन भार्या विष्णोश्च याः स्थिताः
पुनस्तच्छापतो नीता गोपालैर्लगुडायुधैः । अर्जुनं हि तिरस्कृत्य, पार्थः शोकं चकार ह ॥ ८
व्यासेनाऽऽश्वासितो मेने बलं मे कृष्णसंनिधौ । हस्तिनापुरमागत्य पार्थः सर्वं न्यवेदयत् ॥ ९
युधिष्ठिराय सभ्रात्रे पालकाय नृणां तदा । तद्धनुस्तानि चास्त्राणि स रथस्ते च वाजिनः॥ १०
विना कृष्णेन तन्नष्टं दानमश्रोत्रिये यथा । तच्छ्रुत्वा धर्मराजस्तु राज्ये स्थाप्य परीक्षितम्॥ ११
प्रस्थानं प्रस्थितो धीमान्द्रौपद्या भ्रातृभिः सह । संसारानित्यतां ज्ञात्वा जपन्नष्टशतं हरेः ॥१२
महापथे तु पतिता द्रौपदी सहदेवकः । नकुलः फाल्गुनो भीमो राजा शोकपरायणः ॥ १३
इन्द्रानीतरथारूढः सानुजः स्वर्गमाप्तवान् । दृष्ट्वा दुर्योधनादींश्च वासुदेवं च हर्षितः ॥ १४
एतत्ते भारतं प्रोक्तं यः पठेत्स दिवं व्रजेत् ॥ १५

इत्यादिमहापुराण आग्नेये पाण्डवप्रास्थानिकपर्ववर्णनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९५

अथ षोडशोऽध्यायः ।

बुद्धावतारवर्णनम् ।

अग्निरुवाच—

वक्ष्ये बुद्धावतारं च पठतः शृण्वतोऽर्थदम् । पुरा दे(दै)वासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥ १
रक्ष रक्षेति शरणं वदन्तो जग्मुरीश्वरम् । मायामोहस्वरूपोऽसौ शुद्धोदनसुतोऽभवत् ॥ २
मोहयामास दैत्यांस्तांस्त्याजिता वेदधर्मकम् । ते च बौद्धा बभूवुर्हि तेभ्योऽन्ये वेदवर्जिताः॥ ३

---

* भारतीयमाख्यानं त्वतीतानन्तराध्यायान्तिमश्लोकादतीताध्याय एव समापितमिति ज्ञायते । परं च पाण्डवीयं प्रास्थानिकं वृत्तं पुनर्विस्तरेण व्याख्यातुमारब्धवानग्निरतो नायमध्यायः पुनरुक्तसदृशः ।

---

१ क. ङ. च. °प्रमायाव्या° । २ क. ङ. च. °हनत्कु° । ३ ख. ग. स्वर्निवा° । ४ क. °तालात्स्वर्ग° । ५ क. °ना तद्वार° । ६ ङ. च. °लकुटायु° । ७ घ. °य स भ्रा° । ङ. °य सभ्रात्रे । ८ घ. दानं चाश्रो° । ९ ग. प्रास्थानं । १० क. °स्थानप्र° । ११ क. ग. °रानन्ततां ।

[*आर्हतः सोऽभवत्पश्चादार्हतानकरोत्परान् । एवं पाषण्डिनो जाता वेदधर्मादिवर्जिताः ॥ ४]
नरकार्हं कर्म चक्रुर्ग्रहीष्यन्त्यधमादपि[१] । सर्वे कलियुगान्ते तु भविष्यन्ति च संकराः ॥ ५
दस्यवः शीलहीनाश्च वेदो वाजसनेयकः । दश पञ्च च शाखा[२] वै प्रमाणेन भविष्यति(?) ॥ ६
धर्मकञ्चुकसंवीता अधर्मरुचयस्तथा । मानुषान्भक्षयिष्यन्ति म्लेच्छाः पार्थिवरूपिणः ॥ ७
कल्की विष्णुयशःपुत्रो याज्ञवल्क्यपुरोहितः । उत्सादयिष्यति[३] म्लेच्छान्गृहीतास्त्रः कृतायुधः ॥ ८
स्थापयिष्यति मर्यादां[४] चातुर्वर्ण्ये यथोचिताम्[५] । आश्रमेषु च सर्वेषु प्रजाः सद्धर्मवर्त्मनि ॥ ९
कल्किरूपं परित्यज्य हरिः स्वर्गं गमिष्यति । ततः कृतयुगं नाम पुरावत्संभविष्यति ॥ १०
वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम । एवं सर्वेषु कल्पेषु सर्वमन्वन्तरेषु च ॥ ११
अवतारा असंख्याता अतीतानागतादयः । विष्णोर्दशावतारांशान्यः[६] पठेच्छृणुयान्नरः ॥ १२
सोऽवाप्तकामो विमलः सकुलः स्वर्गमाप्नुयात् । धर्माधर्मव्यवस्थानमेवं वै कुरुते हरिः ॥ १३
अवतीर्णः[७] स जगतः सर्गादेः कारणं हरिः ॥ १४

इत्यादिमहापुराण आग्नेये बुद्धावतारवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०९

अथ सप्तदशोऽध्यायः ।

जगत्सर्गवर्णनम् ।

अग्निरुवाच—

जगत्सर्गादिकां[८] क्रीडां विष्णोर्वक्ष्येऽधुना शृणु । स्वर्गादिकृत्स सर्गादिः सृष्ट्यादिः सगुणोऽगुणः
ब्रह्माव्यक्तं[९] सदग्रेऽभून्न[१०] खं रात्रिदिनादिकम् । प्रकृतिं पुरुषं विष्णुं[११] प्रविश्याक्षोभयत्ततः ॥ २
सर्गकाले महत्तत्त्वमहंकारस्ततोऽभवत् । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ ३
अहंकाराच्छब्दमात्रमाकाशमभवत्ततः । स्पर्शमात्रोऽनिलस्तस्माद्रूपमात्रोऽनलस्ततः ॥ ४
रसमात्रा आप इतो गन्धमात्रा धरित्र्यभूत्[१२] । अहंकारात्तामसात्तु तैजसानीन्द्रियाणि च ॥ ५
वैकारिका दश देवा मन एकादशेन्द्रियम् । +ततः स्वयंभूर्भगवान्सिसृक्षुर्विविधाः प्रजाः ॥ ६
अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् । आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ७
अयनं तस्य ताः पूर्वं[१३] तेन नारायणः स्मृतः । हिरण्यवर्णमभवत्तदण्डमुदकेशयम् ॥ ८
तस्मिञ्जज्ञे स्वयं ब्रह्मा स्वयंभूरिति नः श्रुतम् । हिरण्यगर्भो भगवानुषित्वा परिवत्सरम् ॥ ९
तदण्डमकरोद्द्वैधं दिवं भुवमथापि च । तयोः शकलयोर्मध्य आकाशमसृजत्प्रभुः ॥ १०

---

* धनुश्चिह्नान्तर्गतं ग. पुस्तके नास्ति । + इत आरभ्याऽऽध्यायपरिसमाप्तिपर्यन्ताः श्लोका महाभारतान्तर्गतहरिवंशपर्वस्थद्वितीयाध्यायत उद्धृता इति गम्यते श्लोकानामक्षरश उभयत्र पाठसाम्यात् ।

---

१ क. ङ. च. °न्त्यवमा° । २ ग. शाला वै प्रायेणैव भ° । ३ क. उच्छेद° । ४ च. °दां भविष्यति पृथक्पृथक् । वर्णाश्रमाश्च धर्मेषु स्वेषु स्थास्यन्ति सत्तम । आश्र° । ५ क. यथेरिताम् । ६ ख. घ. °ताराख्यान्यः । ७ घ. °तीर्णश्च स गतः स° । ८ क. ख. ग. ङ. च. जगत्सर्गादिकीं । ९ क. ङ. च ब्रह्म व्यक्तं । १० घ. सदाऽग्रे° । ११ ग. °कृतिं पुरुषो विष्णुः प्र° । १२ ख. ग. घ. मही स्मृता । १३ क. पूर्णं ।

अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे । तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ॥ ११
ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन्प्रजापतिः । विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ १२
वयांसि च ससर्जाऽऽदौ [1]पर्जन्यं चाथ वक्त्रतः । ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये १३
साध्यास्तैरयजन्देवान्भूतमुच्चावचं [2]भुजात् । सनत्कुमारं रुद्रं च ससर्ज क्रोधसंभवम् ॥ १४
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं [3]मानसान्सप्त [4]ब्राह्मणानिति [5]निश्चितम् ॥ १५
सप्तैते जनयन्ति स्म प्रजा रुद्राश्च सत्तम । द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ॥ १६
अर्धेन नारी तस्यां स ब्रह्मा वै चासृजत्प्रजाः ॥ १७

इत्यादिमहापुराण आग्नेये जगत्सर्गवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२६

---

अथाष्टादशोऽध्यायः ।

---

## स्वायंभुवमनुवंशवर्णनम् ।

अग्निरुवाच—

*प्रियव्रतोत्तानपादौ मनोः स्वायंभुवात्सुतौ । अजीजनत्सुतां [6]रम्यां [7]शतरूपा तपोन्विता ॥ १
काम्या [8]कर्दमकन्याऽतः सम्राट्कुक्षिर्विराट्प्रभुः । सुरुच्यामुत्तमो जज्ञे पुत्र उत्तानपादतः ॥ २
सुनीत्यां च ध्रुवः पुत्रस्तपस्तेपे सुकीर्तये । ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि हे मुने ॥ ३
तस्मै प्रीतो हरिः प्रादान्मुन्यग्रे स्थानकं स्थिरम् । श्लोकं पपाठ ह्युशना वृद्धिं दृष्ट्वा स तस्य च ४
अहोऽस्य तपसो वीर्यमहो श्रुतमहोऽद्भुतम् । यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ५
[9]तस्माद्वृष्टिश्च भव्यश्च ध्रुवाच्छम्भुर्व्य[10]जायत । वृद्धेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥ ६
रिपुं रिपुंजयं [11]पुष्यं [12]वृकसं वृकतेजसम् । रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥ ७
अजीजनत्पुष्करिण्यां [13]वीरिण्यां चाक्षुषो मनुम् । [ +मनोरजायन्त दश नड्वलायां सुतोत्तमाः]
[14]ऊरुः [15]पूरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः । अग्निष्टुदतिरा[16]त्रश्च सुद्युम्नश्चा[17]तिमन्युकः ॥ ९
ऊरोरजनयत्पुत्रान्षडाग्नेयी महाप्रभान् । अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं गयम् ॥ १०
अङ्गात्सुनीथापत्यं वै वेणमेकं व्यजायत । अरक्षकः पापरतः स हतो मुनिभिः कुशैः ॥ ११
प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करम् । वेणस्य मथिते पाणौ संबभूव पृथुर्नृपः ॥ १२
तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः । करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ १३
स धन्वी कवची जातस्तेजसा निर्दहन्निव । पृथुर्वैण्यः प्रजाः सर्वा र[18]रक्ष क्षत्रपूर्वजः ॥ १४

---

* अयमप्यध्यायः पूर्वाध्यायवद्बहुशो हरिवंशस्थश्लोकपाठसदृश एव । + धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. °न्यं वर्षचक्रतः । २ च. भुजात् । ३ घ. °नसाः सप्त । ४ घ. ब्रह्माण इति । ५ घ. निश्चिताः । ६ घ. कन्यां । ७ घ. शतरूपां । ८ क. ख. घ. °मभार्योऽतः । ९ क. घ. °स्माच्छिष्टिं च भव्यं च ध्रु° । १० क. °त । श्लिष्टेरा° । घ. °त शिष्टेरा° । ११ ख. ग. पुत्रं । घ. रिप्रं । च. पुष्पं । १२ ख. ग. घ. वृकलं । १३ क. करिण्यां । ग. वारुण्यां । च. वारिण्यां । १४ च. उरूः । १५ च. पुरुः । १६ क. ङ. °रात्रिश्च । १७ ख. ग. °श्चाभिम° । १८ घ. °क्ष क्षेत्रपू° ।

राजसूयाभिषिक्तानामाद्यः स पृथिवीपतिः । तस्माच्चैव समुत्पन्नौ* निपुणौ सूतमागधौ ॥ १५
तत्स्तोत्रं चक्रतुर्वीरौ, राजाऽभूज्जनरञ्जनात् । दुग्धा गौस्तेन सस्यार्थं[1] प्रजानां जीवनाय च १६
सह देवैर्मुनिगणैर्गन्धर्वैश्चाप्सरोगणैः । पितृभिर्दानवैः सर्पैर्वीरुद्भिः पर्वतैर्जनैः ॥ १७
तेषु तेषु च पात्रेषु दुह्यमाना वसुंधरा । प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् ॥ १८
पृथोः पुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्धिपालितौ । शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत ॥ १९
हविर्धाना[+त्षडाग्नेयी धिषणाऽजनयत्सुतान् । प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥२०
प्राचीनाग्राः कुशास्तस्य पृथिव्यां यजतो यतः । प्राचीनबर्हिर्भगवा]न्महानासीत्प्रजापतिः ॥२१
सवर्णाऽऽधत्त सामुद्री दश प्राचीनबर्हिषः । सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ २२
अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः । दश वर्षसहस्राणि समुद्रसलिलेशयाः ॥ २३
प्रजापतित्वं संप्राप्य तुष्टा विष्णोश्च निर्गताः । भूः खं व्याप्तं हि तरुभिस्तांस्तरूनदहंश्च ते ॥२४
मुखजाग्निमरुद्भ्यां च दृष्ट्वा[3] चाथ द्रुमक्षयम् । उपगम्याब्रवीदेतान्राजा सोमः प्रजापतीन् ॥ २५
कोपं यच्छत दास्यन्ति कन्यां वो मारिषां वराम् । तपस्विनो मुनेः कण्डोः[4] प्रम्लोचायां मयैव च
भविष्यं जानता सृष्टा भार्या वोऽस्तु कुलंकरी । अस्यामुत्पत्स्यते दक्षः [* प्रजाः संवर्धयिष्यति
प्रचेतसस्तां जगृहुर्दक्षोऽस्यां च ततोऽभवत् । अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ॥ २८
स सृष्ट्वा मनसा दक्षः ] पश्चादसृजत स्त्रियः । ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ २९
सप्तविंशति(तिं) सोमाय चतस्रोऽरिष्टनेमिने । द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे ददात्[5] ॥ ३०
तासु देवाश्च नागाद्या मैथुनान्मनसा[6] पुरा । धर्मसर्गं प्रवक्ष्यामि दशपत्नीषु धर्मतः ॥ ३१
विश्वे देवास्तु विश्वायाः साध्या साध्यान्व्यजायत । मरुत्वत्या मरुत्वन्तो वसोस्तु वसवोऽभवन्
भानोस्तु भानवः पुत्रा मुहूर्तास्तु मुहूर्तजाः । लम्बाया धर्मतो घोषो नागवीथी च यामिजा[7] ॥
पृथिवीविषयं सर्वं[8] मरुत्वत्यां व्यजायत । संकल्पायास्तु संकल्पा इन्दोर्नक्षत्रतः सुताः ॥ ३४
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च[9] वसवोऽष्टौ च नामतः ॥ ३५
आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तो मुनिस्तथा । ध्रुवस्य कालो लोकान्तो वर्चाः सोमस्य वै सुतः
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा । मनोहरायाः शिशिरः प्राणोऽथ[10] रमणस्तथा ॥ ३७
पुरोजवोऽनिलस्याऽऽसीदविज्ञातोऽनलस्य च । अग्निपुत्रः कुमारश्च शरस्तम्बे व्यजायत ॥ ३८
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः । कृत्तिकातः कार्तिकेयो यतिः सनत्कुमारकः ॥ ३९
प्रत्यूषाद्देवलो जज्ञे विश्वकर्मा प्रभासतः[11] । कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः[12] ॥ ४०
मनुष्याश्चोपजीवन्ति शिल्पं वै भूषणादिकम् । सुरभी कश्यपाद्रुद्रानेकादश विजज्ञुषी ॥ ४१
महादेवप्रसादेन तपसा भाविता सती । अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च सत्तम ॥ ४२
त्वष्टुश्चैवा[13]ऽऽत्मजः श्रीमान्विश्वरूपो महायशाः । हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥ ४३

---

* पुत्राविति शेषः । * धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तके नास्ति । + ख. पुस्तके धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ।

---

१ क. ङ. च. सस्यानि । २ क. ङ. च. 'गाः । सप्तृ' । ३ च. 'ष्ट्वाऽनाथ' । ४ क. ङ. च. कण्ड्वोः । ५ ख. ग. घ. च. अदात् । ६ ख. 'नान्मानसाः पु' । ७ च. भूमिजा । ८ घ. सर्वमरुन्धत्यां । ९ घ. प्रभाषश्च । च. प्रभावश्च । १० क. ग. ङ. च. 'थ मरणस्त' । ११ घ. प्रभाषतः । १२ ङ. वर्धकः । १३ ख. ग. 'वानुजः ।

[1]वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा । मृगव्याधश्च सर्पश्च कपाली दश चैककः ॥ ४४
रुद्राणां च शतं लक्षं यैर्व्याप्तं सचराचरम् ॥ ४५

इत्यादिमहापुराण आग्नेये स्वायंभुवमनुवंशवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७१

---

अथैकोनविंशोऽध्यायः ।

---

कश्यपवंशवर्णनम् ।

अग्निरुवाच—

कश्यपस्य वदे सर्गमदित्यादिषु हे मुने । चाक्षुषे तुषिता देवास्तेऽदित्यां कश्यपात्पुनः ॥ १
आसन्विष्णुश्च शक्रश्च त्वष्टा धाता तथाऽर्यमा । पूषा विवस्वान्सविता मित्रोऽथ वरुणो भगः ॥
अंशुश्च द्वादशाऽऽदित्या आसन्वैवस्वतेऽन्तरे । अरिष्टनेमिपत्नीनामपत्यानीह षोडश ॥ ३
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः [2]स्मृताः । प्रत्यङ्गिरसजाः श्रेष्ठाः कृशाश्वस्य सुरायुधाः ॥ ४
उदयास्तमने सूर्ये तद्वदेते युगे युगे । हिरण्यकशिपुर्दित्यां हिरण्याक्षश्च कश्यपात् ॥ ५
सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः । राहुप्रभृतयस्तस्यां सैंहिकेया इति [3]श्रुताः ॥ ६
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः । अनुह्रादश्च ह्रादश्च प्रह्रादश्चातिवैष्णवः ॥ ७
[4]संह्रादश्च चतुर्थोऽभूद्ध्रादपुत्रो ह्रदस्तथा । संह्रादपुत्र आयुष्माञ्शिबिर्बाष्कल एव च ॥ ८
[*विरोचनस्तु प्राह्रादिर्बलिर्जज्ञे विरोचनात् । ] बलेः पुत्रशतं त्वासीद्बाणेज्येष्ठं महामुने ॥ ९
पुराकल्पे हि [6]बाणेन प्रसाद्योमापतिं प्रभुम् । पार्श्वतो विहरिष्यामि इत्येवं प्राप्त ईश्वरात् ॥ १०
हिरण्याक्षसुताः पञ्च शम्बरः शर्कुनिस्त्ववति । द्विमूर्धा शङ्कुरार्यश्च शतमासन्दनोः सुताः ॥ ११
स्वर्भानोः सुप्रभा कन्या पुलोम्नस्तु शची स्मृता । उपदानवी हयशिरा शर्मिष्ठा वार्षपर्वणी १२
पुलोमा कालका चैव वैश्वानरसुते उभे । कश्यपस्य तु भार्ये द्वे तयोः पुत्राश्च कोटयः ॥ १३
प्रह्रादस्य चतुष्कोट्यो निवातकवचाः कुले । ताम्रायाः षट्सुताः स्युश्च काकी श्येनी च भास्यपि
गृध्रिका च शुचिग्रीवा ताभ्यः काकादयोऽभवन् । अश्वाश्चोष्ट्राश्च ताम्राया अरुणो गरुडस्तथा ॥
विनतायाः, सहस्रं तु सर्पाश्च सुरसाभवाः । काद्रवेयाः सहस्रं तु शेषवासुकितक्षकाः ॥ १६
दंष्ट्रिणः क्रोधवशगा धरायाः पक्षिणो जले । सुरभ्यां गोमहिष्यादि इरोत्पन्नास्तृणादयः १७
खसायां यक्षरक्षांसि मुनेरप्सरसोऽभवन् । अरिष्टायास्तु गन्धर्वाः कश्यपाद्धि स्थिरं वरम् ॥ १८
एषां पुत्रादयोऽसंख्या देवैर्वै दानवा जिताः । दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम् ॥ १९
पुत्रमिन्द्रप्रहर्तारमिच्छती प्राप कश्यपात् । पादाप्रक्षालनात्सुप्ता तस्या गर्भं जघान ह ॥ २०
छिद्रमन्विष्य चेन्द्रस्तु ते देवा मरुतोऽभवन् । शक्रस्यैकोनपञ्चाशत्सहाया दीप्ततेजसः ॥ २१

---

+ धनुश्चिह्नान्तर्गतं श्लोकार्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. वृषा । २ घ. सुताः । ३ क. ङ. च. स्मृताः । ४ क. ङ. च. ह्रदस्य पुत्र । ५ ख. ग. घ. °णश्रेष्ठं । ६ क. ङ. च. हिरण्येन । ७ घ. वरः । ८ क. ङ. च °कुनिः स्तुतिः । द्वि° । ९ ख. शम्बराद्याश्च । १० क. ख. धरोत्थाः ।

एतत्सर्वं* हरिर्ब्रह्मा अभिषिच्य पृथुं नृपम्। ददौ क्रमेण राज्यानि अन्येषामधिपो हरिः ॥२२
द्विजौषधीनां चन्द्रस्तु अपां तु वरुणो नृपः। राज्ञां वैश्रवणो राजा सूर्याणां विष्णुरीश्वरः २३
वसूनां पावको राजा मरुतां वासवः प्रभुः। प्रजापतीनां दक्षोऽथ प्रह्लादो दानवाधिपः ॥ २४
पितॄणां च यमो राजा भूतादीनां हरः प्रभुः। हिमवांश्चैव शैलानां नदीनां सागरः प्रभुः ॥ २५
गन्धर्वाणां चित्ररथो नागानामथ वासुकिः। सर्पाणां तक्षको राजा गरुडः पक्षिणामथ ॥ २६
ऐरावतो गजेन्द्राणां गोवृषोऽथ गवामपि। मृगाणामथ शार्दूलः प्लक्षो वनस्पतीश्वरः ॥ २७
उच्चैःश्रवास्तथाऽश्वानां सुधन्वा पूर्वपालकः। दक्षिणस्यां शङ्खपदः केतुमान्पालको जले ॥ २८
हिरण्यरोमकः सौम्ये प्रतिसर्गोऽयमीरितः ॥ २९

इत्यादिमहापुराण आग्नेये प्रतिसर्गे कश्यपवंशवर्णनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५००

---

अथ विंशोऽध्यायः ।

---

## जगत्सर्गवर्णनम् ।

अग्निरुवाच—

प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः। तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ॥ १
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः। इत्येष[2] प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ॥ २
मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः। तिर्यक्स्रोतास्तु[3] यः प्रोक्तस्तैर्यग्योन्यस्ततः[4] स्मृतः
तथोर्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः। ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ ४
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः। पञ्चैते वैकृताः सर्गाः प्राकृताश्च त्रयः स्मृताः ॥५
प्राकृतो वैकृतश्चैव कौमारो नवमस्तथा। ब्रह्मतो[5] नव सर्गास्तु जगतो मूलहेतवः ॥ ६
ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे। नित्यो नैमित्तिकः सर्गस्त्रिधा[6]ऽथ कथितो जनैः ७
प्राकृतो, दैनंदिनीयादान्तरप्रलयादनु। जायन्ते यत्रानुदिनं नित्यसर्गो हि सं[7] स्मृतः ॥ ८
देवौ धाताविधातारौ भृगोः ख्यातिरसूयत। श्रियं च, पत्नी विष्णोर्या स्तुता शक्रेण वृद्धये ॥
धातुर्विधातुर्द्वौ पुत्रौ क्रमात्प्राणो मृकण्डुकः[8]। मार्कण्डेयो मृकण्डोश्च[9] जज्ञे वेदशिरास्ततः ॥ १०
पौर्णमासश्च संभूत्यां मरीचेरभवंत्सुतः[10]। स्मृत्यामङ्गिरसः पुत्राः सिनीवाली कुहूस्तथा ॥ ११
राका चानुमतिश्चात्रेरनसूयाऽप्यजीजनत्। सोमं दुर्वाससं पुत्रं दत्तात्रेयं च योगिनम् ॥ १२
प्रीत्यां[11] पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोऽभवत्। क्षमायां पुलहाज्जातः सहिष्णुः सर्वपादिकः[12] ॥
संनत्यां[13] च क्रतोरासन्वालखिल्या महौजसः। अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः ॥ १४
ऊर्जायां च वसिष्ठाच्च राजा[14] गात्रोर्ध्वबाहुकः। सवनश्चानघः[15] शुक्रः सुतपाः सप्त चर्षयः ॥ १५

---

* अत्र किंचित्त्रुटितमिति भाति ।

---

१ क. ङ. च. °तानां च ह° । २ क. ङ. च. इत्येवं । ३ ग. °क्स्रोतस्तु । ४ ख. ग. °क्तास्तिर्य° । ५ ग. ब्रह्मणो । ६ ख. ग. °धा प्रक° । ७ ख. संमतः । ८ ख. ग. मृकण्डकः । ९ ख. ग. मृकण्डाच्च । १० क. ङ. च. °वत्ततः । ११ क. ङ. च. कुमार्यो । १२ ख. ग. सर्ववादिकः । १३ क. ङ. च संतत्यां । १४ क. ङ. रजो गात्रौर्ध्वबाहुकः । १५ घ. °श्चालघुः शु° ।

पावकः पवमानोऽभूच्छुचिः स्वाहाग्नि[1]तोऽभवत् । अग्निष्वात्ता बर्हिषदोऽनग्नयः साग्नयो ह्यजात् ॥
पितृभ्यश्च स्वधायां च मेना वैधारिणी सुते । हिंसा भार्या त्वधर्मस्य तयोर्जज्ञे तथाऽनृतम् ॥ १७
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च । माया च वेदना चैव मिथुनं [2]त्विदमेतयोः ॥ १८
तयोर्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् । वेदना च सुतं चापि दुःखं जज्ञेऽथ रौरवात् ॥ १९
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे । ब्रह्मणश्च रुदञ्जातो रोदनाद्रुद्रनामकः ॥ २०
भवं शर्वमथेशानं तथा पशुपतिं द्विज । भीममुग्रं महादेवमुवाच स पितामहः ॥ २१
दक्षकोपाच्च तद्भार्या देहं तत्याज सा सती । हिमवद्दुहिता भूत्वा पत्नी शंभोरभूत्पुनः ॥ २२
ऋषिभ्यो नारदाद्युक्ताः पूजाः स्नानादिपूर्विकाः । स्वायंभुवाद्यास्ताः कृत्वा विष्णवादेर्भु-
क्तिमुक्तिगाः ॥ २३

इत्यादिमहापुराण आग्नेये जगत्सर्गवर्णनं नाम विशोऽध्याय. ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—५२३

---

अथैकविंशोऽध्याय. ।

---

विष्णवादिदेवतानां सामान्यपूजाविधानम् ।

नारद उवाच—

सामान्यपूजां विष्णवादेर्वक्ष्ये मन्त्रांश्च सर्वदान् । समस्तपरिवाराय अच्युताय नमो यजेत् ॥ १
धात्रे विधात्रे गङ्गायै यमुनायै, निधी तथा । द्वारश्रियं वास्तुनरं शक्तिं कूर्ममनन्तकम् ॥ २
पृथिवीं धर्मकं ज्ञानं वैराग्यैश्वर्यमेव च । अधर्मादीन्कन्दनालपद्मकेसरकर्णिकाः ॥ ३
ऋग्वेदाद्यं कृ[3]ताद्यं च[4] सत्त्वाद्यर्कादिमण्डलम् । विमलोत्कर्षिणी ज्ञाना क्रिया योगा च ता यजेत् ॥
प्रह्वी सत्या[5] तथेशा चानुग्रहाऽमलमूर्तिका । दुर्गां गिरं गणं क्षेत्रं वासुदेवादिकं यजेत् ॥ ५
हृदयं च शिर[5]श्चूडां वर्म नेत्रमथास्त्रकम् । शङ्खं चक्रं गदां पद्मं श्रीवत्सं कौस्तुभं यजेत् ॥ ६
वनमालां श्रियं पुष्टिं गरुडं गुरुमर्चयेत् । इन्द्रमग्निं यमं र[6]क्षो जलं वायुं धनेश्वरम् ॥ ७
ईशानं तमजं चा[7]स्त्रं वाहनं कुमुदादिकम् । विष्वक्सेनं मण्डलादौ सिद्धिः पूजादिना भवेत् ॥ ८
शिवपूजाऽथ सामान्या पूर्वं नन्दिनमर्चयेत् । महाकालं यजेद्दुर्गां यमुनां च गणादिकम् ॥ ९
गिरं श्रियं गुरुं वास्तुं शक्त्यादीन्धर्मकादिकम् । वामा ज्येष्ठा [8]तथा रौद्री काली कलविकारिणी ॥
बलविकारिणी [9]चापि बलप्रमथिनी क्रमात् । सर्वभूतदमनी च मं[10]दनोन्मादिनी शिवा ॥ ११
हां हूं हां शिवमूर्तये सा[11]ङ्गवक्त्रं शिवं यजेत् । हौं शिवाय हौमित्यादि हामीशानादिवक्त्रकम् १२
ह्रीं गौरीं गं गणः शक्रमुखाश्चण्डो हृदादिकाः । *क्रमात्सूर्यार्चने मन्त्रा दण्डी पूज्यश्च पिङ्गलः ॥
उच्चैःश्रवाश्चारुणश्च प्रभूतं विमलं यजेत् । सो[12]मं संध्ये परसुखं स्कन्दाद्यं मध्यतो यजेत् ॥ १४

---

* अत्र ख. ग. पुस्तकयोः " शिवपूजाक्रमः " इत्यधिकं वर्तते ।

---

१ घ. °ग्निजोऽभ° । २ क. ङ. च. चेदमेतयोः । ३ ख. ग. हृदाद्यं । ४ क. ङ. च. च मन्वाद्य° । ५ घ. शिरः शूलं । ६ क. ङ. च. राज्यं । ७ क. ङ. च. वास्तुं । ८ क. ङ. च. ततो । ९ क. ङ. च. वाऽपि । १० क. ख. ग. च. मनोन्मानी शिवासनम् । ११ ख. ग. साङ्गं वक्त्रं । १२ क. घ. ङ. च. साराराध्यौ परमुखं ।

दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा । [1]अमोघा विद्युता चैव पूज्याऽथो सर्वतोमुखी ।।
अर्कासनं हि हं खं खं सोल्कायेति च मूर्तिकम् । ह्रां ह्रीं सः सूर्याय नम आं नमो हृदयाय च
अर्काय शिरसे तद्वदग्नी[2]शाश्रयवायुगान् । भूर्भुवः स्वरे ज्वालिनी शिखा हूं कवचं स्मृतम् ।। १७
भां नेत्रं रस्तथाऽर्कास्त्रं राज्ञी शक्तिश्च [3]निःस्वका । सोमोऽङ्गारकोऽथ बुधो जीवः शुक्रः शनिः क्रमात्
राहुः केतुस्तेजश्चण्डः संक्षेपादथ पूजनम् । आसनं मूर्तयो मूलं हृदाद्यं [4]परिचारकः ।। १९
विष्ण्वासनं विष्णुमूर्ते रां श्रीं श्रीं श्रीधरो हरिः । ह्रीं सर्वमूर्तिमन्त्रोऽयमिति त्रैलोक्यमो[5]हनः।।२०
क्लीं हृषीकेशो हूं विष्णुः स्वरैर्दीर्घैर्हृदादिकम् । समस्तैः पञ्चमी पूजा सङ्ग्रामादौ जयादिदा।।२१
चक्रं गदां क[6]र्माच्छङ्खं मुसलं [7]खड्गशार्ङ्गकम् । पाशाङ्कुशौ च श्रीवत्सं कौस्तुभं वनमालया ।।२२
श्रीं श्रीर्महालक्ष्मीस्तार्क्ष्यो गुरुरिन्द्रादयोऽर्चनम् । सरस्वत्यासनं मूर्ति रीं ह्रीं देवी सरस्वती २३
हृदाद्या लक्ष्मीर्मेधा च कला तुष्टिश्च पुष्टिका । गौरी प्रभा मतिर्दुर्गा गणो गुरुश्च क्षेत्रपः ।। २४
तथा गं गणपतये च ह्रीं गौर्यै च श्रीं श्रियै । ह्रीं त्वरितायै ऐं क्लीं सौं त्रिपुरा चतुर्थ्यन्ता नमोन्तका।।
प्रणवाद्याश्च नामाद्यमक्षरं बिन्दुसंयुतम् । ॐ युता वा सर्वमन्त्राः पूजनाज्जपतः स्मृताः ।। २६
होमस्तिलघृताद्यैश्च धर्मकामार्थमोक्षदाः । पूजामन्त्रान्पठेद्यस्तु भुक्तभोगो दिवं व्रजेत् ।। २७

इत्यादिमहापुराण आग्नेये विष्ण्वादिदेवतासामान्यपूजाविधानवर्णनं नामैकविंशोऽध्यायः ।। २१ ।।

आदितः श्लोकानां समष्ट्यङ्काः—५५०

---

अथ द्वाविंशोऽध्यायः ।

---

पूजाधिकारार्थं सामान्यः स्नानविधिः ।

नारद उवाच—

वक्ष्ये स्नानं क्रियाद्यर्थं नृसिंहेन तु मृत्तिकाम् । [*गृहीत्वा तां द्विधा कृत्वा [8]मलस्नानमथैकया।।
[9]निमज्ज्याऽऽचम्य विन्यस्य सिंहेन कृतरक्षकः । विधिस्नानं ततः] कुर्यात्प्राणायामपुरःसरम् ।।२
हृदि ध्याय[10]न्हरिं देवं मन्त्रेणाष्टाक्षरेण हि । त्रिधा पाणितले मृत्स्नां दिग्बन्धं सिंहजप्ततः ।। ३
वासुदेवप्रजप्तेन तीर्थं संकल्प्य चाऽऽलभेत् । गात्रं वेदा[11]दिमन्त्रैश्च संमार्ज्याऽऽराध्यमूर्तिगम् ।। ४
स्मृत्वाऽघमर्षणं वस्त्रं परिधाय समाचरेत् । विन्यस्य मन्त्रैर्निर्माज्यं पाणिस्थं जलमेव च ।। ५
नारायणेन संयम्य वायुमाघ्राय चोत्सृजेत् । जलं ध्यायन्हरिं पश्चाद्दत्त्वाऽर्घ्यं द्वादशाक्षरम् ।। ६
जप्त्वाऽ[12]न्यान्भक्तितस्तर्प्य योगपीठादितः क्रमात् । मन्त्रान्दिक्पालपर्यन्तानृषीन्पितृगणानपि ७

---

* ग. पुस्तकेऽयं ग्रन्थो नास्ति ।

---

१ क. ङ. च. अयोध्या । २ घ. °शासुरवा° । ३ क. च. निर्गता । घ. निष्कुभा । ४ क. ङ. च. परिवारिकः । ख. परिचालकः । ५ ङ. च °हनम् । क्लीं । ६ क. ङ. च. °मात्खड्गं मु° । ७ क. ङ. च. शङ्खशार्ङ्गकम् । ८ घ. मनःस्ना° । ९ ख. °या । विमृज्याऽऽच° । १० क. ख. घ. ङ. च. °न्हरिज्ञानं म° । ११ क. ख. ग. घ. °दिना मन्त्रैः संमार्ज्याऽऽराध्यमूर्तिना । कृत्वा° । १२ घ. °न्याञ्शतशस्त° ।

( आदिमूर्त्यादिसामान्यः पूजाविधिः )

मनुष्यान्सर्वभूतानि स्थावरान्तान्यथाऽऽचमेत् । न्यस्य चाऽऽत्मनि संहृत्य मन्त्रा[1]न्यागगृहं व्रजेत् ॥
एवमन्यासु पूजासु मूलाद्यैः स्नानमाचरेत् ॥ ९

इत्यादिमहापुराण आग्नेये सामान्यपूजाविधिवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५५९

---

अथ त्रयोविंशोऽध्यायः ।

---

## सामान्य आदिमूर्त्यादिदेवतानां पूजाविधिः ।

नारद उवाच—

वक्ष्ये पूजाविधिं विप्रा[2] यं कृत्वा सर्वमाप्नुयात् । प्रक्षालिताङ्घ्रिराचम्य वाग्यतः कृतरक्षणः ॥१
प्राङ्मुखः स्वस्तिकं बद्ध्वा पद्माद्यपरमेव च । यंबीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ॥२
[3]विश्लेषयेदशेषं तु ध्या[4]यन्कायात्तु कल्मषम् । क्ष्रौं हृत्पङ्कजमध्यस्थं बीजं तेजोनिधिं स्मरन् ॥ ३
अधोर्ध्वतिर्यग्गाभिस्तु ज्वालाभिः कल्मषं दहेत् । शशाङ्काकृतिवद्ध्यायेदम्बरस्थं सुधाम्बुभिः ४
हृत्पद्मव्यापिभिर्देहं स्वकमा[5]प्लावयेत्सुधीः । सुषुम्नायोनिमार्गेण सर्वनाडीविसर्पिभिः ॥ ५
शोधयित्वा न्यसेत्तत्त्वं करशु[6]द्धिमथास्त्रकम् । व्यापकं हस्तयोरादौ दक्षिणाङ्गुष्ठतोऽङ्गकम् ॥ ६
मूलं देहे द्वादशाङ्गं न्यसेन्मन्त्रै[7]र्द्विषट्ककैः । हृदयं च शिरश्चैव शिखा वर्मास्त्रलोचने ॥ ७
उदरं च तथा पृष्ठं बाहूरू [8]जानुपादकम् । मुद्रां दत्त्वा स्मरेद्विष्णुं जप्त्वाऽष्टशतमर्चयेत् ॥ ८
वामे तु *वर्धनीं न्यस्य पूजाद्रव्यं तु दक्षिणे । प्रक्षाल्यास्त्रेण चार्घ्येऽथ गन्धपुष्पान्विते न्यसेत् ९
चैतन्यं सर्वगं ज्योतिर[9]स्त्रजप्तेन वारिणा । फडन्तेन तु संसिच्य हस्ते ध्यात्वा हरिं प[10]रम् ॥ १०
धर्मं ज्ञानं च वैराग्यमैश्वर्यं वह्निदिङ्मु[11]खान् । अधर्मादीनि गात्राणि पू[12]र्वादौ योगपीठके ॥ ११
कूर्मं पीठे ह्यनन्तं च प[13]द्मं सूर्यादिमण्डलम् । विमलाद्याः केसरस्थौ[14] ग्रहाः कर्णिकसंस्थिताः॥ १२
पूर्वं स्वहृदये ध्यात्वा आवाह्यार्चेच्च मण्डले । अर्घ्यं पाद्यं तथाऽऽचामं मधुपर्कं पुनश्च तत् ॥ १३
स्नानं वस्त्रोपवीतं च भूषणं गन्धपुष्पकम् । धूपदीपनैवेद्यानि पुण्डरीकाक्षविद्यया ॥ १४
यजेदङ्गानि पूर्वादौ द्वारि पूर्वे परेऽण्डजम् । दक्षे चक्रं गदां सौम्ये कोणे शङ्खं धनुर्न्यसेत् ॥ १५
देवस्य वामतो दक्षे चेषुधी खड्गमेव च । वामे चर्म श्रियं दक्षे पुष्टिं वामेऽग्रतो न्यसेत् ॥ १६
वनमालां च श्रीवत्सकौस्तुभौ दिक्पतीन्बहिः । स्वमन्त्रैः पूजयेत्सर्वा[15]न्विष्णोरर्चावसानतः॥ १७
व्यस्तेन च समस्तेन अङ्गैर्बीजेन वै यजेत् । जप्त्वा प्रदक्षिणीकृत्य स्तुत्वाऽर्घ्यं च समर्प्य च१८
हृदये विन्यसेद्ध्यात्वा अहं ब्रह्म हरिरित्यपि । आगच्छाऽऽवाहने योज्यं क्षमस्वेति विसर्जने॥

---

* वर्धनी—जलपात्रम् ।

---

१ च. °न्त्रान्योग° । २ ख. ग. घ. ङ. च. °प्रा यत्कृत्वा । ३ घ. विशेष° । ४ ख. ग. च. ध्यायेत्काया° । ५ क. ङ. च. °माह्लावये° । ६ ख. ग. घ. °द्धिरथा° । ७ ख. ग. °न्त्रैर्विसर्गकैः । ८ क. ङ. च. पादजानुकम् । ९ घ. °रष्टज° । १० क. घ. ङ. च. परे । ख. पदे । ११ क. ख. ग. घ. च. °मुखाः । अ° । १२ ङ. सप्ताऽऽदौ । १३ घ. यमं । १४ क. घ. ङ. च. °स्थानुग्रहा कर्णिकास्थिता । पू° । १५ क. ङ. च. °न्विष्णवोर्घावसानतः । घ. °न्विष्णुरर्घोव° ।

एवमष्टाक्षराद्यै[1]श्च पूजाः[2] कृत्वा विमुक्तिभाक्। एकमूर्त्यर्चनं प्रोक्तं नवव्यूहार्चनं शृणु ॥ २०
अङ्गुष्ठकद्वये न्यस्य वासुदेवं बलादिकान्। तर्जन्यादौ शरीरेऽथ शिरोललाटवक्त्रके ॥ २१
हृन्नाभिगुह्यजान्वङ्घ्रौ मध्ये[3] पूर्वादिकं यजेत्। एकपीठं नवव्यूहं नवपीठं च पूर्ववत् ॥ २२
नवाब्जे नवमूर्त्या च नवव्यूहं च पूर्ववत्[4]। पद्ममध्ये[5] च तत्स्थाने वासुदेवं[6] प्रयोजयेत् ॥ २३

इत्यादिमहापुराण आग्नेये सामान्य आदिमूर्त्यादिपूजाविधिकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५८२

---

अथ चतुर्विंशोऽध्यायः ।

---

कुण्डनिर्माणाद्यग्निकार्यादिकथनम् ।

नारद उवाच—

अग्निकार्यं प्रवक्ष्यामि येन स्यात्सर्वकामभाक्। चतुरभ्यधिकं विंशम[7]ङ्गुलं चतुरस्रकम् ॥ १
सूत्रेण सूत्रयित्वा तु क्षेत्रं तावत्खनेत्समम्। खातस्य मेखलाः कार्यास्त्यक्त्वा चैवाङ्गुलद्वयम् ॥ २
सत्त्वादिसंज्ञाः पूर्वास्या[8] द्वादशाङ्गुलमुच्छ्रिताः। अष्टाङ्गुला त्र्यङ्गुलाऽथ चतुरङ्गुलविस्तृता ॥ ३
योनिर्दशाङ्गुला रम्या षट्चतुस्त्र्यङ्गुलो[9]च्छ्रिता। क्रमान्निम्ना तु कर्तव्या पश्चिमाशाव्यवस्थिता ४
अश्वत्थपत्रसदृशी किंचित्कुण्डे निवेशिता। तुर्याङ्गुलायतं[10] नालं पञ्चदशाङ्गुलायतम् ॥ ५
मूलं तु त्र्यङ्गुलं योन्या अग्रं तस्याः षडङ्गुलम्। लक्षणं चैकहस्तस्य द्विगुणं द्विकरादिषु ॥ ६
एकत्रिमेखलं कुण्डं वर्तुलादि वदाम्यहम्। कुण्डार्धे तु स्थितं सूत्रं कोणे यदतिरिच्यते ॥ ७
तदर्धं दिशि संस्थाप्य भ्रामितं वर्तुलं भवेत्। कुण्डार्धं कोणभागार्धं दिशि[11] चोत्तरतो बहिः ॥ ८
पूर्वपश्चिमतो यत्नाल्लाञ्छयित्वा तु मध्यतः। संस्थाप्य भ्रामितं कुण्डमर्धचन्द्रं भवेच्छुभम् ॥ ९
पद्माकारे दलानि स्युर्मेखलायां[12] तु वर्तुले। बाहुदण्डप्रमाणं तु होमार्थं कारये[13]च्छुभम् ॥ १०
सप्तपञ्चाङ्गुलं वाऽपि चतुरस्रं तु कारयेत्। त्रिभागेण भवेद्वृ[14]त्तं मध्ये वृत्तं सुशोभनम् ॥ ११
तिर्यगूर्ध्वं समं खा[15]त्वा बहिरर्धं तु शोधयेत्। अङ्गुलस्य चतुर्थांशं शेषार्धार्धं तथाऽन्ततः ॥ १२
खातस्य मे[16]खलां रम्यां शेषार्धेन तु कारयेत्। कण्ठं त्रिभागविस्तारमङ्गुष्ठकसमायतम् ॥ १३
सार्धमङ्गुष्ठकं वाऽस्यात्तदग्रे तु मुखं भवेत्। चतुरङ्गुलविस्तारं पञ्चाङ्गुलमथापि वा ॥ १४
त्रिकत्र्यङ्गुलकं तत्स्यान्म[17]ध्यं तस्य सुशोभनम्। आयामस्तत्समस्तस्य मध्यनिम्नः सुशोभनः॥
सुषिरं कण्ठदेशे स्याद्विशेद्यावत्कनीयसी। शेषं कुण्डं तु कर्तव्यं यथारुचि विचित्रितम् ॥ १६
[*स्रुवं तु हस्तमात्रं स्याद्दण्डकेन समन्वितम्।] वर्टुकं[18](?) त्र्यङ्गुलं वृत्तं कर्तव्यं तु सुशोभनम् १७

---

* एतदर्ध ङ. पुस्तके नास्ति ।

---

१ क. ङ. च. °राद्याश्च । २ ग. घ. पूजां । ३ क. ङ. च. मध्यपू° । ४ ख. ग. घ. °त्। इष्टं म° । ५ ख. ग. घ. °ध्ये ततः स्था° । ६ ख. ग. घ. °वं च पूज° । ७ च. विंशं मण्डलं । ८ ख ग. घ. पूर्वाशा । च. पूर्वासा । ९ क. घ. °ङ्गुलाग्रगा । क्र° । ङ. °ङ्गुला यथा । क्र° । १० घ. तुर्याङ्गुलायता । ११ घ. दिशाश्चोत्त° । १२ क. ङ. च. °लानां तु । १३ ख. ग. ङ. घ. °येत्स्रुवम् । १४ ख. ग. ङ. °द्गर्भे म° । १५ क. घ. खाताद्बहि° । १६ क. ख. ङ. च. मेखलार्धेन । १७ ख. ङ. घ. °न्मध्यान्तं तु सु° । १८ क. चटुकं । ङ. चतुष्कं ।

( कुण्डनिर्माणाद्यग्निकार्यादिकथनम् )

गोपदं तु यथा मग्नमल्पपङ्के तथा भवेत् । उपलिप्य लिखेद्रेखामङ्गुलां वज्रनामिकाम् ॥ १८
सौम्याग्रां प्रथमां तस्यां रेखे पूर्वामुखे तयोः । मध्ये तिस्रस्तथा कुर्याद्दक्षिणादिक्रमेण ॥ १९
एवमुल्लिख्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित् । विष्टरं कल्पयेत्तेन तस्मिञ्शक्तिं तु वैष्णवीम् ॥२०
अलंकृतामृतुमतीं क्षिपेदग्निं हरिं स्मरन् । प्रादेशमात्राः समिधो दत्त्वा परिसमुह्य ताम् ॥ २१
दर्भैस्त्रिधा परिस्तीर्य पूर्वादौ, तत्र पात्रकम् । आसादयेदिध्मबर्हिर्द्वयं स्रुक्स्रुवकद्वयम् ॥ २२
आज्यस्थालीं चरुस्थालीं कुशाज्ये च प्रणीतया । प्रोक्षयित्वा प्र[illegible]र्णीं च गृहीत्वाऽऽपूर्य वारिणा
पवित्रान्तर्हिते हस्ते परिस्राव्य च तज्जलम् । अग्निं ध्यात्वाऽथ प्रोक्ष[illegible]ं योन्या अग्रे निधाय च
तदद्भिस्त्रिश्च संप्रोक्ष्य इध्मं विस्रस्य चाग्रतः । प्रणीतायां सपुष्पायां वि[illegible] ध्यात्वोत्तरेण च२५
आज्यस्थालीमथाऽऽज्येन संपूर्याग्रे निधाय च । संप्लवोत्पवनाभ्यां तु कुर्यादा[illegible]ज्यस्य [illegible]स्कृतिम्॥
अखण्डिताग्रौ निर्गर्भौ कुशौ प्रादेशमात्रकौ । ताभ्यामुत्तानपाणिभ्यामङ्गुष्ठानामिकेन तु ॥ २७
आज्यं ताभ्यां तु संगृह्य त्रिवारं चोर्ध्वमुत्क्षिपेत् । स्रुक्स्रुवौ चापि संगृह्य ताभ्यां प्रक्षाल्य वारिणा
प्रताप्य दर्भैः संमृज्य पुनः प्रक्षाल्य चैव हि । निष्टप्य स्थापयित्वा तु प्रणवेनैव साधकः ॥ २९
[*प्रणवादिनमोन्तेन पश्चाद्धोमं समाचरेत् । गर्भाधानादिकर्माणि यावदङ्गव्यवस्थया ॥ ३०
नामान्तं व्रतबन्धान्तं समावर्तावसानकम् । अधिकारावसानं वा कुर्याद्द्गानुसारतः ॥ ३१
प्रणवेनोपचारं तु कुर्यात्सर्वत्र साधकः ] । अङ्गैर्होमस्तु कर्तव्यो यथाविज्ञानुसारतः ॥ ३२
गर्भाधानं तु प्रथमं ततः पुंसवनं स्मृतम् । सीमन्तोन्नयनं जातकर्म नामानुशासनम् ॥ ३३
+चूडाकृतिं व्रतबन्धं वेदव्रतान्यशेषतः । समावर्तनं पत्न्या च योगो यागाधिकारकः ॥ ३४
हृदादिक्रमतो ध्यात्वा एकैकं कर्म पूज्य च । अष्टावष्टौ तु जुहुयात्प्रतिकर्माऽऽहुतीः पुनः ॥ ३५
पूर्णाहुतिं ततो दद्यात्स्रुचा मूलेन साधकः । वौषडन्तेन मन्त्रेण प्लुतं सुस्वरमुच्चरन् ॥ ३६
विष्णोर्वह्निं तु संस्कृत्य श्रपयेद्वैष्णवं चरुम् । आराध्य स्थण्डिले विष्णुं मन्त्रान्संस्मृत्य पूजयेत् ॥
आसनादिक्रमेणैव साङ्गावरणमुत्तमम् । गन्धपुष्पैः समभ्यर्च्य ध्यात्वा देवं सुरोत्तमम् ॥ ३८
आधायेध्ममथाऽऽघारावाज्यावग्नीशसंनिधौ । वायव्यनैर्ऋताशादिप्रवृत्तौ तु यथाक्रमम् ॥ ३९
आज्यभागौ ततो हुत्वा चक्षुषी दक्षिणोत्तरे । मध्ये तु जुहुयात्सर्वमन्त्रैरर्चाक्रमेण तु ॥ ४०
आज्येन, तर्पयेन्मूर्तिं दशांशेनाङ्गहोमकम् । शतं सहस्रं वाऽऽज्याद्यैः समिद्भिर्वा तिलैः सदा ४१
समाप्यार्चां तु होमान्तां शुचीञ्शिष्यानुपोषितान् । आहूयाग्रे निवेश्याथ ह्यस्त्रेण प्रोक्षयेत्पशून् ॥
शिष्यानात्मनि संयोज्याविद्याकर्मनिबन्धनैः । लिङ्गानुवृत्तं चैतन्यं सह लिङ्गेन पालितम् ॥ ४३
ध्यानमार्गेण संप्रोक्ष्य वायुबीजेन शोषयेत् । ततो दहनबीजेन सृष्टिं ब्रह्माण्डसंज्ञिकाम् ॥ ४४

* धनुश्चिह्नान्तर्गतं क. ङ. च. पुस्तकेषु नास्ति । + अत्र किंचित्त्रुटितमिति भाति ।

१ घ. वज्रनासिकाम् । २ ख. ग. घ. °कृत्वा मूर्तिमतीं । ३ घ. °ध्मवह्नी भूमौ च श्रुक्श्रुवद्वयम् । ४ क. ङ. च. अविस्राव्य । ५ घ. °म् । प्राङ्नीत्वा प्रोक्षणिपात्रं ज्योतिरग्रे । ६ घ. तयोस्तु । ७ ख. °ह्य त्रीन्वारानूर्ध्वं° । घ. °ह्य द्विर्नीत्वा त्रिरवाङ्क्षिपेत् । ८ घ. प्रक्षिप्य । ९ क. ङ. च. आतप्य । १० घ. °वद्दंशव्य° । ११ ख. निष्क्रमणं ततः । घ. ङ. नामान्नप्राशनम् । १२ घ. योगश्चाथाधिकारकः । १३ घ. संश्रपेत् । १४ क. ख. ङ. च. °संस्थितौ । वा° । १५ क. ख. घ. च. °मन्त्रानर्चा° । १६ क. ङ. च. °न्मूर्तेर्दशाङ्गेना° । घ. °न्मूर्तौ द° । १७ घ. सह । १८ घ. पाशितम् । टिप्पण्यां—दर्शितम् । १९ क. ङ. घ. संप्रेक्ष्य । २० घ. शोधयेत् ।

[*निर्दग्धां सकलां ध्यायेद्भस्मकूटनिभस्थिताम् । प्लावयेद्वारिणा भस्म संसारं वाङ्मयं स्मरेत् ॥
तत्र शक्तिं न्यसेत्पश्चात्पार्थिवीं बीजसंज्ञिताम् । ] तन्मात्राभिः समस्ताभिः संवृतं पार्थिवं शुभम्
अण्डं तदुद्भवं ध्यायेत्तदाधारं तदात्मकम् । तन्मध्ये चिन्तयेन्मूर्तिं पौरुषीं प्रणवात्मिकाम् ॥ ४७
लिङ्गं संक्रामयेत्पश्चात्पार्श्वस्थं पूर्वसंस्कृतम् । विभक्तेन्द्रियसंस्थानं क्रमाद्वृद्धं हि चिन्तयेत् ॥ ४८
ततोऽण्डमब्दमेकं तु स्थित्वा द्विशकलीकृतम् । द्यावापृथिव्यौ शकले तयोर्मध्ये प्रजापतिम् ॥ ४९
जातं ध्यात्वा पुनः प्रोक्ष्य प्रणवेन तु तं शिशुम् । मन्त्रात्मकतनुं कृत्वा यथान्यासं पुरोदितम् ॥
विष्णुहस्तं ततो मूर्ध्नि दत्त्वा ध्यात्वा तु वैष्णवम् । एवमेकं बहून्वाऽपि जपित्वा ध्यानयोगतः ॥
करौ संगृह्य मूलेन नेत्रे बद्ध्वा तु वाससा । नेत्रमन्त्रेण मन्त्री तानशेषानाहतेन तु ॥ ५२
कृतपूजो गुरुः सम्यग्देवदेवस्य तत्त्ववान् । शिष्यान्पुष्पाञ्जलिभृतः प्राङ्मुखानुपवेशयेत् ॥ ५३
अर्चयेयुश्च तेऽप्येवं प्रसूता गुरुणा हरिम् । क्षिप्त्वा पुष्पाञ्जलिं तत्र पुष्पादिभिरनन्तरम् ॥ ५४
वासुदेवार्चनं कृत्वा गुरोः पादार्चनं ततः । विधाय दक्षिणां दद्यात्सर्वस्वं चार्धमेव वा ॥ ५५
गुरुः संशिक्षयेच्छिष्यांस्तैः पूज्यो नामभिर्हरिः । विष्वक्सेनं यजेदीशं शङ्खचक्रगदाधरम् ॥ ५६
तर्जयन्तं च तर्जन्या मण्डलस्थं विसर्जयेत् । विष्णुनिर्माल्यमखिलं विष्वक्सेनाय चार्पयेत् ५७
प्रणीताभिस्तथाऽऽत्मानमभिषिच्य च कुण्डकम् । वह्निमात्मनि संयोज्य विष्वक्सेनं विसर्जयेत्
बुभुक्षुः सर्वमाप्नोति मुमुक्षुर्लीयते हरौ ॥ ५८

इत्यादिमहापुराण आग्नेये कुण्डनिर्माणाद्यग्निकार्यादिवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६४०

---

अथ पञ्चविंशोऽध्यायः ।

---

## वासुदेवादिमन्त्राणां लक्षणानि ।

**नारद उवाच—**

वासुदेवादिमन्त्राणां पूज्यानां लक्षणं वदे । वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ १
नमो भगवते चाऽऽदौ अ आ अं अः सबीजकाः । ओंकाराद्या नमोन्ताश्च नमो नारायणस्ततः
ॐ तत्सद्ब्रह्मणे चैव हूं नमो विष्णवे नमः । ॐ क्षौं ॐ नमो भगवते नारसिंहाय वै नमः ॥ ३
ॐ भूर्नमो भगवते वराहाय नराधिपाः (?)। [ +जपारुणहरिद्राभा नीलश्यामललोहिताः ॥ ४
मेघाग्निमधुपिङ्गाभा वल्लभा नवनायकाः । ] अङ्गानि स्वरबीजानां स्वनामान्तैर्यथाक्रमम् ॥ ५
हृदयादीनि कल्पेत विभक्तैस्तन्त्रवेदिभिः । व्यञ्जनादीनि बीजानि तेषां लक्षणमन्यथा ॥ ६
दीर्घस्वरैस्तु भिन्नानि नमोन्तान्तस्थितानि तु । अङ्गानि ह्रस्वयुक्तानि उपाङ्गानीति वर्ण्यते ॥ ७
विभक्तं नामवर्णान्तस्थितबीजात्मनुत्तमम् । दीर्घस्वरैश्च संयुक्तमङ्गोपाङ्गैः स्वरैः क्रमात् ॥ ८

---

* ख. पुस्तके धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. च. पुस्तकेषु नास्ति ।

---

१ घ. पुस्तकटिप्पण्यां—चाक्षयं । २ क. ङ. °श्चात्स्थण्डिले पू° । घ. °श्चादात्मस्थं पू° । ३ ख. घ. जनित्वा । ४ ङ. कलौ । ५ क. ख. संयुज्य । ६ ख. तान्संदेशेना° । घ. तान्सदनेना° । ७ ख. घ. °म् । अमन्त्रमर्च° । ८ घ. तज्जपन्तं ।

( वासुदेवादिमन्त्रलक्षणम् )

व्यञ्जनानां क्रमो ह्येष हृदयादिप्रकॢप्तये । स्वरबीजेषु नामान्तैर्विभक्तान्यङ्गनामभिः ॥ ९
युक्तानि हृदयादीनि द्वादशान्तानि पञ्चतः । आरभ्य कल्पयित्वा तु जपेत्सिद्ध्यनुरूपतः ॥१०
हृदयं च शिरश्चूडा कवचं नेत्रमस्त्रकम् । षडङ्गानि तु बीजानां मूलस्य द्वादशाङ्गकम् ॥ ११
हृच्छिरश्च शिखा चैव हस्तौ नेत्रे तथोदरम् । पृष्ठबाहूरुजानूंश्च जङ्घे पादौ क्रमान्न्यसेत् ॥ १२
कं ठं पं शं वैनतेयः खं ठं फं षं गदानुजम् । गं डं बं सं पुष्टिमन्त्रो घं टं भं हं श्रियै नमः ॥१३
चं णं मं क्षं पाञ्चजन्यं छं तं पं कौस्तुभाय च । जं खं वं सुदर्शनाय श्रीवत्साय सं वं दं च लम्
ॐ बं पं वनमालायै पद्मनाभाय वै नमः । निर्बीजपदमन्त्राणां पदैरङ्गानि कल्पयेत् ॥ १५
जात्यन्तैर्नामसंयुक्तैर्हृदयादीनि पञ्चधा । प्रणवं हृदयादीनि ततः प्रोक्तानि पञ्चधा ॥ १६
प्रणवं हृदयं पूर्वं परायेति शिरः शिखा । नाम्नाऽऽत्मना तु कवचमस्त्रं नामान्तकं भवेत् ॥ १७
ओं परास्त्रादिश्च नामात्मा चतुर्थ्यन्तो नमोन्तकः । एकव्यूहादिषड्विंशव्यूहान्तः स्यात्समो मनुः
कनिष्ठादिकराग्रेषु प्रकृतिं देहकेऽर्चयेत् । पराय पुरुषात्मा स्यात्प्रकृत्यात्मा द्विरूपकः ॥ १९
ॐ परायाग्न्यात्मने च वैस्वकौ वह्निरूपकः । अग्निं त्रिमूर्तौ विन्यस्य व्यापकं करदेहयोः ॥ २०
वायवर्कौ करशाखासु सव्येतरकरद्वये । हृदि मूर्तौ तनावेष त्रिव्यूहे तुर्यरूपके ॥ २१
ऋग्वेदं व्यापकं हस्ते अङ्गुलीषु यजुर्न्यसेत् । तलद्वयेऽथर्वरूपं शिरोहृच्चरणान्तगम् ॥ २२
आकाशं व्यापकं न्यस्य करे देहे तु पूर्ववत् । अङ्गुलीषु च वाय्वादि शिरोहृद्गुह्यपादके ॥ २३
वायुर्ज्योतिर्जलं पृथ्वी पञ्चव्यूहः समीरितः । मनः श्रोत्रं त्वग्दृग्जिह्वा घ्राणं षड्व्यूह ईरितः२४
व्यापकं मानसं न्यस्य ततोऽङ्गुष्ठादितः क्रमात् । मूर्धास्यहृद्गुह्यपत्सु कथितः करणात्मकः ॥ २५
आदिमूर्तिस्तु सर्वत्र व्यापको जीवसंज्ञितः । भूर्भुवः स्वर्महर्जनस्तपः सत्यं च सप्तधा ॥ २६
करे देहे न्यसेदाद्यमङ्गुष्ठादिक्रमेण तु । तलसंस्थः सप्तमश्च लोकात्मा देहके क्रमात् ॥ २७
देवः शिरोललाटास्यहृद्गुह्याङ्घ्रिषु संस्थितः । अग्निष्टोमस्तथोक्थ्यस्तु षोडशी वाजपेयकः॥ २८
अतिरात्रोऽप्तोर्यामश्च यज्ञात्मा सप्तरूपकः । धीरहं मनः शब्दश्च स्पर्शरूपरसास्ततः ॥ २९
गन्धो बुद्धिर्व्यापकं च करे देहे न्यसेत्क्रमात् । न्यसेदङ्घ्रौ च तलयोः के ललाटे मुखे हृदि ३०
नाभौ गुह्ये च पादे च अष्टव्यूहः पुमान्स्मृतः । जीवो बुद्धिरहंकारो मनः शब्दो गुणोऽनिलः ॥
रूपं रसो नवात्माऽयं जीव अङ्गुष्ठकद्वये । तर्जन्यादिक्रमाच्छेषं यावद्वामप्रदेशिनीम् ॥ ३२
देहे शिरोललाटास्यहृन्नाभिगुह्यजानुषु । पादयोश्च दशात्माऽयमिन्द्रो व्यापी समास्थितः ॥ ३३
अङ्गुष्ठकद्वये वह्नौ तर्जन्यादौ परेषु च । शिरोललाटवक्त्रेषु हृन्नाभिगुह्यजानुषु ॥ ३४
पादयोरेकादशात्मा मनः श्रोत्रं त्वगेव च । चक्षुर्जिह्वा तथा घ्राणं वाक्पाण्यङ्घ्री च पायु च ॥
उपस्थं मनसा ध्यायञ्श्रोत्रमङ्गुष्ठकद्वयम् । तर्जन्यादि क्रमादष्टावतिरिक्तं तलद्वये ॥ ३६
उत्तमाङ्गललाटास्यहृन्नाभ्यङ्घ्रिषु गुह्यके । ऊरुयुग्मे तथा जङ्घागुल्फपादेषु च क्रमात् ॥ ३७
विष्णुर्मधुहरश्चैव त्रिविक्रमकवामनौ । श्रीधरोऽथ हृषीकेशः पद्मनाभस्तथैव च ॥ ३८

---

१ ख. ग. घ. ङ. च. वर्म । २ ख. यमुनाभाय । घ. महानन्ताय । ३ क. ङ. च. °वचं अं आं नामा° । ४ घ. °ासस्याऽऽत्मनो म° । ५ क. घ. ङ. च. वाय्वर्कौ । ६ घ. च. °कौ च द्विरू° । ७ ङ. °त् । स्तनद्वये° । ८ ख. ग. घ. . शिरो हृच्चरणान्तकः । ९ ख. करणार्थकः । घ. करुणात्मकः । १० घ. लोकेशो । ११ ख. घ. ङ. च. देहः । १२ घ. °त्राप्तोर्यामं च य° । १३ क. ङ. च. °ण्यङ्घ्रिश्च पावकः ।

दामोदरः केशवश्च नारायण इतः परः । माधवश्चाथ गोविन्दो [1]विष्णुर्वै व्यापकं न्यसेत् ॥ ३९
अङ्गुष्ठादौ तले [2]चैव पादे जानुनि वै कटौ । [3]शिरःशिखोरःकव्यास्यजानुपादादिषु न्यसेत् ॥
द्वादशात्मा पञ्चविंशषड्विंशव्यूहकस्तथा । पुरुषो धीरहंकारो मनश्चित्तं च शब्दकः ॥ ४१
तथा स्पर्शो रसो रूपं गन्धः श्रोत्रं त्वचस्तथा । चक्षुर्जिह्वा नासिका च वाक्पाण्यङ्घ्री च पायवः
उपस्थो भूर्जलं तेजो वायुराकाशमेव च । पुरुषं व्यापकं न्यस्य अङ्गुष्ठादौ दश न्यसेत् ॥ ४३
शेषान्हस्ततले न्यस्य शिरस्यथ ललाटके । मुखहृन्नाभिगुह्योरुजान्वङ्घ्रिकरणोद्गते ॥ ४४
पादे जान्वोरुपस्थे च हृदये मूर्ध्नि च क्रमात् । परश्च पुरुषात्माऽऽदौ षड्विंशे पूर्ववत्परम् ॥ ४५
संचिन्त्य म[4]ण्डलेऽब्जे तु प्रकृतिं पूजयेद्बुधः । पूर्वयाम्याप्य[5]सौमीषु हृदयादीनि विन्यसेत् ॥४६
अस्त्रमग्न्यादिपत्रेषु वैनतेयादि पूर्ववत् । दिक्पालांश्च विधिस्तुल्यस्त्रिव्यूहेऽग्निश्च मध्यतः ॥ ४७
पूर्वादिदिग्दलावा[6]सैः पाद्यादिभिरलंकृतः । कर्णिकायां नाभसश्च मानसः कर्णिकास्थितः ॥४८
विश्वरूपं [7]सर्वसि[8]द्ध्यै यजेद्राज्यजयाय च । सर्वव्यूहैः समायुक्तमङ्गैरपि च पञ्चभिः ॥ ४९
गरुडाद्यैस्तथेन्द्राद्यैः सर्वान्कामानवाप्नुयात् । विष्वक्सेनं यजेन्नाम्ना[9] रौंबीजं नामसंयुतम् ॥ ५०

इत्यादिमहापुराण आग्नेये वासुदेवादिमन्त्रलक्षणवर्णनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९०

---

अथ षड्विंशोऽध्यायः ।

---

## मुद्राणां लक्षणानि ।

नारद उवाच—

मुद्राणां लक्षणं वक्ष्ये सांनिध्यादिप्रकारकम् । अञ्जलिः प्रथमा मुद्रा वन्दनी हृदयानुगा ॥ १
ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्दक्षिणाङ्गुष्ठब[10]न्धनं । सव्यस्य तस्य चाङ्गुष्ठो यस्य[11] चोर्ध्वं[12] प्रकीर्तितः २
तिस्रः साधारणा व्यूहे अथासाधारणा इमाः । कनिष्ठादिविमोकेन अष्टौ मुद्रा यथाक्रमम् ॥ ३
[ *अष्टानां पूर्वबीजानां क्रमशस्त्ववधारयेत् । ] अङ्गुष्ठेन कनिष्ठान्तं नामयित्वाऽङ्गुलित्रयम् ४
ऊर्ध्वं कृत्वा संमुखं च बीजाय नवमाय वै । वामहस्तमथोत्तानं [13]कृत्वोर्ध्वं नामयेच्छनैः ॥ ५
वराहस्य स्मृता मुद्रा अङ्गानां च क्रमादिमाः । एकैकां मोचयेन्मुन्द्रां वाममुष्टौ तथाऽङ्गुलीम् ॥६
आकुञ्चयेत्पूर्व[14]मुक्तां दक्षिणेऽप्येवमेव च । ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्मुद्रासिद्धिस्ततो भवेत् ॥ ७

इत्यादिमहापुराण आग्नेये मुद्रालक्षणवर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९७

---

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ घ. विष्णुं वै । २ घ. द्वौ च । ३ घ. °शिखरकव्यां च जानु° । ४ क. ङ. च °ण्डले द्वे तु । घ. °ण्डलैके तु । ५ क. ङ. च. °सौम्येषु । ६ ख. ग. °वासैर्वाद्या° । घ. °वासी राज्यादि° । ७ घ. सर्वस्थित्यै । ८ ख. ग. °वृद्ध्यै जपेद्रा° । ९ क. घ. ङ. च. °म्ना वै बीजं व्योमसंस्थितम् । १० क. ङ. च. °न्धनम् । संन्यस्य । ११ घ. चोर्ध्वे १२ क. ङ. प्रकीर्तितम् । १३ घ. कृत्वाऽर्ध । १४ घ. °मुद्रां द° ।

अथ सप्तविंशोऽध्यायः ।

---

## शिष्येभ्यो दीक्षादानविधिः ।

नारद उवाच—

वक्ष्ये दीक्षां सर्वदां च मण्डलेऽब्जे हरिं यजेत् । दशम्यामुपसंहृत्य यागद्रव्यं समस्तकम् ॥ १
विन्यस्य नारसिंहेन संमन्त्र्य शतवारकम् । सर्षपांस्तु फडन्तेन रक्षोघ्नान्सर्वतः क्षिपेत् ॥ २
शक्तिं सर्वात्मिकां तत्र न्यसेत्प्रासादरूपिणीम् । सर्वौषधीः समाहृत्य विकिरानभिमन्त्रयेत् ॥ ३
शतवारं शुभे पात्रे वासुदेवेन साधकः । संसाध्य पञ्चगव्यं तु पञ्चभिर्मूलमूर्तिभिः ॥ ४
नारायणान्तैः संप्रोक्ष्य कुशाग्रैस्तेन तां भुवम् । विकिरान्वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५
त्रिधा पूर्वामुखस्तिष्ठन्ध्यायन्विष्णुं तदा हृदि । वर्धन्या सहिते कुम्भे साङ्गं विष्णुं प्रपूजयेत् ॥ ६
शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्धनीम् । अच्छिन्नधारया सिञ्चन्नैशान्यन्तं नयेच्च ताम् ॥ ७
कलशं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि । संहृत्य विकिरान्दर्भैः कुम्भेशं कर्करीं यजेत् ॥ ८
सवस्त्रे पञ्चरत्नाढ्ये स्थण्डिले पूजयेद्धरिम् । अग्नावपि समभ्यर्च्य मन्त्रैः संतर्प्य पूर्ववत् ॥ ९
प्रक्षाल्य पुण्डरीकेण विलिप्यान्तःसुगन्धिना । उखामाज्येन संपूर्य गोक्षीरेण तु साधकः ॥ १०
आलोड्य वासुदेवेन ततः संकर्षणेन च । तण्डुलानाज्यसंसृष्टान्क्षिपेत्क्षीरे सुसंस्कृते ॥ ११
प्रद्युम्नेन समालोड्य दर्व्या संघट्टयेच्छनैः । पक्वमुत्तारयेत्पश्चादनिरुद्धेन देशिकः ॥ १२
प्रक्षाल्याऽऽलिप्य तत्कुर्यादूर्ध्वपुण्ड्रं तु भस्मना । नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतम् ॥ १३
भागमेकं तु देवाय कलशाय द्वितीयकम् । तृतीयेन तु भागेन प्रदद्यादाहुतित्रयम् ॥ १४
शिष्यैः सह चतुर्थं तु गुरुरद्यादिशुद्धये । नारायणेन संमन्त्र्य सप्तधा क्षीरवृक्षजम् ॥ १५
[*दन्तकाष्ठं भक्षयित्वा त्यक्त्वा ज्ञात्वा स्वपातकम् ।] ऐन्द्राग्न्युत्तरकैशानीमुखः स्नातो ह्यनुत्तमम्
शुभं सिद्धमिति ज्ञात्वाऽऽचम्य प्राणान्नियम्य च । पूजागारं विशेन्मन्त्री प्रार्थ्य विष्णुं प्रदक्षिणम्
संसारार्णवमग्नानां पशूनां पाशमुक्तये । त्वमेव शरणं देव सदा त्वं भक्तवत्सलः ॥ १८
देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः । पाशितान्मोचयिष्यामि त्वत्प्रसादात्पशूनिमान् ॥ १९
इति विज्ञाप्य देवेशं संप्रविश्य पशूंस्ततः । धारणाभिस्तु संशोध्य पूर्ववज्ज्वलनादिना ॥ २०
संस्कृत्य, मूर्त्या संयोज्य नेत्रे बद्ध्वा प्रदर्शयेत् । पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नाम योजयेत् ॥ २१
अमन्त्रमर्चनं तत्र पूर्ववत्कारयेत्क्रमात् । यस्यां मूर्तौ पतेत्पुष्पं तस्य तन्नाम निर्दिशेत् ॥ २२
शिखान्तसंमितं सूत्रं पादाङ्गुष्ठादि षड्गुणम् । कन्यया कर्तितं रक्तं पुनस्तत्त्रिगुणीकृतम् ॥ २३
यस्यां संलीयते विश्वं यतो विश्वं प्रसूयते । प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्र चिन्तयेत् ॥ २४
तेन प्राकृतिकान्पाशान्ग्रथित्वा तत्त्वसंख्यया । कृत्वा शरावे तत्सूत्रं कुण्डपार्श्वे निधाय तु ॥ २५

---

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. ग. °संस्कृत्य । २ ख. घ. °श्चन्नैशानान्तं । ३ ख. घ. च. सवस्त्रं पञ्चरत्नाढ्यं । ४ घ. मन्त्रान्संजप्य पू° । ५ क. ख. घ. च. आलोक्य । ६ ख. ग. ज्ञात्वोपपा° । ७ ख. ग. घ. ङ. च. °मुखं पातितमुत्त° । ८ ख. ग. °भं सिंहशतं हुत्वा° । ९ ख. ग. घ. °त्वा आचम्याथ प्रविश्य च । १० ख. ग. घ. °रं न्यसेन्म° । ११ ख. ग. प्राच्यर्य । घ. प्राच्यां । १२ क. ख. ग. घ. भक्तवत्सल । १३ ख. ग. °खानुसं° । १४ ख. ग. °ष्ठात्रिष° । १५ ख. ग. घ. कन्यासुक° ।

ततस्तत्त्वानि सर्वाणि ध्यात्वा शिष्यतनौ न्यसेत् । सृष्टिक्रमात्प्रकृत्यादिपृथिव्यन्तानि देशिकः
त्रेधा वा पञ्चधा वा स्याद्दशद्वादशधाऽपि च । दातव्यः सर्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥ २७
अङ्गैः पञ्चभिरत्नान्तं निखिलं प्रकृतिक्रमात् । तन्मात्रात्मनि संहृत्य मायासूत्रे पशोस्तनौ ॥ २८
प्रकृतिर्लिङ्गशक्तिश्च कर्ता बुद्धिस्तथा मनः । पञ्चतन्मात्रबुद्ध्याख्यं कर्माख्यं भूतपञ्चकम् ॥ २९
ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया । हुत्वा संपातविधिना सृष्टेः सृष्टिक्रमेण तु ॥ ३०
एकैकं शतहोमेन दत्त्वा पूर्णाहुतिं ततः । शरावे संपुटीकृत्य कुम्भेशाय निवेदयेत् ॥ ३१
अधिवास्य यथान्यायं भक्तं शिष्यं तु दीक्षयेत् । करणीं कर्तरीं चापि रजांसि खटिकामपि ॥ ३२
अन्यदप्युपयोगि स्यात्सर्वं तद्वामगोचरे । संस्थाप्य मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ३३
नमो भूतेभ्यश्च बलिः कुशे देयः स्मरन्हरिम् । मण्डपं भूषयित्वाऽथ वितानघटलड्डुकैः ॥ ३४
मण्डलेऽथ यजेद्विष्णुं ततः संतर्प्य पावकम् । आहूय दीक्षयेच्छिष्यान्बद्धपद्मासनस्थितान् ॥ ३५
संप्रोक्ष्य विष्णुहस्तेन मूर्धानं स्पृश्य वै क्रमात् । प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैवताम् ३६
सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत्क्रमात् । तन्मात्रभूतां सकलां जीवेन समतां गताम् ३७
ततः संप्रार्थ्य कुम्भेशं सूत्रं संस्कृत्य देशिकः । अग्नेः समीपमागत्य पार्श्वे तं संनिवेश्य तु ॥ ३८
मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तम् । उदासीनमथाऽऽसाद्य पूर्णाहुत्या च देशिकः ॥ ३९
शुक्लं रजः समादाय मूलेन शतमन्त्रितम् । संताड्य हृदयं तेन हुंफट्कारान्तसंयुतैः ॥ ४०
वियोगपदसंयुक्तैर्बीजैः पादादिभिः क्रमात् । पृथिव्यादीनि तत्त्वानि विश्लिष्य जुहुयात्ततः ४१
वह्नावखिलतत्त्वानामालये व्याहृते हरौ । नीयमानं क्रमात्सर्वं तत्त्वाधारं स्मरेद्बुधः ॥ ४२
ताडनेन वियोज्यैवमादायाऽऽपाद्य साम्यताम् । प्रकृत्याऽऽहृत्य जुहुयाद्यथोक्ते जातवेदसि ॥ ४३
गर्भाधानं जातकर्म भोगं चैव लयं तथा । कृत्वाऽष्टौ तत्र तत्रैव ततः शुद्धं तु होमयेत् ॥ ४४
शुद्धं तत्त्वं समुद्धृत्य पूर्णाहुत्या तु देशिकः । संधयेद्धि परे तत्त्वे यावदव्याकृतं क्रमात् ॥ ४५
तत्परं ज्ञानयोगेन विलाप्य परमात्मनि । विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ॥ ४६
निवृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः । दद्यात्पूर्णाहुतिं पश्चादेवं दीक्षा समाप्यते ॥ ४७
प्रयोगमन्त्रान्वक्ष्यामि यैर्दीक्षाहोमसंलयः । ॐ यं भूतानि [ *विशुद्धं हुं फट् ॥ ४८
अनेन ताडनं कुर्याद्वियोजनमिह द्वयम् । ॐ यं भूतान्यापातयेऽहम् ॥ ४९
आदानं कृत्वा चानेन प्रकृत्या योजनं शृणु । ॐ यं भूतानि पुंश्च ॥ ५०
होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुम् । ] ॐ भूतानि संहर स्वाहा ॥ ५१
ॐ अं ॐ नमो भगवते वासुदेवाय अं वौषट् । पूर्णाहुत्यनन्तरं तु तत्त्वे शिष्यं तु संधयेत् ॥ ५२
एवं तत्त्वानि सर्वाणि क्रमात्संशोधयेद्बुधः । नमोन्तेन स्वबीजेन ताडनादिपुरःसरम् ॥ ५३
ॐ रां कर्मेन्द्रियाणि, ॐ दें बुद्धीन्द्रियाणि [च] । यंबीजेन समानं तु ताडनादिप्रयोगकम् ॥ ५४
ॐ सुं तं गन्धतन्मात्रे बिम्बं युङ्क्ष्व हुं फट् । ॐ सं पाहि हां ॐ स्वं स्वं युङ्क्ष्व प्रकृत्या अं
जं हुं गन्धतन्मात्रे संहर स्वाहा ॥ ५५

* क. ड च. पुस्तकेष्वयं ग्रन्थो नास्ति ।

१ घ. टिप्पण्यां—°कः । तत्राऽऽत्मा प° । २ क. ङ. च. पञ्चाङ्गं । ३ ख. ग. घ. °द्वायुगो° । ४ ख. ग. घ. कुशे शेते । ५ क. ङ. च. विश्लेष्य । ६ क. ङ. च. व्याहृतौ । ७ ख. ग. घ. शाम्यताम् । ८ घ. °पुंश्चाहो । हो° । ९ घ. °दिप्रयोगकम् । १० घ. ॐ सुं गन्धतन्मात्रे नियुङ्क्ष्व हुं ।

( शिष्येभ्यो दीक्षादानविधिः )

ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते । ॐ रां रसतन्मात्रे । ॐ तें रूपतन्मात्रे । ५६
ॐ वं स्पर्शतन्मात्रे । ॐ यं शब्दतन्मात्रे । ॐ भं नमः । ॐ मौ अहंकारः । ॐ नं बुद्धौ । ॐ
ॐ ॐ प्रकृतौ ॥ ५७
एकमूर्तावयं प्रोक्तो दीक्षायोगः समासतः । एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः ॥ ५८
दग्ध्वा परस्मिन्संदध्यान्निर्वाणे प्रकृतिं नरः । शोधयित्वाऽथ भूतानि कर्माक्षाणि विशोधयेत् ५९
बुद्ध्यक्षाण्यथ तन्मात्रं मनो ज्ञानमहंकृतिम् । लिङ्गात्मानं विशोध्यान्ते प्रकृतिं शोधयेत्पुनः ॥ ६०
पुरुषं प्राकृतं शुद्धमैश्वरे धाम्नि संस्थितम् । स्वगोचरीकृताशेषभोगं मुक्तौ कृतास्पदम् ॥ ६१
ध्यायेत्पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारदा । अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समम् ॥ ६२
क्रमादेवं विशोध्यान्ते सर्वासिद्धिसमन्वितम् । ध्यायन्पूर्णाहुतिं दद्याद्दीक्षेयं साधके स्मृता ॥ ६३
द्रव्यस्य वा न संपत्तिरशक्तिर्वाऽऽत्मनो यदि । इष्ट्वा देवं यथापूर्वं सर्वोपकरणान्वितः ॥ ६४
सद्योऽधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः । भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः ६५
शिष्यो नातिधनी यस्तु स्थण्डिलेऽभ्यर्च्य दीक्षयेत् । अध्वानं निखिलं दैवं भौतं वाऽध्या-
त्मिकीकृतम् ॥ ६६
सृष्टिक्रमेण शिष्यस्य देहे ध्यात्वा तु देशिकः । अष्टाष्टाहुतिभिः पूर्वं क्रमात्संतर्प्य सृष्टिमान् ६७
स्वमन्त्रैर्वासुदेवादीञ्ज्वलनादीन्विसर्जयेत् । होमेन शोधयेत्पश्चात्संहारक्रमयोगतः ॥ ६८
यानि सूत्राणि बद्धानि मुक्त्वा कर्माणि देशिकः । शिष्यदेहात्समाहृत्य क्रमात्तत्त्वानि शोधयेत्
अग्नौ प्राकृतिके विष्णौ लयं नीत्वाऽऽधिदैविके । शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु संधयेत् ॥
शिष्ये प्रकृतिमापन्ने दग्ध्वा प्राकृतिकान्गुणान् । मोचयेदधिकारे वा नियुञ्ज्याद्देशिकः शिशून् ॥
अथान्यां शक्तिदीक्षां वा कुर्याद्भावे स्थितो गुरुः । भक्त्या संप्रतिपन्नानां यतीनां निर्धनस्य च
संपूज्य स्थण्डिले विष्णुं पार्श्वस्थं स्थाप्य पुत्रकम् । देवताभिमुखः शिष्यस्तिर्यगास्यः स्वयं स्थितः
अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितम् । शिष्यदेहे तथा देवमाधिदैविकयाजनम् ॥
ध्यानयोगेन संचिन्त्य पूर्ववत्ताडनादिना । क्रमात्तत्त्वानि सर्वाणि शोधयेत्स्थण्डिले हरौ ॥
ताडनेन वियोज्याथ गृहीत्वाऽऽत्मनि तत्पुनः । देवे संयोज्य संशोध्य गृहीत्वा तत्स्वभावतः ॥
आनीय शुद्धतत्त्वेन संधयित्वा क्रमेण तु । शोधयेद्ध्यानयोगेन सर्वत्रोत्तानमुद्रया ॥ ७७
शुद्धेषु सर्वतत्त्वेषु प्रधाने चेश्वरे स्थिते । दग्ध्वा निर्वापयेच्छिष्यान्पदे चैशे नियोजयेत् ॥ ७८
निनयेत्सिद्धिमार्गेण साधकं देशिकोत्तमः । एवमेवाधिकारस्थो गृही कर्माण्यतन्द्रितः ॥ ७९
आत्मानं शोधयंस्तिष्ठेद्यावद्रागक्षयो भवेत् । क्षीणरागमथाऽऽत्मानं ज्ञात्वा संशुद्धकिल्बिषः ॥
आरोप्य पुत्रे शिष्ये वा ह्यधिकारं तु संयमी । दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः
शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान् ॥ ८१

इत्यादिमहापुराण आग्नेये सर्वदीक्षाविधिकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७७८

---

१ क. भुक्त्वा । २ क. ङ. च. °यं साधके स्मृता । ३ ख. ग. घ. °दीक्षनना° । ४ ख. ग. °न्विवर्ज° । ५ ख. ग. घ. °तः । योनिसु° । ६ क. ङ. च. संनयेत् । घ. साधयेत् । ७ ङ. सतीनां । ८ ख. ग. घ. °याचन° । ९ घ. तत्परः । १० घ. शुद्धभावेन । ११ क. च. °ध्यान्यादवेशे । १२ क. ख. ग. घ. ङ. °र्गे वा सा° ।

अथाष्टाविंशोऽध्यायः ।

---

आचार्याभिषेकविधानम् ।

नारद उवाच—

अभिषेकं प्रवक्ष्यामि यथा[1] कुर्यात्तु पुत्रकः । सिद्धिभाक्साधको येन रोगी रोगात्प्रमुच्यते ॥ १
राज्यं राजा सुतं[2] स्त्री च प्राप्नुयान्मलनाशनम्[3] । मृत्साकुम्भान्सुरत्नाढ्यान्मध्यपूर्वादितो न्यसेत्
सहस्रावर्तितान्कुर्यादथवा शतवर्तितान् । मण्डपे मण्डले विष्णुं प्राच्यैशान्यो[4]श्च पीठके ॥ ३
निवेश्य[5] संकलीकृत्य पुत्रकं साधकादिकम् । अभिषेकं समभ्यर्च्य कुर्याद्गीतादिपूर्वकम् ॥ ४
दद्याच्च योगपीठादींस्त्वनुग्राह्यास्त्वया नराः । गुरुश्च समयान्ब्रूयाद्गुरुः[6] शिष्योऽथ सर्वभाक् ॥ ५

इत्यादिमहापुराण आग्नेय आचार्याभिषेकविधिवर्णनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

**आदितः श्लोकानां समष्ट्यङ्काः—९८३**

---

अथैकोनत्रिंशोऽध्यायः ।

---

मन्त्रसाधनविधिः सर्वतोभद्रादिमण्डललक्षणानि च ।

नारद उवाच—

साधकः साधयेन्मन्त्रं देवतायतनादिके । शुद्धभूमौ गृहे प्राच्य मण्डले हरिमीश्वरम् ॥ १
चतु[7]रस्रीकृते क्षेत्रे मण्डलादीनि वै लिखेत् । रसबाणाक्षिकोष्ठेषु सर्वतोभद्रमालिखेत् ॥ २
षट्[8]त्रिंशत्कोष्ठकैः पद्मं पीठे[9] पङ्क्त्या बहिर्भवेत् । द्वाभ्यां तु वीथिका तस्माद्द्वाभ्यां द्वाराणि दिक्षु च
वर्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम् । पद्मार्धे भ्रामयित्वा तु भागं द्वादशमं(कं) बहिः ॥ ४
विभज्य भ्रामयेच्छेषं चतुष्क्षेत्रं तु वर्तुलम् । प्रथमं कर्णिकाक्षेत्रं केसराणां द्वितीयकम् ॥ ५
तृतीयं दलसंधीनां दलाग्राणां चतुर्थकम् । प्रसार्य कोणसूत्राणि कोणदिङ्मध्यमं ततः ॥ ६
निधाय केसराग्रे तु दलसंधींस्तु लाञ्छयेत् । पातयित्वाऽथ सूत्राणि तत्र पत्राष्टकं लिखेत् ॥ ७
दलमध्यान्तरालं तु मानं मध्ये निधाय तु । दलाग्रं भ्रामयेत्तेन तदग्रं तदनन्तरम् ॥ ८
तदन्तरालं तत्पार्श्वे कृत्वा बाह्यक्रमेण च । केसरौ तु लिखेद्द्वौ द्वौ दलमध्ये ततः पुनः ॥ ९
पद्मलक्ष्मैतत्सामान्यं[10] तद्द्विषड्दलमुच्यते । कर्णिकार्धेन मानेन प्राक्संस्थं भ्रामयेत्क्रमात् ॥ १०
तत्पार्श्वे भ्रमयोगेण कुण्डल्यः षड्भवन्ति हि । एवं द्वादश मत्स्याः स्युर्द्विषट्कदलकं च तैः ॥
पञ्चपत्रादिसिद्ध्यर्थं मत्स्यैः कृत्वैवमब्जकम् । व्योमरेखाबहिःपीठं तत्र कोष्ठानि मार्जयेत् ॥ १२
त्रीणि कोणेषु पादार्थं द्विद्विकान्यपराणि तु । चतुर्दिक्षु विलिप्तानि पत्रकाणि भवन्त्युत[11] ॥
ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थं तु विलोपयेत् । द्वाराण्याशासु कुर्वीत चत्वारि चतसृष्वपि ॥
द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः । तत्पार्श्व उपशोभास्तु तावत्यः परिकीर्तिताः ॥

---

१ ख. ग. घ. °थाऽऽचार्यस्तु पुत्रकः । सि° । २ ख. ग. पतिं । ३ क. घ. ङ. च. °म् । मूर्तिकु° । ख. °म् । मृद्भिः कु° । ४ ख. ग. घ. च. °शान्यां च पी° । ५ क. ख. ङ. च. सकलीकृत्य । घ. शकलीकृत्य । ६ घ. °याद्गुरुः शि° । ७ ङ. °तुरः स्रीकृ° । ८ ख. ग. षड्विंश° । ९ ख. घ. पीठं । १० क. घ. ङ. च. °न्यं द्विषट्कद° । ११ ख. ग. °वन्त्यतः । त° ।

समीप उपशोभानां कोणास्तु परिकीर्तिताः । चतुर्दिक्षु ततो द्वे द्वे चिन्तयेन्मध्यकोष्ठकैः ॥ १६
चत्वारि बाह्यतो मृज्यादेकैकं पार्श्वयोरपि । शोभार्थं पार्श्वयोस्त्रीणि त्रीणि लुम्पेद्दलस्य तु ॥
तद्वद्विपर्यये कुर्यादुपशोभां ततः परम् । कोणस्यान्तर्बहिस्त्रीणि चिन्तयेन्निर्विभेदतः ॥ १८
एवं षोडशकोष्ठं स्यादेवमन्यत्तु मण्डलम् । द्विषट्कभागे षड्विंशत्पदं पद्मं तु वीथिका ॥ १९
एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्ववत् । द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ॥ २०
द्विहस्ते हस्तमात्रं स्याद्वृद्ध्या द्वारेण चाऽऽचरेत्[1] । अपीठं[2] चतुरस्रं स्याद्द्विकरं चक्रपङ्कजम् ॥ २१
पद्मार्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः स्मृता । अष्टाभिस्त्वारकान्कुर्यान्नेमिं तु चतुरङ्गुलैः ॥
त्रिधा विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् । पद्मान्तस्त्वारसिद्ध्यर्थं तेष्वास्फाल्य लिखेदरान्
इन्दीवरदलाकारानथ वा मातुलुङ्गवत् । पद्मपत्रायतान्वाऽपि लिखेदिच्छानुरूपतः ॥ २४
भ्रामयित्वा बहिर्नेमावरसंध्यन्तरे स्थितः । भ्रामयेदरमूलं तु संधिमध्ये व्यवस्थितः ॥ २५
अरमध्ये स्थितो मध्यमराणां भ्रामयेत्समम् । एवं सिध्यन्त्यराः सम्यङ्मातुलिङ्गनिभाः समाः ॥
विभज्य सप्तधा क्षेत्रं चतुर्दशकरं समम् । त्रिधा कृते शतं ह्यत्र षण्णवत्यधिकानि तु ॥ २७
कोष्ठकानि चतुर्भिस्तैर्मध्ये भद्रं समालिखेत् । परितो विसृजेद्वीथ्यै तथा दिक्षु समालिखेत् ॥२८
कमलानि पुनर्वीथ्यै परितः परिमृज्य तु । द्वे द्वे मध्यमकोष्ठे तु ग्रीवार्थं दिक्षु लोपयेत् ॥ २९
चत्वारि बाह्यतः पश्चात्त्रीणि त्रीणि तु लोपयेत् । ग्रीवापार्श्वे बहिस्त्वेकः शोभा सा परिकीर्तिता
विसृज्य बाह्यकोणेषु सप्तान्तस्त्रीणि मार्जयेत् । मण्डलं नवनालं स्यान्नवव्यूहं[3] हरिं यजेत् ॥ ३१
पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपगम् । द्वात्रिंशद्धस्तकं क्षेत्रं भक्तं द्वात्रिंशता समम् ॥ ३२
एवं कृते चतुर्विंशत्यधिकं तु सहस्रकम् । कोष्ठकानां समुद्दिष्टं मध्ये षोडशकोष्ठकैः ॥ ३३
भद्रकं परिलिख्याथ पार्श्वे पङ्क्तिं विसृज्य तु । ततः षोडशभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत् ॥३४
ततोऽपि पङ्क्तिं संमृज्य तद्वत्षोडशभद्रकम् । लिखित्वा परितः पङ्क्तिं विमृज्याथ प्रकल्पयेत् ॥ ३५
द्वारद्वादशकं दिक्षु त्रीणि त्रीणि यथाक्रमम्[4] । षड्बहिः परिलुप्यान्तर्मध्ये चत्वारि पार्श्वयोः ३६
चत्वार्यन्तर्बहिर्द्वे तु शोभार्थं परिमृज्य तु । उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च बाह्यतः ॥ ३७
परिमृज्य तथा शोभां पूर्ववत्परिकल्पयेत् । बहिः कोणेषु सप्तान्तस्त्रीणि कोष्ठानि मार्जयेत्॥ ३८
पञ्चविंशतिकव्यूहे परं ब्रह्म यजेत्कजे[5] । मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ॥ ३९
वाराहं पूजयित्वा तु पूर्वपद्मे ततः क्रमात् । व्यूहान्संपूजयेत्तावद्यावत्षड्[6]विंशगो भवेत् ॥ ४०
[* यथोक्तं व्यूहमखिलमेकस्मिन्[7]मण्डले क्रमात् । यष्टव्यमिति मन्त्रेण[8] प्रचेता मन्यतेऽध्वरम्]॥४१॥
सत्यस्तु मूर्तिभेदेन विभक्तं मन्यतेऽच्युतम् । चत्वारिंशत्करं क्षेत्रं ह्युत्तरं विभजेत्क्रमात् ॥ ४२
एकैकं सप्तधा भूयस्तथैकैकं द्विधा पुनः । चतुःषष्ट्युत्तरं[9] सप्त शतान्येकं सहस्रकम् ॥ ४३
कोष्ठकानां समुद्दिष्टं मध्ये षोडशकोष्ठकैः । पार्श्वे वीथीं ततश्चाष्टभद्राण्यथ च वीथिका ॥ ४४
षोडशाब्जान्यथो वीथी चतुर्विंशतिपङ्कजम् । वीथीपद्मानि द्वात्रिंशत्पङ्क्तिवीथीकजान्यथ ॥ ४५

---

* धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

---

१ ख. स्याद्वृद्ध्याधारे । २ ख. °भिस्तार° । घ. °भिद्वार° । ३ घ. °वभागं ह° । ४ ङ. °म् । यद्बहिः परिलुप्यन्ते मध्ये । ५ क. ङ. °जेत्कुजे । च. °जेत्कुले । म° । ६ घ. °त्षड्विंशमो भ° । ७ घ. °स्मिन्पङ्कजे क्र° । ८ क. घ. च. यत्नेन । ९ च. वीर्ये ।

[*वसनत्रितयं नाभौ चिन्तयेद्देशिकोत्तमः । पद्मं च द्वादशदलं पद्ममध्ये विचिन्तयेत् ॥] ४४
तन्मध्ये पौरुषीं शक्तिं ध्यात्वाऽभ्यर्च्य च देशिकः । प्रतिमायां हरिं न्यस्य तत्र तं पूजयेत्सुरान्
गन्धपुष्पादिभिः सम्यक्साङ्गं सावरणं क्रमात् । [+द्वादशाक्षरबीजैस्तु केशवादीन्समर्चयेत्॥ ४६
द्वादशारे मण्डले तु लोकपालादिकं क्रमात् ।] प्रतिमामर्चयेत्पश्चाद्गन्धपुष्पादिभिर्द्विजः ॥ ४७
पौरुषेण तु सूक्तेन श्रियाः सूक्तेन पिण्डिकाम् । जननादिक्रमात्पश्चाज्जनयेद्वैष्णवानलम् ॥ ४८
हुत्वाऽग्निं वैष्णवैर्मन्त्रैः कुर्याच्छान्त्युदकं बुधः । तत्सिक्त्वा प्रतिमामूर्ध्नि वह्निप्रणयनं चरेत् ॥४९
दक्षिणेऽग्निं हुतमिति कुण्डेऽग्निं प्रणयेद्बुधः । अग्निमग्नीति पूर्वे तु कुण्डेऽग्निं प्रणयेद्बुधः ॥ ५०
उत्तरे प्रणयेदग्निमग्निमग्नी हवामहे । अग्निप्रणयने मन्त्रस्त्वमग्ने द्युभिरुच्यते ॥ ५१
पलाशसमिधानां तु अष्टोत्तरसहस्रकम् । कुण्डे कुण्डे होमयेच्च व्रीहीन्वेदादिकैस्तथा ॥ ५२
साज्यांस्तिलान्व्याहृतिभिर्मूलमन्त्रेण वै घृतम् । कुर्यात्ततः शान्तिहोमं मधुरात्रितयेन च ॥ ५३
द्वादशार्णैः स्पृशेत्पादौ नाभिं हृन्मस्तकं ततः । घृतं दधि पयो हुत्वा स्पृशेन्मूर्धन्यथो ततः॥५४
स्पृष्ट्वा शिरोनाभिपादांश्चतस्रः स्थापयेन्नदीः । गङ्गा च यमुना गोदा क्रमानाम्ना सरस्वती॥५५
देहे तु विष्णुगायत्र्या गायत्र्या श्रपयेच्चरुम् । होमयेच्च बलिं दद्यादुत्तरे भोजयेद्द्विजान् ॥ ५६
मांसाधिपानां तुष्ट्यर्थं हेम गां गुरवे ददेत् । दिक्पतिभ्यो बलिं दत्त्वा रात्रौ कुर्याच्च जागरम् ॥
ब्रह्मगीतादिशब्देन सर्वभागधिवासनात् ॥ ५८

इत्यादिमहापुराण आग्नेये देवताधिवासनविधिकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७०२

---

अथ षष्टितमोऽध्यायः ।

---

## वासुदेवादिदेवतानां सामान्यः प्रतिष्ठाविधिः ।

श्रीभगवानुवाच—

पिण्डिकास्थापनार्थं तु गर्भागारं तु सप्तधा । विभजेद्ब्रह्मभागे तु प्रतिमां स्थापयेद्बुधः ॥ १
देवमानुषपैशाचभागेषु न कदाचन । ब्रह्मभागं परित्यज्य किंचिदाश्रित्य चाण्डज ॥ २
देवमानुषभागाभ्यां स्थाप्या यत्नात्तु पिण्डिका । नपुंसकशिलायां तु रत्नन्यासं समाचरेत् ॥ ३
नारसिंहेन हुत्वाऽथ रत्नन्यासं च तेन वै । व्रीहीन्रत्नानि धातूंश्च लोहान्वै चन्दनादिकान्॥ ४
पूर्वादिनवगर्तेषु न्यसेन्मध्ये यथारुचि । अथ चेन्द्रादिमन्त्रैश्च गर्तं गुग्गुलुनाऽऽवृतम् ॥ ५
रत्नन्यासविधिं कृत्वा प्रतिमामालभेद्गुरुः । सशलाकैर्दर्भपुञ्जैः सहदेवैः समन्वितैः ॥ ६
सबाह्यान्तैश्च संस्कृत्य पञ्चगव्येन शोधयेत् । प्रोक्षयेद्दर्भतोयेन नदीतीर्थोदकेन च ॥ ७
होमार्थे स्थण्डिलं कुर्यात्सिकताभिः समन्ततः । सार्धहस्तप्रमाणं तु चतुरस्रं सुशोभनम् ॥ ८
अष्टदिक्षु यथान्यासं कलशानपि विन्यसेत् । पूर्वाद्यानष्ट वर्णेन अग्निमानीय संस्कृतम् ॥ ९

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थः क. ङ. च. पुस्तकेषु नास्ति । + ङ. पुस्तकेऽयं ग्रन्थो नास्ति ।

---

१ ख. साधारणं । २ क. ङ. च. 'येच्च गाः । ग' । ३ घ. दहेत्तु । ४ घ. सामाधिपानां । ५ क. ङ. च. च. 'येद्गन्धतो' ।

( वासुदेवादिदेवतानां सामान्यः प्रतिष्ठाविधिः )

त्वमग्ने द्युभिरिति च गायत्र्या समिधो हुनेत् । अष्टार्णेनाष्टशतकमाज्यं पूर्णां प्रदापयेत् ॥ १०
शान्त्युदकं ताम्रपत्रे मूलेन शतमन्त्रितम् । सिञ्चेद्देवस्य तन्मूर्ध्नि श्रीश्च ते ह्यनया ऋचा ॥ ११
ब्रह्मयानेन चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते । त्वं विष्णोरिति मन्त्रेण प्रासादाभिमुखं नयेत् ॥ १२
शिबिकायां हरिं स्थाप्य भ्रामयीत पुरादिकम् । गीतवेदादिशब्दैश्च प्रासादद्वारि धारयेत् ॥१३
स्त्रीभिर्विप्रैर्मङ्गलाष्टघटैः संस्नापयेद्धरिम् । ततो गन्धादिनाऽभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १४
अतो देवेति वस्त्राद्यमष्टाङ्गार्घ्यं निवेद्य च । स्थिरे लग्ने पिण्डिकायां देवस्य त्वेति धारयेत् ॥१५
ॐ त्रैलोक्यविक्रान्ताय नमस्तेऽस्तु त्रिविक्रम । संस्थाप्य पिण्डिकायां तु स्थिरं कुर्याद्विचक्षणः ॥
ध्रुवा द्यौरिति मन्त्रेण विश्वतश्चक्षुरित्यपि । पञ्चगव्येन संस्नाप्य क्षाल्य गन्धोदकेन च ॥ १७
पूजयेत्सकलीकृत्य साङ्गं साधारणं हरिम् । ध्यायेत्स्वं तत्र मूर्तिं तु पृथिवी तस्य पीठिका ॥ १८
कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः । जीवमावाहयिष्यामि पञ्चविंशतितत्त्वगम् ॥ १९
चैतन्यं परमानन्दं जाग्रत्स्वप्नविवर्जितम् । देहेन्द्रियमनोबुद्धिप्राणाहंकारवर्जितम् ॥ २०
ब्रह्मादिस्तम्बपर्यन्तं हृदयेषु व्यवस्थितम् । हृदयात्प्रतिमाबिम्बे स्थिरो भव परेश्वर ॥ २१
सजीवं कुरु बिम्बं त्वं सबाह्याभ्यन्तरस्थितः । अङ्गुष्ठमात्रः पुरुषो देहोपाधिषु संस्थितः ॥ २२
ज्योतिर्ज्ञानं परं ब्रह्म एकमेवाद्वितीयकम् । सजीवीकरणं कृत्वा प्रणवेन निबोधयेत् ॥ २३
सांनिध्यकरणं नाम हृदयं स्पृश्य वै जपेत् । सूक्तं तु पौरुषं ध्यायन्निदं गुह्यमनुं जपेत् ॥ २४
नमस्तेऽस्तु सुरेशाय संतोषविभवात्मने । ज्ञानविज्ञानरूपाय ब्रह्मतेजोनुयायिने ॥ २५
गुणातिक्रान्तरूपाय पुरुषाय महात्मने । अक्षयाय पुराणाय विष्णो संनिहितो भव ॥ २६
यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः । तत्सर्वमेकतो नीतमस्मिन्देहे विबुध्यताम् ॥ २७
आत्मानं संनिधीकृत्य ब्रह्मादिपरिवारकान् । स्वनाम्ना स्थापयेदन्यानायुधादीन्समुद्रया ॥ २८
यात्रावर्षादिकं दृष्ट्वा ज्ञेयः संनिहितो हरिः । नत्वा स्तुत्वा स्तवाद्यैश्च जप्त्वा चाष्टाक्षरादिकम्॥
चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्चयेद्गुरुः । अथ मण्डपमासाद्य गरुडं स्थाप्य पूजयेत् ॥ ३०
दिगीशान्दिशि देवांश्च स्थाप्य संपूज्य देशिकः । विष्वक्सेनं तु संस्थाप्य शङ्खचक्रादि पूजयेत्॥
सर्वपार्षदकेभ्यश्च बलिं भूतेभ्य अर्पयेत् । ग्रामवस्त्रसुवर्णादि गुरवे दक्षिणां ददेत् ॥ ३२
यागोपयोगिद्रव्याद्यमाचार्याय नरोऽर्पयेत् । आचार्यदक्षिणार्धं तु ऋत्विग्भ्यो दक्षिणां ददेत् ॥
अन्येभ्यो दक्षिणां दद्याद्भोजयेद्ब्राह्मणांस्ततः । अवारितान्फलं दद्याद्यजमानाय वै गुरुः ॥ ३४
विष्णुं नयेत्प्रतिष्ठाता चाऽऽत्मना सकलं कुलम् । सर्वेषामेव देवानामेष साधारणो विधिः॥३५
मूलमन्त्राः पृथक्तेषां शेषं कार्यं समानकम् ॥ ३६

इत्यादिमहापुराण आग्नेये वासुदेवादिदेवताप्रतिष्ठासामान्यविधिकथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७३८

---

१ क. ङ. च. °ष्टान्तेना° । २ ख. घ. °दकमाम्रपत्रैर्मूले° । ३ क. ङ. च. °येत्खातस्य मूर्तिस्तु पृ° । ४ ख. ङ. च. °स्थितम् । अ° । ५ ख. °यमोम् । स° । ६ क. ख. ङ. च. °न्तदेशाय । घ. °न्तवेशाय । ७ घ. °तो लीनम° । ८ क. ङ. च. कृत्वा । ९ ख. गत्वा । १० घ. °न्फलान्दद्या° ।

अथैकषष्टितमोऽध्यायः ।

---

## अवभृथस्नानद्वारप्रतिष्ठाध्वजारोपणादिविधिः ।

श्रीभगवानुवाच—

वक्ष्ये चावभृथस्नानं विष्णोर्नत्वेति[1] होमयेत् । एकाशीतिपदे कुम्भान्[2]संस्थाप्य स्नापयेद्धरिम् ॥ १
पूजयेद्गन्धपुष्पाद्यैर्बलिं दत्त्वा गुरुं यजेत् । द्वारप्रतिष्ठां वक्ष्यामि द्वाराधो हेम वै ददेत् ॥ २
अष्टभिः कलशैः स्थाप्य शाखोदुम्बरकौ गुरुः । गन्धादिभिः समभ्यर्च्य मन्त्रैर्वेदादिभिर्गुरुः ॥ ३
कुण्डेषु होमयेद्वह्निं [3]समिदाज्यतिलादिभिः । दत्त्वा शय्यादिकं चाधो दद्यादाधारशक्तिकाम् ॥ ४
शाखयोर्विन्यसेन्मूले देवौ चण्डप्रचण्डकौ । ऊर्ध्वोदुम्बरके देवीं लक्ष्मीं सुरगणार्चिताम् ॥ ५
न्यस्याभ्यर्च्य यथान्यायं श्रीसूक्तेन चतुर्मुखम् । हुत्वा तु श्रीफलादीनि आचार्यादेस्तु दक्षिणाम्
प्रतिष्ठासिद्धद्वारस्य त्वाचार्यः स्थापयेद्धरिम् । प्रासादस्य प्रतिष्ठां तु हृत्प्रतिष्ठेति तां शृणु ॥ ७
समाप्तौ शुकनासाया वेद्याः प्राग्गर्भमस्तके । सौवर्णं राजतं कुम्भमथवा शुक्ल[4]निर्मितम् ॥ ८
अष्टरत्नौषधीधातुबीजलौहान्वितं शुभम् । सवस्त्रपूरितं चाद्भिर्मण्डले चाधिवासयेत् ॥ ९
सपल्लवं नृसिंहेन हुत्वा [5]संपातसंचितम् । नारायणाख्यतत्त्वेन प्राणभूतं न्यसेत्ततः ॥ १०
[6]वैराजरूपं तं ध्यायेत्प्रासादस्य सुरेश्वर । ततः पुरुषवत्सर्वं प्रासादं चिन्तयेद्बुधः ॥ ११
अधो दत्त्वा सुवर्णं तु [7]तत्त्वभूतं घटं न्यसेत् । गुर्वादौ दक्षिणां दद्याद्ब्राह्मणादेश्च भोजनम् ॥ १२
ततः पश्चाद्वेदिबन्धं तदूर्ध्वं कण्ठबन्धनम् । कण्ठोपरिष्टात्कर्तव्यं विमलामलसारकम् ॥ १३
तदूर्ध्वं वृंकलं कुर्याच्चक्रं चाऽऽद्यं सुदर्शनम् । मूर्तिं श्रीवासुदेवस्य ग्रहगुप्तां निवेदयेत् ॥ १४
कलशं वाऽथ कुर्वीत तदूर्ध्वं चक्रमुत्तमम् । वेद्याश्च परितः स्थाप्या अष्टौ [9]विघ्नेश्वरास्त्वज ॥ १५
चत्वारो वा चतुर्दिक्षु स्थापनीया गरुत्मतः । ध्वजारोहं प्रवक्ष्यामि येन भूतादि नश्यति ॥ १६
प्रासादबिम्बद्रव्याणां यावन्तः परमाणवः । तावद्वर्षसहस्राणि तत्कर्ता विष्णुलोकभाक् ॥ १७
कुम्भाण्डवे[10]दिबिम्बानां भ्रमणाद्वायुनाऽनघ । कण्ठस्याऽऽवेष्टनाज्ज्ञेयं फलं कोटिगुणं ध्वजात् ॥
पताकां प्रकृतिं विद्धि दण्डं पुरुषरूपिणम् । प्रासादो वासुदेवस्य [11]मूर्तिरूपो निबोध मे ॥ १९
[12]धारणाद्धरणीं विद्धि आकाशं सुषिरात्मकम् । तेजस्तत्पावकं विद्धि वायुं स्पर्शगतं तथा ॥ २०
पाषाणादिष्वेव जलं पार्थिवं पृथिवीगुणम् । प्रतिशब्दोद्भवं शब्दं [13]स्पर्शं स्यात्कर्कशादिकम् २१
शुक्लादिकं भवेद्रूपं रसं[14]माह्लाददर्शकम् । धूपादिगन्धं गन्धं तु वाग्भेर्यादिषु संस्थिता ॥ २२
शुकनासाश्रिता नासा बाहू [15]भद्रात्मकौ स्मृतौ । शिरस्त्वण्डं निगदितं कलशो मूर्धजाः स्मृताः ॥
कण्ठं कण्ठमिति ज्ञेयं स्कन्धो वेदी निगद्यते । पायूपस्थे प्रणाले तु त्वक्सुधा परिकीर्तिता ॥ २४
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते । तच्छक्तिं पिण्डिकां विद्धि प्रकृतिं च तदाकृतिम् २५

---

१ क. ङ. च. °ष्णोर्नु केति । ख. °ष्णोर्नामेति । २ घ. °म्भान्स्थाप्य संस्थाप° । ३ क. घ. ङ. च. °मिल्लाजति° । ४ च. °निर्मलम् । ५ ख. संपातसिञ्चितम् । ङ. सर्वे तु सिञ्चितम् । ६ ख. घ. वैराजभूतं । ७ घ. तद्वद्भूतं । ८ ख. चुबुकं । ङ. च. चलकं । ९ ख. ङ. च. विघ्नेश्व° । १० ख. °दिद्रव्याणां भ्र° । ङ. च. °दिविद्यानां । ११ क. ङ. च. मूर्तिभूतं । १२ ख. °रणीं वार° । १३ ख. ग. ङ. च. स्पर्शे । १४ क. ङ. च. °समाम्लादिदर्शं° । घ. °समन्नादिद° । १५ घ. तद्रथकौ ।

निश्चलत्वं च गर्भोऽस्या अधिष्ठाता तु केशवः । एवमेष हरिः साक्षात्प्रासादत्वेन संस्थितः २६
जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धे धाता व्यवस्थितः । ऊर्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि॥
प्रासादस्य प्रतिष्ठां तु ध्वजरूपेण मे शृणु । ध्वजं कृत्वा सुरैर्दैत्या जिताः शस्त्रादिचिह्नितम् २८
[1]अण्डोर्ध्वे कलशं न्यस्य तदूर्ध्वे विन्यसेद्ध्वजम् । विम्बार्धमानं[2] दण्डस्य त्रिभागेणाथ कारयेत् ॥
अष्टारं द्वादशारं वा मध्ये मूर्तिमताऽन्वितम् । नारसिंहेन तार्क्ष्येण ध्वजदण्डस्तु निर्व्रणः ॥ ३०
प्रासादस्य तु विस्तारो मानं दण्डस्य कीर्तितम् । शिखरार्धेन वा कुर्यात्तृतीयार्धेन वा पुनः ३१
द्वारस्य दैर्घ्याद्द्विगुणं दण्डं वा परिकल्पयेत् । ध्वजयष्टिर्देवगृहे ऐशान्यां वायवेऽथ वा ॥ ३२
क्षौमाद्यैश्च ध्वजं कुर्याद्विचित्रं वैकवर्णकम् । घण्टाचामरकिङ्किण्या भूषितं पापनाशनम् ॥ ३३
दण्डाग्राद्धरणीं यावद्[3]वस्त्रैक्यं विस्तरेण तु । महाध्वजः सर्वदः स्याच्चतुर्थांशाद्धीनतोऽर्चितः ॥ ३४
ध्वजे चार्धेन विज्ञेया पताका मानवर्जिता । विस्तारेण ध्वजः कार्यो विंशदङ्गुलसंनिभः ॥३५
अधिवासविधानेन चक्रं दण्डं ध्वजं तथा । देववत्सकलं कृत्वा मण्डपस्नपनादिकम् ॥ ३६
नेत्रोन्मीलनकं त्यक्त्वा पूर्वोक्तं सर्वमाचरेत् । अधिवास[4]येद्विधिना शय्यायां स्थाप्य देशिकः३७
ततः सहस्रशीर्षेतिसूक्तं चक्रे न्यसेद्बुधः । तथा सुदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥ ३८
मनोरूपेण तस्यैव सजीवकरणं स्मृतम् । अरेषु मूर्तयो न्यस्याः केशवाद्याः सुरोत्तम ॥ ३९
नाभ्यब्जप्रतिनेमीषु न्यसेत्तत्त्वानि देशिकः । नृसिंहं विश्वरूपं वा अब्जमध्ये निवेशयेत् ॥ ४०
सकलं विन्यसेद्दण्डे सूत्रात्मानं सजीवकम् । निष्कलं परमात्मानं ध्वजे ध्यायन्न्यसेद्धरिम् ॥४१
तच्छक्तिं व्यापिनीं ध्यायेद्ध्वजरूपां बलाबलाम् । म[5]ण्डले स्थाप्य चाभ्यर्च्य होमं कुण्डेषु कारयेत् ॥
कलशे स्वर्णकलशं न्यस्य रत्नानि पञ्च च । स्थापयेच्चक्रमन्त्रेण स्वर्णचक्रमधस्ततः ॥ ४३
पारदेन तु सं[6]प्लाव्य नेत्रपट्टेन च्छादयेत् । ततो निवेशयेच्चक्रं तन्मध्ये तु हरिं स्मरेत् ॥ ४४
ॐ क्षौं[7] नृसिंहाय नमः पूजयेत्स्थापयेद्धरिम् । ततो ध्वजं गृहीत्वा तु यजमानः सबान्धवः ४५
दधिभक्तयुते पात्रे ध्वजस्याग्रं निवेशयेत् । ध्रुवाद्येन फडन्तेन ध्वजं मन्त्रेण पूजयेत् ॥ ४६
शिरस्याधाय तत्पात्रं नारायणमनुस्मरन् । प्रदक्षिणं तु कुर्वीत तूर्यमङ्गलनिःस्वनैः ॥ ४७
ततो निवेशयेद्दण्डं मन्त्रेणाष्टाक्षरेण तु । मुञ्चामि त्वेतिसूक्तेन ध्वजं मुञ्चेद्विचक्षणः ॥ ४८
पात्रं ध्वजं कुञ्जरादि दद्यादाचार्यके द्विजः । एष साधारणः प्रोक्तो ध्वजस्याऽऽरोहणे विधिः॥
यस्य देवस्य यच्चिह्नं तन्मन्त्रेण स्थिरं चरेत् । स्वर्गच्छेद्ध्वजदानात्तु भुवि राजा बली भवेत् ५०

इत्यादिमहापुराण आग्नेयेऽवभृथस्नानद्वारप्रतिष्ठाध्वजारोपणादिविधिकथनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७८८

---

अथ द्विषष्टितमोऽध्यायः ।

लक्ष्म्यादिदेवताप्रतिष्ठासामान्यविधिः ।

श्रीभगवानुवाच—

समुदायेन देवादेः प्रतिष्ठां प्रवदामि ते । लक्ष्म्याः प्रतिष्ठां प्रथमं तथा देवीगणस्य च ॥ १

---

१ ख. अतोर्ध्वे । २ ङ. °नं चक्रं तु त्रि° । ३ ख. ग. घ. °वद्वस्त्रैकं वि° । ४ ख. घ. °सयेच्च विधि° । ५ घ. मण्डपे । ६ क. ख. ङ. च. संप्राप्य । ७ ङ. च. ह्रौं ।

पूर्ववत्सकलं कुर्यान्मण्डपस्नपनादिकम् । भद्रपीठे श्रियं न्यस्य स्थापयेदष्ट वै घटान् ॥ २
घृतेना[1]भ्यज्य मूलेन स्नापयेत्पञ्चगव्यकैः । हिरण्यवर्णां हरिणीं नेत्रे चोन्मीलयेच्छ्रि[2]याः ॥ ३
तां म आवह इत्येवं प्रदद्यान्मधुरत्रयम् । [3]अश्वपूर्णेति [4]पूर्वेण तां कुम्भेनाभिषेचयेत् ॥ ४
[5]कांसोऽस्मितेति याम्येन पश्चिमेनाभिषेचयेत् । [6]चन्द्रां प्रभासामुच्चार्याऽऽदित्यवर्णेति चोत्तरात् ॥
उपैतु मेति चाऽऽग्नेयात्क्षुत्पिपासेति नैर्ऋतात् । गन्धद्वारेति वायव्यान्मनसः काममाकूतिम् ॥ ६
ईशानकलशेनैव शिरः सौवर्णकर्दमात् । एकाशीतिघटैः स्नानं मन्त्रेणा[7]यं सृजन्क्षितिम् ॥ ७
आर्द्रां पुष्करिणीं गन्धैरार्द्रामित्यादि पुष्पकै[8]ः । तां म आवहमन्त्रेण आनन्द इति चाखिलम् ॥८
[9]श्रायन्तीयेन शय्यायां श्रीसूक्तेन च संनिधिम् । लक्ष्मीबीजेन चिच्छक्तिं विन्यस्याभ्यर्चयेत्पुनः
श्रीसूक्तेन मण्डपेऽथ कुण्डेष्वब्जानि होमयेत् । करवीराणि वा हुत्वा सहस्रं शतमेव वा ॥ १०
गृहोपकरणा[10]न्तादि श्रीसूक्तेनैव चार्पयेत् । ततः प्रासादसंस्कारं सर्वं कृत्वा तु पूर्ववत् ॥ ११
[*[11]मात्रार्थे पिण्डिकां कृत्वा प्रतिष्ठानं ततः श्रियाः । श्रीसूक्तेन च सांनिध्यं पूर्ववत्प्रत्यृचं ज[12]पेत्]
चिच्छक्तिं बोधयित्वा तु मूलात्सांनिध्यकं चरेत् । भूस्वर्णवस्त्रगोन्नादि गुरवे ब्रह्मणेऽर्पयेत् ॥
एवं देव्योऽखिलाः [13]स्थाप्य राज्यस्वर्गादिभाग्भवेत् ॥ १४

इत्यादिमहापुराण आग्नेये लक्ष्म्यादिदेवताप्रतिष्ठासामान्यविधिकथनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८०२

---

अथ त्रिषष्टितमोऽध्यायः ।

---

विष्ण्वादिदेवताप्रतिष्ठासामान्यविधिः पुस्तकलेखनविधिश्च ।

श्रीभगवानुवाच—

एवं तार्क्ष्यस्य चक्रस्य ब्रह्मणो नृहरेस्तथा । प्रतिष्ठा विष्णुवत्कार्या स्वस्वमन्त्रेण तां शृणु ॥ १
सुदर्शन महाचक्र शान्त दुष्टभयंकर, छिन्धि छिन्धि भिन्धि भिन्धि विदारय विदारय
परमन्त्रान्ग्रस ग्रस भक्षय भक्षय भूतांस्त्रासय त्रासय हुं फट् सुदर्शनाय नमः ॥ २
अभ्यर्च्य चक्रं चानेन रणे दारयते रिपून् । ३
ॐ क्ष्रौं नरसिंह उग्ररूप ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा ॥ ४
नरसिंहस्य मन्त्रोऽयं पाताल[14]ख्यस्य वच्मि ते ॥ ५
ॐ क्ष्रौं नमो भगवते नरसिंहाय प्रदीप्तसूर्यकोटिसहस्रसमतेजसे वज्रनखदंष्ट्रायुधाय स्फुट-
विकटविकीर्णकेसरसटाप्रक्षुभितमहार्णवा[15]म्भोदुन्दुभिनिर्घोषाय सर्वमन्त्रोत्तारणाय एह्येहि भगव-
न्नरसिंह पुरुष परापरब्रह्म सत्येन स्फुर स्फुर विजृम्भ विजृम्भ आक्रम आक्रम गर्ज गर्ज मुञ्च

---

* धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तके नास्ति ।

---

१ ख. °नाभ्युक्ष्य मू° । २ क. ङ. °याः । तस्मादावाह° । घ. °याः । तन्म आ° । च. °याः । श्रियमावाह° । ३ घ. अश्वपूर्वेति । ४ ख. पूर्णेन । ५ घ. कामोऽस्मितेति । ६ घ. चन्द्रं । ७ घ. °णापः सृ° । ८ घ. °कैः । तन्म आ° । ९ घ. शायन्तीयेन । १० ख. °णाद्यादि । ११ घ. मन्त्रेण । १२ ङ. यजेत् । १३ घ. स्थाप्याऽऽवाह्य स्वर्गादि भावयेत् । १४ ङ. °लाक्षस्य । १५ क. घ. च. °म्भोददुभि° ।

मुञ्च सिंहनादं विदारय विदारय विद्रावय विद्रावयाऽऽविशाऽऽविश सर्वमन्त्ररूपाणि मन्त्रजातीश्च हन हन च्छिन्द च्छिन्द संक्षिप संक्षिप दर दर दारय दारय स्फुट स्फुट स्फोटय स्फोटय ज्वालामालासंघातमय सर्वतोऽनन्तज्वालावज्राशनिचक्रेण सर्वपातालानुत्सादयोत्सादय सर्वतोऽनन्तज्वालावज्रशरपञ्जरेण सर्वपातालान्परिवारय परिवारय सर्वपातालासुरवासिनां हृदयान्याकर्षयाऽऽकर्षय शीघ्रं दह दह पच पच मथ मथ शोषय शोषय निकृन्तय निकृन्तय तावद्यावन्मे वशमागताः पातालेभ्यः [ * फडसुरेभ्यः फण्मन्त्ररूपेभ्यः फण्मन्त्रजातिभ्यः फट् संशयान्मां भगवन्नरसिंहरूप विष्णो सर्वापद्भ्यः ] सर्वमन्त्ररूपेभ्यो रक्ष रक्ष हुं फण्नमो नमस्ते ॥ ६

नरसिंहस्य विद्येयं हरिरूपोऽर्थसिद्धिदा । त्रैलोक्यमोहनैर्मन्त्रैः स्थाप्यस्त्रैलोक्यमोहनः ॥ ७
गदी दक्षे शान्तिकरो द्विभुजो वा चतुर्भुजः । वामोर्ध्वे कारयेच्चक्रं पाञ्चजन्यमथो ह्यधः ॥ ८
श्रीपुष्टिसंयुतं कुर्याद्धलेन सह भद्रया । प्रासादे स्थापयेद्विष्णुं गृहे वा मण्डपेऽपि वा ॥ ९
वामनं चैव वैकुण्ठं हयास्यमनिरुद्धकम् । स्थापयेज्जलशय्यास्थं मत्स्यादींश्चावतारकान् ॥ १०
संकर्षणं विश्वरूपं लिङ्गं वै रुद्रमूर्तिकम् । अर्धनारीश्वरं तत्र हरिशंकरमातृकाः ॥ ११
भैरवं च तथा सूर्यं ग्रहांस्तद्वद्विनायकम् । गौरीमिन्द्रादिभिः सेव्यां चित्रजां च बलाबलाम् ॥
पुस्तकानां प्रतिष्ठां च वक्ष्ये लिखनतद्विधिम् । स्वस्तिके मण्डलेऽभ्यर्च्य शरयन्त्रासने स्थितम् ॥
लेख्यं च लिखितं पुस्तं गुरुर्विद्यां हरिं यजेत् । यजमानो गुरुं विद्यां हरिं लिपिकृतं नरम् ॥
प्राङ्मुखः पद्मिनीं ध्यायेल्लिखित्वा श्लोकपञ्चकम् । रौप्यस्थमष्या हैम्या च लेखन्या +नागराक्षरम्
ब्राह्मणान्भोजयेच्छक्त्या शक्त्या दद्याच्च दक्षिणाम् । गुरुं विद्यां हरिं प्राच्र्य पुराणादि लिखेन्नरः
पूर्ववन्मण्डलाद्यैश्च ऐशान्यां भद्रपीठके । दर्पणे पुस्तकं धृत्वा सेचयेत्पूर्ववद्धटैः ॥ १७
नेत्रोन्मीलनकं कृत्वा शय्यायां तु न्यसेन्नरः । न्यसेत्तु पौरुषं सूक्तं वेदाद्यं तत्र पुस्तके ॥ १८
कृत्वा सजीवीकरणं प्राच्र्य हुत्वा चरुं ततः । संप्राच्र्य दक्षिणाभिस्तु गुर्वादीन्भोजयेद्द्विजान् ॥
रथेन हस्तिना वाऽपि भ्रामयेत्पुस्तकं नरैः । गृहे देवालयादौ तु पुस्तकं स्थाप्य पूजयेत् ॥ २०
वस्त्रादिवेष्टितं पाठादादावन्ते समर्चयेत् । जगच्छान्तिं चावधार्य पुस्तकं वाचयेन्नरः ॥ २१
अध्यायमेकं कुम्भाद्भिर्यजमानादि सेचयेत् । द्विजाय पुस्तकं दत्त्वा फलस्यान्तो न विद्यते २२
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । [ *नरकादुद्धरन्त्येव जपवापनदोहनात् ॥ ] २३
विद्यादानफलं दत्त्वा मष्यात्कं पत्रसंचयम् । यावत्तु पत्रसंख्यानमक्षराणां तथाऽनघ ॥ २४
तावद्वर्षसहस्राणि विष्णुलोके महीयते । पञ्चरात्रं पुराणानि भारतानि ददन्नरः ॥ २५
कुलैकविंशमुद्धृत्य परे तत्त्वे तु लीयते ॥ २६

इत्यादिमहापुराण आग्नेये विष्ण्वादिदेवताप्रतिष्ठासामान्यविधिकथनं नाम त्रिषष्टितमोऽध्यायः ॥६३॥

आदितः श्लोकानां समष्ट्यङ्काः—१८२८

---

* ग्रन्थोऽयं ङ. पुस्तके नास्ति । + तु वराक्षरमिति क्वचित्पुस्तके पाठः । * एतदर्धं ङ. पुस्तक एव केवलम् ।

१ क. ङ. च. 'नादान्विद्रा' । २ घ. सर सर । ३ ङ. च. 'पा सुसि' । ४ घ. तद्वद्वरि' । ५ घ. 'रपत्रास' । ६ ख. 'र्च्य कृत्वा च यत्नतः । ७ क. घ. ङ. च. दृष्ट्वा । ख. दत्वा । ८ घ. संप्राश्य ।

अथ चतुःषष्टितमोऽध्यायः ।

---

## कूपवापीतडागप्रतिष्ठाविधिः ।

श्रीभगवानुवाच—

कूपवापीतडागानां प्रतिष्ठां वच्मि तां शृणु । जलरूपेण हि हरिः सोमो वरुण उत्तमः ॥ १
अग्नीषोममयं विश्वं विष्णुरापस्तु कारणम् । हैमं रौप्यं रत्नजं वा वरुणं कारयेन्नरः ॥ २
द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् । वामेन नागपाशं तु नदीनागादिसंयुतम् ॥ ३
यागमण्डपमध्ये स्याद्वेदिका कुण्डमण्डिता । तोरणं वारुणं कुम्भं न्यसेच्च करकान्वितम् ॥ ४
भद्रके चार्धचन्द्रे वा स्वस्तिके द्वारि कुम्भकान् । अग्न्याधानं चापि कुण्डे कृत्वा पूर्णां प्रदापयेत्
वरुणं स्नानपीठे तु ये ते शतेति संस्पृशेत् । घृतेनाभ्यञ्जयेत्पश्चान्मूलमन्त्रेण देशिकः ॥ ६
शं नो देवीति प्रक्षाल्य शुद्धवत्या शिवोदकैः । अधिवासयेदष्टकुम्भान्सामुद्रं पूर्वकुम्भके ॥ ७
गाङ्गमग्नौ वर्षतोयं दक्षे रक्षस्तु नैर्ऋरम् । नदीतोयं पश्चिमे तु वायव्ये तु नदोदकम् ॥ ८
औद्भिज्जं चोत्तरे स्थाप्यमैशान्यां तीर्थसंभवम् । अलाभे तु नदीतोयं यासां राजेति मन्त्रयेत् ॥
[*देवं निर्माज्य निर्मथ्य दुर्मित्रियेति विचक्षणः ।] नेत्रे चोन्मीलयेच्चित्रं तच्चक्षुर्मधुरत्रयैः ॥ १०
ज्योतिः संपूजयेद्धैम्यां गुरवे गामथार्पयेत् । समुद्रज्येष्ठेत्यभिषिञ्चेद्वरुणं पूर्वकुम्भतः ॥ ११
समुद्रं गच्छ गाङ्गयात्सोमो धेन्विति वर्षकात् । देवीरापो निर्झराद्भिर्नदाद्भिः पञ्चनद्यतः ॥ १२
उद्भिज्जाद्भिश्चोद्भिदेन पावमान्याऽथ तीर्थकैः । आपो हि ष्ठा पञ्चगव्याद्धिरण्यवर्णेति स्वर्णजात्
आपो अस्मेति वर्षोत्थैर्व्याहृत्या कूपसंभवैः । वरुणं च तडागोत्थैर्वरुणाद्भिस्तु वाग्यतः ॥ १४
आपो देवीति गिरिजैरेकाशीतिघटैस्ततः । स्नापयेद्वरुणस्येति त्वं नो वरुण चार्घकम् ॥ १५
व्याहृत्या मधुपर्कं तु बृहस्पतेति वस्त्रकम् । वरुणेति पवित्रं तु प्रणवेनोत्तरीयकम् ॥ १६
यद्वारुणेन पुष्पादि प्रदद्याद्वरुणाय तु । चामरं दर्पणं छत्रं व्यजनं वैजयन्तिकाम् ॥ १७
मूलेनोत्तिष्ठेत्युत्थाप्य तां रात्रिमधिवासयेत् । वरुणं वेति सांनिध्यं यद्वारुण्येन पूजयेत् ॥ १८
सजीवीकरणं मूलात्पुनर्गन्धादिना यजेत् । मण्डले पूर्ववत्प्राच्य कुण्डेषु समिदादिकम् ॥ १९
वेदादिमन्त्रैर्गङ्गाद्याश्चतस्रो धेनवो दुहेत् । दिक्ष्वथो वै यवचरुं ततः संस्थाप्य होमयेत् ॥ २०
व्याहृत्या वाऽथ गायत्र्या मूलेनाऽऽमन्त्रयेत्तथा । सूर्याय प्रजापतये द्यौः स्वाहा चान्तकनिग्रहाय
तस्यै पृथिव्यै देहधृत्यै इह स्वधृतये ततः । इह रत्यै चेह रमत्या उग्रो भीमश्च रौद्रकः ॥ २२
विष्णुश्च वरुणो धाता रायस्पोषो महेन्द्रकः । अग्निर्यमो नैर्ऋतोऽथ वरुणो वायुरेव च ॥ २३
कुबेर ईशोऽनन्तोऽथ ब्रह्मा राजा जलेश्वरः । तस्मै स्वाहेदं विष्णुश्च तद्विप्रासेति होमयेत् ॥२४
सोमो धेन्विति षड्डुत्वा इमं मेति च होमयेत् । आपो हि ष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ॥

---

* क. ङ. च. पुस्तकेष्वेतदर्धं नास्ति ।

---

१ घ. तं । २ क. ङ. च. वाप्यकुण्डे । घ. चाप्यकुण्डे । ३ ख. रक्षः स्थले करम् । ङ. च. रक्षस्व नैर्ऋतम् । ४ क. ङ. च. नदीक्षोदं । ५ ङ. च. रुद्रेति । ६ ख. निर्मज्य । घ. निर्मञ्छय । ७ घ °पूरये । ८ ङ. °येद्वंश्यां गु° । ९ ख. घ. वश्यतः । १० घ. यद्वारण्येन । ङ. च. सद्वारुण्येन । ११ घ. यद्वारण्येन । ङ. च. सद्वारुण्येन । १२ घ. मण्डपे । १३ ख. घ. चान्तरिक्षकः । ङ. च. चान्तकविक्षकः ।

दशदिक्षु बलिं दद्याद्गन्धपुष्पादिनाऽर्चयेत् । प्रतिमां तु समुत्थाप्य मण्डले विन्यसेद्बुधः ॥ २६
पूजयेद्गन्धपुष्पाद्यैर्हैमपुष्पादिभिः क्रमात् । जलाशयांस्तु दिग्भागे वितस्तिद्वयसंमितान् ॥ २७
कृत्वाऽष्टौ स्थण्डिलान्रम्यान्सैकतान्देशिकोत्तमः । वरुणस्येति मन्त्रेण आज्यमष्टशतं ततः ॥ २८
चरुं यवमयं हुत्वा शान्तितोयं समाहरेत् । सेचयेन्मूर्ध्नि देवं तु सजीवकरणं चरेत् ॥ २९
ध्यायेत्तु वरुणं युक्तं गौर्या नदनदीगणैः । ॐ वरुणाय ततोऽभ्यर्च्य ततः सांनिध्यमाचरेत् ३०
उत्थाप्य नागपृष्ठाद्यैर्भ्रामयेत्तैः समङ्गलैः । आपो हि ष्ठेति च क्षिपेत्त्रिमध्वाक्ते घटे जले ॥ ३१
जलाशये मध्यगतं सुगुप्तं विनिवेशयेत् । स्नात्वा ध्यायेच्च वरुणं सृष्टिं ब्रह्माण्डसंज्ञिकाम् ॥ ३२
अग्निबीजेन संदग्ध्वा(ह्य) तद्भस्म प्लावयेन्नरः । सर्वमापोमयं लोकं ध्यायेत्तत्र जलेश्वरम् ॥ ३३
तोयमध्यस्थितं देवं ततो यूपं निवेशयेत् । चतुरस्रमथाष्टास्रं वर्तुलं वा सुकीर्तितम्[1] ॥ ३४
आराध्य देवतालिङ्गं दशहस्तं तु कूपके । यूपं यज्ञी(ज्ञि)यवृक्षोत्थं मूले हैमं फलं न्यसेत् ॥ ३५
वाप्यां पञ्चदशकरं पुष्करिण्यां तु विंशकम् । तडागे पञ्चविंशाख्यं जलमध्ये निवेशयेत् ॥ ३६
*यागमण्डपाङ्गणे वा यूप ब्रह्मेतिमन्त्रतः[2] । स्थाप्य तद्वेष्टयेद्वस्त्रैर्यूपोपरि पताकिकाम् ॥ ३७
तदभ्यर्च्य च गन्धाद्यैर्जगच्छान्तिं समाचरेत् । दक्षिणां गुरवे दद्याद्भूगोहेमाम्बुपात्रकम् ॥ ३८
द्विजेभ्यो दक्षिणा देया आगतान्भोजयेत्तथा । आब्रह्म स्तम्बपर्यन्तं ये केचित्सलिलार्थिनः ३९
ते तृप्तिमुपगच्छन्तु तडागस्थेन वारिणा । तोयमुत्सर्जयेद्देवं पञ्चगव्यं विनिक्षिपेत् ॥ ४०
आपो हि ष्ठेति तिसृभिः शान्तितोयं द्विजैः कृतम् । तीर्थतोयं क्षिपेत्पुण्यं गोकुलं चार्पयेद्द्विजान् ॥
अनिवारितमन्नाद्यं सर्वजन्यं च कारयेत् । अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥ ४२
एकाहं स्थापयेत्तोयं तत्पुण्यमयुतायुतम् । विमाने मोदते स्वर्गे नरकं न स गच्छति ॥ ४३
गवादि पिबते यस्मात्तस्मात्कर्तुर्न पातकम् । तोयदानात्सर्वदानफलं प्राप्य दिवं व्रजेत् ॥ ४४

इत्यादिमहापुराण आग्नेये कूपवापीतडागादिप्रतिष्ठाकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८७२

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

## सभादिस्थापनविधिः ।

श्रीभगवानुवाच—

सभादिस्थापनं वक्ष्ये तथैतेषां प्रवर्तनम् । भूमौ परीक्षितायां च वास्तुयागं समाचरेत् ॥ १
स्वेच्छया तु सभां कृत्वा स्वेच्छया स्थापयेत्सुरान् । चतुष्पथे च ग्रामादौ न शून्ये कारयेत्सभाम्
निर्मलः कुलमुद्धृत्य कर्ता स्वर्गे विमोदते । अनेन विधिना कुर्यात्सप्तभौमं हरेर्गृहम् ॥ ३
यथा राज्ञां तथाऽन्येषां पूर्वाद्याश्च ध्वजादयः । कोणभुजान्वर्जयित्वा चतुःशालं तु वर्जयेत् ॥४
त्रिशालं वा द्विशालं वा एकशालमथापि वा । व्ययाधिकं न कुर्वीत व्ययदोषकरं हि तत् ॥ ५
आयाधिके भवेत्पीडा तस्मात्कुर्यात्समं द्वयम् । करराशिं समस्तं तु कुर्याद्वसुगणं गुरुः ॥ ६

---

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. प्रकीर्तितम् । घ. प्रवर्तितम् । च. सुवर्णितम् । २ घ. ब्रस्केति' ।

सप्तार्चिषा कृते भागे[1] गर्गविद्याविचक्षणः । अष्टधा भाजिते तस्मिन्यच्छेषं स व्ययो मतः ॥ ७
अथवा करराशिं तु हन्यात्सप्तार्चिषा बुधः । वसुभिः संहृते[3] भागे ध्वजादि[4] परिकल्पयेत् ॥ ८
ध्वजो[5] धूम्रस्तथा सिंहः श्वा वृषस्तु खरो गजः । ध्वाङ्क्षश्चेति क्रमेणैवमायाष्टकमुदाहृतम् ॥ ९
त्रिशालकत्रयं शस्तं सर्वभेदविवर्जितम् । याम्यां परगृहोपेतं द्विशालं[6] शस्यते सदा ॥ १०
याम्ये शालैकशालं तु प्रत्यक्शालमथापि वा । एकशालद्वयं शस्तं शेषास्त्वन्ये भयावहाः ॥ ११
चतुःशालं सदा शस्तं सर्वदोषविवर्जितम् । एकभौमादि कुर्वीत भवनं सप्तभौमकम् ॥ १२
द्वारवेधादिरहितं पुराणेन विवर्जितम् । देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥ १३
संस्थाप्य मनुजानां च समुदायोक्तकर्मणा । प्रातः सर्वौषधीस्नानं कृत्वा शुचिरतन्द्रितः ॥ १४
मधुरैस्तु द्विजान्भोज्य पूर्णकुम्भादिशोभितम् । सतोरणं स्वस्ति वाच्य द्विजान्गो*पृष्ठहस्तकः १५
गृही गृहं प्रविशेच्च दैवज्ञान्प्राच्यर्य संविशेत् । गृहे पुष्टिकरं मन्त्रं पठेच्चेमं समाहितः ॥ १६
ॐ नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह । जये भार्गवदायादे प्रजानां विजयावहे ॥ १७
पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् । भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ॥ १८
सर्वबीजौषधीयुक्ते[10] सर्वरत्नौषधीवृते । रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ॥ १९
प्रजापतिसुते देवि [ + चतुरस्रे महीयसि । सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ॥ २०
पूजिते परमाचार्यैर्गन्धमाल्यैरलंकृते । भवभूतिकरि देवि ] गृहे भार्गवि रम्यताम् ॥ २१
अव्यक्तेऽव्याकृते पूर्णे मुनेरङ्गिरसः सुते । इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम्[11] ॥ २२
देशस्वामिपुरस्वामिगृहस्वामिपरिगृ(ग्र)हे । मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ २३

इत्यादिमहापुराण आग्नेये समादिस्थापनविधिकथनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८९५

---

अथ षट्षष्टितमोऽध्यायः ।

---

देवतासामान्यप्रतिष्ठा ।

श्रीभगवानुवाच—

समुदायप्रतिष्ठां च वक्ष्ये सा वासुदेववत् । आदित्या वसवो रुद्राः साध्या विश्वेऽश्विनौ तथा ॥
ऋषयश्च तथा सर्वे वक्ष्ये तेषां विशेषकम् । यस्य देवस्य यन्नाम तस्याऽऽद्यं गृह्य[12] चाक्षरम् ॥ २
मात्राभिर्भेदयित्वा तु दीर्घाण्यङ्गानि भेदयेत्[13] । प्रथमं कल्पयेद्बीजं सबिन्दुं(न्दु) प्रणवान्वितम् ॥ ३
सर्वेषां मूलमन्त्रेण पूजनं स्थापनं तथा । नियमव्रतकृच्छ्राणां[14] मठसंक्रमवेश्मनाम् ॥ ४

---

* गोपुच्छहस्तक इति घ. पुस्तकटिप्पणीस्थः पाठः । + अयं ग्रन्थः, च पुस्तके नास्ति ।

---

१ क. ङ. च. °गे खड्गवि° । २ ख. ग. घ. च. गतः । ३ ख. संस्कृते । ४ घ. पृथ्व्यादि । ५ ख. °जो धौम्रोऽथ सिंहश्च सौरभेयः ख° । ६ घ. °जः । तथा ध्वाङ्क्षस्तु पूर्वादावुद्भवन्ति विकल्पयेत् । त्रि° । ७ ख. घ. च. शस्तमुदक्पूर्ववि° । ८ ख. घ. लभ्यते । ९ घ. पूरणेन । १० च. °र्वजीवौष° । ११ क. ख. च. कामया° । १२ क. ङ. च. गृहभास्कर° । १३ क. ङ. च. कल्पयेत् । १४ क. ङ. च. °णवं गति । स° । घ. °णवं नतिम् । १५ क. ङ. च. °यमं तत्र कृ° ।

( देवतासामान्यप्रतिष्ठा )

मासोपवासं द्वादश्या इत्यादि स्थापनं वदे । शिलां पूर्णघटं कांस्यं संभारं स्थापयेत्ततः ॥ ५
ब्रह्मकूर्चं समाहृत्य श्रपेद्यवमयं चरुम् । क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥ ६
प्रणवेनाभिघार्यैव दर्व्या संघटयेत्ततः । साधयित्वाऽवतार्याथ विष्णुमभ्यर्च्य होमयेत् ॥ ७
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् । विश्वतश्चक्षुर्वेदाद्यैर्भूरग्नये तथैव च ॥ ८
सूर्याय प्रजापतये अन्तरिक्षाय होमयेत् । द्यौः स्वाहा ब्रह्मणे स्वाहा पृथिवी महाराजकः ॥ ९
तस्मै सोमं च राजानमिन्द्राद्यैर्होममाचरेत् । एवं हुत्वा[1] चरोर्भागान्दद्यादिग्बलिमादरात् ॥ १०
समिधोऽष्टशतं हुत्वा पालाशा(शी)श्चाऽऽज्यहोमकम् । कुर्यात्पुरुषसूक्तेन इरावती तिलाष्टकम् ॥
हुत्वा तु ब्रह्मविष्ण्वीशदेवानामनुयायिनाम् । ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ॥ १२
पर्वतानां नदीनां च समुद्राणां तथाऽऽहुतीः । हुत्वा च व्याहृतीर्दद्यात्स्रुवपूर्णाहुतित्रयम् ॥१३
वौषडन्तेन मन्त्रेण वैष्णवेन पितामह । पञ्चगव्यं चरुं प्राश्य दत्त्वाऽऽचार्याय दक्षिणाम् ॥ १४
तिलपात्रं हेमयुक्तं सवस्त्रं गामलंकृताम् । प्रीयतां भगवान्विष्णुरित्युत्सृजेद्व्रतं बुधः ॥ १५
मासोपवासादेरन्यां प्रतिष्ठां वच्मि पूर्वतः । यज्ञेन(नाऽऽ)तोष्य देवेशं श्रपयेद्वैष्णवं चरुम् ॥ १६
तिलतण्डुलनीवारैः श्यामाकैरथ वा यवैः । आज्येनाऽऽघार्य चोत्तार्य होमयेन्मूर्तिमन्त्रकैः ॥ १७
विष्ण्वादीनां मासपानां तदन्ते होमयेत्पुनः ॥ १८
ॐ श्रीविष्णवे स्वाहा । ॐ विष्णवे[3] विभूषणाय स्वाहा । ॐ विष्णवे शिपिविष्टाय स्वाहा[4] ।
ॐ नरसिंहाय स्वाहा । ॐ पुरुषोत्तमाय स्वाहा ॥ १९
द्वादशाश्वत्थसमिधो होमयेद्घृतसंप्लुताः । विष्णो रराटमन्त्रेण ततो द्वादश चाऽऽहुतीः ॥ २०
इदं विष्णुरिरावती चरोर्द्वादश चाऽऽहुतीः । हुत्वा चाऽऽज्याहुतीस्तद्वत्तद्विप्रासेति होमयेत् ॥
शेषहोमं ततः कृत्वा दद्यात्पूर्णाहुतित्रयम् । *युञ्जतेत्यनुवाकं तु जप्त्वा प्राश्यी(श्री)त वै चरुम्
प्रणवेन स्वशब्दान्ते कृत्वा पात्रे तु पैप्पले । ततो मासाधिपानां तु विप्रान्द्वादश भोजयेत् ॥२३
त्रयोदशो गुरुस्तत्र तेभ्यो दद्यात्त्रयोदश । कुम्भान्स्वाद्वम्बुसंयुक्तान्सच्छत्रोपानहान्वितान् ॥२४
सुवस्त्रहेममाल्याढ्यान्व्रतपूर्त्यै त्रयोदश । गावः प्रीतिं समायान्तु प्रचरन्तु प्रहर्षिताः ॥ २५
इति गोपथमुत्सृज्य यूपं तत्र निवेशयेत् । दशहस्तं प्रपारामठसंक्रमणादिषु ॥ २६
गृहे च होममेवं तु कृत्वा सर्वं यथाविधि । पूर्वोक्तेन विधानेन प्रविशेच्च गृहं गृही ॥ २७
अनिवारितमन्नाद्यं[5] सर्वेष्वेतेषु कारयेत् । द्विजेभ्यो दक्षिणा देया यथाशक्ति विचक्षणैः ॥ २८
आरामं कारयेद्यस्तु नन्दने सुचिरं वसेत् । मठप्रदानात्स्वर्लोके शक्रलोके वसेत्ततः ॥ २९
प्रपादानाद्वारुणेन संक्रमेण वसेद्दिवि । इष्टकासेतुकारी च गोलोके मार्गकृद्भवाम् ॥ ३०
नियमव्रतकृद्विष्णुः कृच्छ्रकृत्सर्वपापहा [?] । गृहं दत्त्वा वसेत्स्वर्गे यावदाभूतसंप्लवम् ॥ ३१
समुदायप्रतिष्ठेष्टा शिवादीनां गृहात्मनाम् ॥ ३२

इत्यादिमहापुराण आग्नेये देवतासामान्यप्रतिष्ठाकथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९२७

---

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. °स्तु त्वं विष्णो° । २ क. ङ. च. दत्त्वा । ३ ख. °वेऽतिभूशयाय । घ. °वे निभूयपाय । ४ ख. ग. °हा । ॐ पु° । ५ ख. 'वाऽऽद्यं ज' ।

अथ सप्तषष्टितमोऽध्यायः ।

## जीर्णोद्धारविधिः ।

श्रीभगवानुवाच—

जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद्गुरुः । अचलां विन्यसेद्गेहे अतिजीर्णां परित्यजेत् ॥ १
*व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्ववत् । संहारविधिना तत्र तत्त्वान्संहृत्य देशिकः २
सहस्रं नारसिंहेन हुत्वा तामुद्धरेद्गुरुः । दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले ॥ ३
धातुजां रत्नजां वाऽपि अगाधे वा जलेऽम्बुधौ । यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत्
वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् । यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद्दिने ॥ ५
कूपवापीतडागादेर्जीर्णोद्धारे महाफलम् ॥ ६

इत्यादिमहापुराण आग्नेये जीर्णोद्धारविधिकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९३३

अथाष्टषष्टितमोऽध्यायः ।

## उत्सवविधिकथनम् ।

श्रीभगवानुवाच—

वक्ष्ये विधिं चोत्सवस्य स्थापिते तु सुरे चरेत् । तस्मिन्दिने[1] वैकरात्रं त्रिरात्रं[2] चाष्टरात्रकम्[3] ॥ १
उत्सवेन विना यस्मात्स्थापनं निष्फलं भवेत् । अयने विषुवे[4] चापि शयनोपवने[5] गृहे ॥ २
कारकस्यानुकूलो[6] वा यात्रां देवस्य कारयेत् । मङ्गलाङ्कुररोपैस्तु गीतनृत्यादि वाद्यकैः ॥ ३
शरावघटिकापाली[7] स्वङ्कुरारोहणे हिता[8] । यवाञ्शालींस्तिलान्मुद्गान्गोधूमान्सितसर्षपान् ॥ ४
कुलत्थमाषनिष्पावान्क्षालयित्वा तु वापयेत्[9] । पूर्वादौ च बलिं दद्याद्भ्रमन्दीपैः पुरं निशि ॥ ५
इन्द्रादेः कुमुदादेश्च सर्वभूतेभ्य एव च । अनुगच्छन्ति ते[10] तत्र प्रतिरूपधराः पुनः ॥ ६
पदे पदेऽश्वमेधस्य फलं तेषां न संशयः । आगत्य देवतागारं देवं विज्ञापयेद्गुरुः ॥ ७
तीर्थयात्रा त्वया[11] देव श्वः कर्तव्या सुरोत्तम । तस्या(दा)रम्भमनुज्ञातुमर्हसि[12] सर्वज्ञ सर्वदा ॥ ८
देवमेवं[13] तु विज्ञाप्य ततः कर्म समारभेत् । प्ररोहघटिकाढ्यां[14] तु वेदिकां भूषितां व्रजेत् ॥ ९
चतुःस्तम्भां तु तन्मध्ये स्वस्तिके प्रतिमां न्यसेत्[15] । काम्यार्थं लेख्य चित्रेषु स्थाप्य तत्राधिवासयेत्
वैष्णवैः सह कुर्वीत घृताभ्यङ्गं तु मूलतः । घृतधाराभिषेकं वा[16] सकलां शर्वरीं बुधः ॥ ११

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ क. ङ. च. °स्मिन्नब्दे चैक° । २ च °त्रं चतुरष्टक° । ३ क. ङ. चान्तराष्टक° । ४ क. ङ. च. मिष्यजं । ५ क. ङ. च. °यने स्थापने । ६ क. ङ. च. °कूले वा । ७ ख. ग. °लीस्त्वङ्कु° । ८ ख. ग. हिताः । ९ क ङ. मापयेत् । च. मायया । १० क. च. ये । ११ ख. ग. घ. मया । १२ क. च. °मर्हसे देव स° । ख. ग. घ. °मर्हसे देव सर्वथा । दे° । १३ क. ङ. च. °वदेवं । १४ ख. ग. ध. °का स्वर्णवे° । १५ क. ङ. °त् । कर्मार्थान्ते पवित्रे° । च. °त् । कर्मार्थाह्र्ण्याचि° । १६ च. च ।

दर्पणं दर्श्य नीराजगीतवाद्यैश्च मङ्गलम् । वी(वी)जनं पूजनं दी[3]पगन्धपुष्पादिभिर्यजेत् ॥ १२
हरिद्रामुक्तकाश्मीरशुक्लचू[4]र्णादि मूर्धनि । प्रतिमायाश्च भक्तानां सर्वतीर्थ[5]फलं(ले?) धृते ॥ १३
स्था[6]पयित्वा समभ्यर्च्य यात्राबिम्बं रथे स्थितम् । नयेद्गुरुर्नदीं ना[7]दैश्छत्राद्यै राष्ट्र[8]पालिकाम् ॥
निम्नगा(गां) योजनादर्वा[9]क्तत्र वेदीं तु कारयेत् । वाहनादवतार्यैनां तस्यां वेद्यां निवेशयेत्॥१५
चरुं च श्रपयेत्तत्र पायसं होमयेत्ततः । *अब्लिङ्गै[10]र्वैदिकैर्मन्त्रैस्तीर्थान्यावाहयेत्ततः ॥ १६
आपो हि ष्ठोपनिषदैः(?) पूजये[11]दर्घ(र्घ्य)मुख्यकैः । पुनर्देवं समादाय तो[12]यं कृत्वाऽघमर्षणम्॥१७
स्नायान्महा[13]जनैर्विप्रैर्वेद्यामुत्तार्य तं न्यसेत् । पूजयित्वा त[14]द्दद्वा च प्रासादं तु नयेत्ततः ॥ १८
पूजयेत्पाव[15]कस्थं तु गुरुः स्याद्भुक्तिमुक्तिकृत् ॥ १९

इत्यादिमहापुराण आग्नेय उत्सवविधिकथनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९५२

---

अथ नवषष्टितमोऽध्यायः ।

---

## स्नपनोत्सवविस्तारकथनम् ।

अग्निरुवाच—

ब्रह्मञ्शृणु प्रवक्ष्यामि स्नपनोत्सवविस्तरम् । प्रासादस्याग्रतः कुम्भान्मण्डपे म[16]ण्डले न्यसेत् ॥१
कुर्याद्ध्यानार्चनं होमं हरेरादौ च क[17]र्माणि । सहस्रं वा शतं वाऽपि होमयेत्पूर्णया सह ॥ २
स्नानद्रव्याण्यथाऽऽहृत्य कलशांश्चापि विन्यसेत् । अधिवास्य सूत्रकण्ठान्धारये[18]न्मण्डितो घटान्॥३
चतुरस्रं पुरं कृत्वा [19]रुद्रैस्तं प्र(स्तत्प्र)विभावयेत् । म[20]ध्ये तु नवकं स्थाप्य पार्श्वे[21]पङ्क्तिं प्रमार्जयेत् ॥
शालिचूर्णादिनाऽऽपूर्य पूर्वादिनवकेषु च । कुम्भमुद्रां ततो बद्ध्वा घटं तत्राऽऽनयेद्बुधः ॥ ५
पुण्डरीकाक्षमन्त्रेण दर्भांस्तांस्तु विसर्जयेत् । अद्भिः पूर्णं सर्वरत्नयुतं मध्ये न्यसेद्घटम् ॥ ६
यवव्रीहितिलांश्चैव नीवाराञ्श्यामकान्क्रमात् । कुलित्थमुद्गसिद्धार्थान्मुक्त्वाऽन्यानष्टदिक्षु च ॥७
ऐन्द्रे तु नवके मध्ये घृतपूर्णं घटं न्यसेत् । पलाशाश्वत्थन्यग्रोधबिल्वोदुम्बरशी(क्षी)[22]रिणाम् ॥ ८
जम्बूशमीकपित्थानां त्वक्कषायैर्घटाष्टकम् । आग्नेयनवके मध्ये मधुपूर्णं घटं न्यसेत् ॥ ९
गोशृङ्गन[23]गगङ्गाम्बुगजेन्द्रदर्शनेषु च । तीर्थक्षेत्र[24]ख[25]लेष्वष्टौ मृ[26]त्तिकाः स्युर्घटाष्टके ॥ १०

---

* एतदर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ख. ग. घ. दर्शनी° । २ ख. °राज गी° । ३ क. ख. ग. घ. च. दीप ग° । ४ क. ङ. च. °र्णानि मू° । ५ क. ङ. च. °फलैर्घृते । ६ क. ङ. च. स्नापयित्वा । ७ ख. ग. घ. °दैश्छात्रा° । ८ ख. ग. घ. °लिकाः । नि° । ९ क. ङ. च. °यैव त° । १० ख. ग. घ. वै । ११ च. °येद्दर्भमु° । १२ च. °ये दत्त्वाऽघ° । १३ क. च. °जलैर्वि° । १४ क. च. °दद्वा च प्रा° । ङ. °दद्वाच्च प्रा° । १५ ख. ग. घ. °कस्तं तु गु° । १६ ख. ग. घ. मण्डलं । १७ क. ङ. च. कर्मसु । १८ ङ. °येन्मण्डले पुटा° । १९ क. ङ. च. रुद्रेऽस्त्रं प्रविभाजये° । २० ख. ग. घ. °ध्येन तु चतुरस्रा° । २१ क. ङ. च. पङ्क्तीः प्रसर्ज° । २२ ख. ग. घ. °रसारिकाम् । २३ क. ङ. °गरङ्गासुग° । च. °गमङ्गासुग° । २४ ङ. °त्रवरे मुष्टौ । २५ क. च. °खरेष्वष्टौ । २६ क. ङ. च. °त्तिकाश्च घटा° ।

याम्ये तु नवके मध्ये तिलतैलघटं न्यसेत् । नारङ्गमथ जम्बीरं खर्जूरं[१] मृत्तिका(का) क्रमात्॥ ११
नारिकेलं[२] न्यसेत्पूगं दाडिमं पनसं फलम् । नैर्ऋते नवके मध्ये क्षीरपूर्णं घटं न्यसेत् ॥ १२
कुङ्कुमं नागपुष्पं च चम्पकं मालतीं क्रमात् । मल्लिकामथ पुंनागं करवीरं महोत्पलम् ॥ १३
पुष्पाणि चान्ये(न्य)नवके मध्ये वै नारिकेलकम् । नादेयमथ सामुद्रं सारसं कौप्यमेव च ॥ १४
वर्षजं हिमतोयं च नैर्झरं गाङ्गमेव च । उदकान्यथ वायव्ये[३] नवके कदलीजलम् ॥ १५
सहदेवीं कुमारीं च सिंहीं व्याघ्रीं तथाऽमृताम् । विष्णुपर्णीं[४] शतनिभां वचां दिव्यौषधीर्न्यसेत्
पूर्वादौ सौम्यनवके मध्ये दधिघटं न्यसेत् । पत्रमेलां त्वचं कुष्ठं वालकं चन्दनद्वयम् ॥ १७
लतां कस्तूरिकां चैव कृष्णागरुमनुक्रमात् । सिद्धद्रव्याणि पूर्वादौ शान्तितोयमथैकतः ॥ १८
चन्द्रतारं क्रमाच्छुक्लां[५] गिरिसारं त्रपु न्यसेत् । घोषसारं तथा सीसं[६] पूर्वादौ रत्नमेव च ॥ १९
घृतेनाभ्यज्य[७] चोद्वर्त्य स्नपयेन्मूलमन्त्रतः । गन्धाद्यैः पूजयेद्वह्नौ हुत्वा[८] पूर्णाहुतिं चरेत् ॥ २०
बलिं च सर्वभूतेभ्यो भोजयेद्दत्तदक्षिणः[९] । देवैश्च मुनिभिर्भूपैर्देवं संस्नाप्य[१०] चेश्वराः[११] ॥ २१
बभूवुः[१२] स्नापयित्वेत्थं स्नपनोत्सवकं चरेत् । अष्टोत्तरसहस्रेण घटानां सर्वभाग्भवेत् ॥ २२
यज्ञावभृथस्नाने[१३] च पूर्णसंस्नापने[१४] कृतम् । गौरीलक्ष्मीविवाहादि चोत्सवं स्नानपूर्वकम् ॥ २३

इत्यादिमहापुराण आग्नेये स्नपनोत्सवविधिकथनं नाम नवषष्टितमोऽध्याय. ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९७५

---

अथ सप्ततितमोऽध्यायः ।

---

## पादपप्रतिष्ठाविधिः ।

श्रीभगवानुवाच—

प्रतिष्ठां पादपानां च वक्ष्येऽहं भुक्तिमुक्तिदाम् । सर्वौषध्यो(ध्यु)दकैर्लिप्तान्[१५]पिष्टातकविभूषितान् १
वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् । सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् ॥ २
हेमशलाकयाऽञ्जनं वेद्यां तु फलसप्तकम् । अधिवासयेच्च प्रत्येकं[१६] घटान्बलिं निवेदयेत्[१७] ॥ ३
इन्द्रादेरधिवासेऽथ होमः कार्यो वनस्पतेः । * ऋग्यजुःसाममन्त्रैश्च वारुणैर्मत्तभैरवैः[१८] ॥ ४
वृक्षवेदिककुम्भैश्च स्नपनं द्विजपुंगवाः । तरूणां यजमानस्य कुर्युश्च[१९] यजमानकः ॥ ५
भूषितो दक्षिणां दद्याद्गोभूभूषणवस्त्रकम् । क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम् ॥ ६
होमास्तिलैराज्यैः[२०] कार्यस्तु पलाशसमिधैस्तथा । आचार्ये द्विगुणं दद्यात्[२१]पूर्ववन्मण्डपादिकम् ॥ ७

---

* एतस्मादनन्तरम्—" वृक्षमध्यादुत्सृजेद्गां ततोऽभिषेक च मन्त्रतः " इत्यर्धमाधिकं ख. ग. घ. पुस्तकेषु ।

---

१ क. ङ. च. °रं पूर्विकाः क्र° । २ क. ङ. च. नालिकेरं । ३ क. ङ. च. वा मध्ये न° । ४ क. ङ. च. °पर्त्री श° । ५ क. ङ. च. °माद्गुल्फं गि° । ६ ख. ग. घ. शीर्षं । ७ क. ङ. च. °नाऽऽसह्य चो° । ८ क. ङ. च. कृत्वा । ९ ख. ग. घ. °क्षिणाम् । दे° । १० ख. ग. घ. संस्थाप्य । ११ क. °श्वरः । बभूव स्ना° । १२ ख. ग. घ. °वुः स्थाप° । १३ क. ङ. च. °थसंस्थाने पू° । १४ क. ङ. च. °पने कृते । गौ° । १५ क. ङ. च. °कैर्दीप्ता° । १६ क. ङ. च. °कं कुम्भान्ब° । १७ ख. ग. घ. °दनम् । इ° । १८ ख. ग. घ. °मङ्गलै र° । १९ क. ङ. च कुर्याच्च य° । २० क. ख. घ. च. °लाज्यै° का° । २१ क. ङ. च. °द्यात्पुरोव° ।

पापनाशः परा सिद्धिर्वृक्षारामप्रतिष्ठया । स्कन्दायेशो यथा प्राह प्रतिष्ठाद्यं तथा शृणु ॥ ८
सूर्येशगणशक्त्यादेः परिवारस्य वै हरेः ॥ ९

इत्यादिमहापुराण आग्नेये पादपप्रतिष्ठाविधिवर्णनं नाम सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९८४

---

अथैकसप्ततितमोऽध्यायः ।

---

गणपपूजाविधिः ।

ईश्वर उवाच—

गणपूजां प्रवक्ष्यामि निर्विघ्ना[1]याखिला[2]र्थदाम् । गणाय स्वाहा हृदयमेकदंष्ट्राय वै शिरः ॥ १
[3]गजकर्णिने च शिखा गजवक्त्राय च[4]र्म च । महोदराय सुदण्डहस्तायाक्षि तथाऽस्त्रकम् ॥ २
गणो गुरुः पा[5]दुका च शक्त्यनन्तौ च ध[6]र्मकः । मुख्या[7]स्थिमण्डलं चाधश्चोर्ध्व(र्ध्वं) छदनमर्चयेत् ॥ ३
पद्मक[8]र्णिकबीजं [9]चं ज्वा[10]लि[11]नीं नन्दयाऽर्चयेत् । सूर्येशा कामरूपा च उदया कामवर्तिनी ॥ ४
सत्या च विघ्ननाशा च आसनं गन्ध[12]मृत्तिक[13]ाँ । वंशो घोरं च दहनं प्लवो लम्बं तथा स्मृतम् ॥५
लम्बोदराय विद्महे महोदराय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ ६
गणपतिर्गणाधिपो गणेशो गणनायकः । गणक्रीडो वक्रतुण्ड एकदंष्ट्रो महोदरः ॥ ७
गजवक्त्रो लम्बकुक्षिर्विकटो विघ्ननाशनः । धूम्रवर्णो महेन्द्राद्याः पूज्या गणपतेः स्मृताः ॥ ८

इत्यादिमहापुराण आग्नेये गणपपूजाविधिकथनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९९२

---

अथ द्विसप्ततितमोऽध्यायः ।

---

स्नानविधिः ।

ईश्वर उवाच—

वक्ष्यामि स्कन्द नित्याद्यं स्नानं पूजां प्रतिष्ठया । स्नात्वे[14]ाँ शिलां समुद्धृत्य मृदमष्टा[15]ङ्गुलां ततः ॥१
सर्वात्मना स[16]मुद्धृत्य पुनस्तेनैव [17]पूजयेत् । शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत् ॥ २
तृणादि शिखयोद्धृत्य ब्रह्मणा विभजे[18]त्त्रिधा । एकया नाभिपादान्तं प्रक्षाल्य पुनरन्यया ॥ ३
अस्त्रा[19]भिलब्धया लक्ष्मीदीप्तया सर्वविग्रहम् । निरुध्या[20]ऽऽस्याक्षि पाणिभ्यां प्राणान्संयम्य वा[21]रिणि
निमज्ज्याऽऽसीत ह्यस्त्रं स्मरन्कालानलप्रभम् । मलस्नानं विधायेत्थं समुत्थाय जलान्तरात् ॥४

---

१ ग. °घ्नामखि° । २ घ. °लापदा° । ३ च. लम्बकर्णिने । ४ च. वर्म । ५ ख. ग. पादुका । ६ क. च. कर्मकः । ७ क. च. °ख्याग्निम° । ८ ख. ग. घ. °र्णिकाबीजाश्च ज्वा° । ९ क. च. °बीजांश्च जालि° । १० ङ. च. च जालि° । ११ ख. ग. घ. °लिनी नन्दनार्चे° । १२ क ङ. च. °न्धमृतिका । १३ क. च. °का । यं शोषणं च दहनं नष्टवो वितथाऽमृतम् । १४ ख. °त्वाऽसिना स° । १५ ख. ग. ङ. °ङ्गुलं त° । १६ क. समाहृत्य प्रमष्टेनै° । ङ. च. समाहृत्य प्रनष्टेनै° । १७ ख. पूरयेत् । १८ क. ङ. च. °जेद्द्विधा । १९ ख. °स्त्रादि लब्धमारभ्य दी° । २० ख. ग. °ध्याक्षाणि पा° । २१ ख. ग. वारिणा ।

अस्त्रसंध्यामुपास्याथ विधिस्नानं समाचरेत्। सारस्वतादितीर्थानामेकमङ्कुशमुद्रया ॥ ६
हृदाऽऽकृष्य तथाऽऽस्थाप्य पुनः संहारमुद्रया। शेषं मृद्भागमादाय प्रविश्याऽऽनाभि वारिणि ७
वामपाणितले कुर्याद्भागत्रयमुदङ्मुखः। अङ्गैर्दक्षिणमेकाद्यं पूर्वमस्त्रेण सप्तधा ॥ ८
शिवेन दशधा सौम्यं यजेद्भागत्रयं क्रमात्। सर्वदिक्षु क्षिपेत्पूर्वं हुंफडन्तेगवाणुना ॥ ९
कुर्याच्छिवेन सौम्येन शिवतीर्थेन तु क्रमात्। सर्वाङ्गमङ्ग जप्तेन मूर्धादि चरणावधि ॥ १०
दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम्। पिधाय खानि सर्वाणि षण्मुखीकरणेन च ॥ ११
शिवं स्मरन्निमज्जेत हरिं गङ्गेति वा स्मरन्। वौषडन्तषडङ्गेन के कुर्यादभिषेचनम् ॥ १२
कुम्भपात्रेण रक्षार्थं पूर्वादौ विक्षिपेज्जलम्। स्नात्वा राजोपचारेण सुगन्धामलकादिभिः ॥ १३
स्नात्वा चोत्तीर्य तत्तीर्थं संहारिण्योपसंहरेत्। अथातो विधिशुद्धेन संहितामन्त्रितेन च ॥ १४
निवृत्त्यादिविशुद्धेन भस्मना स्नानमाचरेत्। शिरसः पादपर्यन्तं हुंफडन्तेगवाणुना ॥ १५
तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत्। ईशतत्पुरुषाघोरगुह्यकाजातसंवरैः ॥ १६
क्रमेणोद्धर्तयेन्मूर्ध्नि वक्त्रहृद्गुह्यविग्रहान्। संध्यात्रये निशीथे च वर्षापूर्वावसानयोः ॥ १७
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चाऽऽवश्यकादिकम्। स्त्रियं नपुंसकं शूद्रं बिडालशवमूषिकम्
स्नानमाग्नेयकं स्पृष्ट्वा शुच्यम्बुचुलकं चरेत्। सूर्यांशुवर्षसंपर्के प्राङ्मुखेनोर्ध्वबाहुना ॥ १९
माहेन्द्रं स्नानमैशेन कार्यं सप्तपदावधि। गोसंघमध्यगः कुर्यात्खुरोत्खातकरेणुभिः ॥ २०
पावनं मूलमन्त्रेण स्नानं तद्धर्मणाऽथवा। सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ॥ २१
मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि। मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ॥ २२
कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत्। वैष्णवादौ च तन्मन्त्रैरेवं स्नानानि कारयेत् ॥ २३
संध्याविधिं प्रवक्ष्यामि मन्त्रैर्भिन्नैः समं गुह। संवीक्ष्य त्रिः पिबेदम्बु ब्रह्मतीर्थेन शंकरैः ॥ २४
स्वधान्तैरात्मतत्त्वाद्यैस्ततः खानि स्पृशेन्मृदा। सकलीकरणं कृत्वा प्राणायामेन संस्थितः ॥२५
त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहितम्। आचम्य न्यस्य संध्यां च ब्राह्मीं प्रातः स्मरेन्नरः ॥
हंसपद्मासनां रक्तां चतुर्वक्त्रां चतुर्भुजाम्। अक्षाक्षमालिनीं दक्षे वामे दण्डकमण्डलुम् ॥ २७
तार्क्ष्यपद्मासनां ध्यायेन्मध्याह्ने वैष्णवीं सिताम्। शङ्खचक्रधरां वामे दक्षिणे सगदाभयाम् ॥ २८
रौद्रीं ध्यायेद्वृषाब्जस्थां त्रिनेत्रां शशिभूषिताम्। त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम् २९
सौक्षिण्यः कर्मणां संध्या आत्मानं तत्प्रभानुगम्। चतुर्थी ज्ञानिनः संध्या निशीथादौ विभाव्यते
हृद्बिन्दुब्रह्मरन्ध्रेषु अरूपा तु परे स्थिता। शिवे चैव परो यस्तु ना संध्या परमोच्यते ॥ ३१
पैत्रं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः। ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैवं कराग्रतः ॥ ३२

---

१ ख. °थाऽऽस्नाप्य। २ ख. ग. °मन्त्रेण। ३ ख. ग. °म्यं जपेद्भा°। ४ ङ. °क्षु यजेत्पू°। ५ ख. ग. °न्तशराणु°। ६ क. च. °तीर्थं रुजक°। ख. °तीर्थं भुजक°। ७ क. ङ. च. समारभ्य। ८ क. ङ. °न्तं हूं फ°। ख. ग. °न्तं हरूं फ°। ९ ख. ग. °न्तशराणु°। १० क. च. °वानना। ११ ङ. °ना। तैः कृत्वाऽऽचमनस्ना°। १२ क. च. मतं स्ना°। १३ ख. °संबरैः। १४ क. ङ. च. हुत्वा। १५ क. ङ. च. °द्रं वितानश°। १६ क. ङ. च. शुचावुद्धूननं च°। १७ क. ङ. च. °मैशानं का°। १८ च. गोहंसम°। १९ च. °योत्तच्छरो°। २० ख. ग. °नं नवम°। २१ ख. ग. तत्कर्म°। २२ क. ख. ग. च. स्नानादि। २३ क. ङ. च. समन्ततः। सं°। २४ क. ङ. च. संवरैः। २५ क. च. °संमिताम्। ङ. °संमितम्। २६ ख. °म्। प्रस्कन्दमा°। ग. °म्। शङ्खपद्मान्वितां द°। २७ क. ङ. च. साक्षिणः। २८ ख. ग. शिवरोधः प°। २९ क. ङ. च. परे यस्तु सामर्थ्यात्पर°।

सव्यपाणितले वह्नेस्तीर्थं सोमस्य वामतः । ऋषीणां तु समग्रेषु अङ्गुलीपर्वसंधिषु[1] ॥ ३३
ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् । मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत् ॥ ३४
वामपाणिपतत्तोययोजनं सव्यपाणिना । उत्तमाङ्गे[2] क्रमान्मन्त्रैर्मार्जनं समुदाहृतम् ॥ ३५
नीत्वा तदुपनासाग्रं दक्षपाणिपुटस्थितम् । बोधरूपं [3]शिवं तोयं वाममाकृष्य स्तम्भयेत् ॥ ३६
तत्पापं कज्जलाभासं पिङ्गर्या[4]ऽऽरिच्य मुष्टिना । क्षिपेद्वज्रशिलायां[5] यत्तद्भवेदघमर्षणम् ॥ ३७
स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितम् । शिवायार्घ्याञ्जलिं दत्त्वा गायत्रीं शक्तितो यजेत् ३८
तर्पणं संप्रवक्ष्यामि देवतीर्थेन मन्त्रकात् । तर्पयेद्धौ शिवायेति स्वाहाऽन्यान्स्वाहया सुतान्[6] ॥ ३९
[7]हं हृदयाय [8]ह्रीं शिरसे [9]हूं शिखायै [10]हैं कवचाय[11] । अस्त्रायाष्टौ देवगणान्हृद्राऽऽदित्येभ्य एव च ॥
हां [तु] वसुभ्यो रुद्रेभ्यो विश्वेभ्यश्चैव मरुद्भ्यः । भृगुभ्यो हामङ्गिरोभ्य ऋषीन्कण्ठोपवीत्यथ ४१
अत्रयेऽथ वासिष्ठाय नमश्चाथ पुलस्तये[12] । क्रतवे भारद्वाजाय विश्वामित्राय वै नमः ॥ ४२
प्रचेतसे मनुष्यांश्च सनकाय वषट्तथा । हां सनन्दायाथ वषट्सनातनाय वै वषट् ॥ ४३
सनत्कुमाराय वषट्कपिलाय तथा वषट् । पञ्चशिखाय[13] द्युभवे संलग्नकरमूलतः ॥ ४४
सर्वेभ्यो भूतेभ्यो वषड्भूतान्देवपितॄनथ । दक्षस्कन्धोपवीती च कुशमूलाग्रतस्तिलैः[14] ॥ ४५
कव्यवाहानलायाथ सोमाय च यमाय च । अर्यम्णे चाग्निसोमाय बर्हिषद्भ्यः[15] स्वधायुतान् (तम्)
आज्यपाय च सोमाय विशेष[16][17]सुरवत्पितॄन् । [18]ॐ हामीशानाय पित्रे[19] स्वधा दद्यात्पितामहे ॥ ४७
शान्तप्रपितामहाय[20] तथा प्रेतपितॄंस्तथा । पितृभ्यः पितामहेभ्यः स्वधाऽथ प्रपितामहे ॥ ४८
वृद्धप्रपितामहेभ्यो मातृभ्यश्च स्वधा तथा । [21]हां मातामहेभ्यः स्वधा [22]हां प्रमातामहेभ्यश्च ॥ ४९
वृद्धप्रमातामहेभ्यः सर्वेभ्यः पितृभ्यस्तथा । सर्वेभ्यः स्वधा ज्ञातिभ्यः सर्वाचार्येभ्य एव च ५०
दिशां दिक्पतिसिद्धानां मातॄणां ग्रहरक्षसाम् ॥ ५१

इत्यादिमहापुराणे आग्नेये स्नानादिविधिकथनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०४३

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

## सूर्यपूजाकथनम् ।

ईश्वर उवाच—

वक्ष्ये सूर्यार्चनं स्कन्द कराङ्गन्यासपूर्वकम् । अहं तेजोमयः सूर्य इति ध्यात्वा[23]ऽर्घ्यमर्चयेत् ॥ १
पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना । तं संपूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनम् ॥ २

---

१ क. ङ. च. °णिषु त° । २ ख. ग. °माङ्गैः क्र° । ३ ख. ग. सितं । ४ क. ङ. च. °या दिव्यमु° । ख °याऽऽविध्य मु° । ५ ख. ग. °यां तु उत्तरेद° । ६ ख. स्वनात् । ग. स्वतान् । ७ क. च. हां । ख. ग. ॐ । ८ ख. ग. ह्रीं । ९ ख. ग. ह्रूं । १० ख. ग. ह्रैं । ११ क. ङ. च. °य च । अ° । १२ क. ङ. च. प्रनष्टये । १३ क. ङ. च. °य द्युभ° । १४ क. च. °लैः । हव्य° । १५ क. ङ. च. °भ्यः स्रुचा यु° । १६ ङ. °शेषः सुरसान्पितॄ° । १७ क. च. °षमुरसान्पितॄ° । १८ ख. ग. ॐ हरामी° । १९ क. ङ. च. °त्रे पृषदाज्याय पिता° । २० क. ङ. च. °य अथ प्रे° । २१ ख. ग. ह्रां । २२ ख. ग. ह्रां । २३ क. ख. ग. ङ. च. °त्वाऽर्घ्यम° ।

संप्रोक्ष्य तज्जलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत्। ॐ अं हृद्बीजादि सर्वत्र पूजनं दण्डिपिङ्गलौ ॥ ३
द्वारि दक्षे वामपार्श्वे ईशाने अङ्गणाय च। अग्नौ [1]गुरुं पीठमध्ये प्रभूतं चाऽऽसनं यजेत् ॥ ४
अग्न्यादौ वि[2]मलं सारमाराध्यं परमं सुखम्। सितरक्तपीतनीलवर्णान्सिंहानिभान्यजेत् ॥ ५
पद्ममध्ये रां च दीप्तां रीं सूक्ष्मां रुं जयां क्रमात्। रूं भद्रां रें विभूतीश्च विमलां रैममोघया ६
रों रौं [च] विद्युता शक्ति पूर्वाद्याः सर्वतोमुखाः। रं मध्ये अर्कासनं स्यात्सूर्य[3]मूर्तिं षडक्षरम् ॥ ७
ॐ हं [4]खं [5]खशोल्कायेति यजेदावाह्य भास्करम्। ललाटाकृष्टम[6]ञ्जल्यां ध्यात्वा रक्तं न्यसेद्रविम् ॥
ह्रां ह्रीं सः सूर्याय नमो मुद्रयाऽऽवाहनादिकम्। विधाय प्रीतये बिम्बमुद्रां गन्धादिकं ददेत ॥
पद्ममुद्रां बिम्बमुद्रां प्रदर्श्याग्नौ हृदीरितम्। ॐ आं हृदयाय नमः, अर्काय शिरसे तथा ॥ १०
भूर्भु[7]वः स्वः [8]सुरेशाय शिखायै नैर्ऋते यजेत्। हुं[9] कवचाय वायव्ये [10]ह्रां नेत्रायेति मध्यतः ॥ ११
[11]वः, अस्त्रायेति पूर्वादौ ततो मुद्राः प्रदर्शयेत्। धेनुमुद्रा हृदादीनां गोविषाणा च नेत्रयोः ॥ १२
अस्त्रस्य त्रासनी योज्या ग्रहाणां च नमस्क्रिया। सों सोमं बुं बुधं बृं च जीवं भं भार्गवं यजेत्
दले पूर्वादिकेऽग्न्यादौ अं(भं) भौमं शं शनैश्चरम्। रं [12]राहुं कें केतवे च गन्धाद्यैश्च [13]खशोल्किना
मूलं जप्त्वा[14]ऽर्घ्यपात्राम्बु दत्त्वा सूर्याय संस्तुतिः। नत्वा पराङ्मुखं [15]चार्कं क्षमस्वेति ततो वदेत्
शराणुना फडन्तेन समाहृत्याणुसंहृ[16]तिम्। हृत्पद्मे शिव सूर्येति संहारि[17]ण्योपसंस्कृतिम् ॥ १६
योजयेत्तेजश्चण्डाय रविनिर्माल्यमर्पयेत्। अभ्यर्च्येशजपाद्ध्यानाद्धोमात्सर्वं रवेर्भवेत् ॥ १७

इत्यादिमहापुराण आग्नेये सूर्यपूजाविधिकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०६०

---

अथ चतुःसप्ततितमोऽध्यायः।

---

## शिवपूजाविधिकथनम्।

ईश्वर उवाच—

शिवपूजां प्रवक्ष्यामि आचम्य प्रण[18]वार्घ्यवान्। द्वारमस्त्राम्बुना प्रोक्ष्य होमादिद्वारपा[19]न्यजेत् ॥ १
गणं सरस्वतीं लक्ष्मीमूर्ध्वोदुम्बरके यजेत्। नन्दिगङ्गे [20]दक्षशाख(खा)स्थिते वामगते यजेत् ॥ २
महाकालं च यमुनां दिव्यदृष्टिनिपाति(त)तः। उत्सार्य दिव्यान्विघ्नांश्च [21]पुष्पक्षेपान्तरिक्षगान् ॥
दक्षपार्ष्णित्रिभिर्घातैर्भूमिष्ठान्यागमन्दिरम्। देहलीं लङ्घयेद्वामशाखामाश्रित्य वै विशेत् ॥ ४
प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बरे। ॐ हां वास्त्वधिपतये ब्रह्मणे मध्यतो यजेत् ॥ ५
निरीक्षणादिभिः शस्त्रैः शुद्धानादाय [22]गेड्डुकान्। लब्धानुज्ञः शिवान्मौनी गङ्गादिकमनुव्रजेत् ॥

---

१ क. च. गुरुमेठ°। २ ख. °मलासा°। ३ ख. ग. °मूर्तिष°। ४ घ. खं खोल्का°। ५ क. खसोल्का°। च. खषोल्का°। ६ क. च. °अन्यां ध्या°। ७ क ङ. च. °वः स्वरे कालिनि शि°। ख. °वः स्वरोंकालिनि शि°। ८ ग. ख. सुरं कालिनि शि°। ९ क. ङ. च हूं। ख. ग. हूरूं। १० क. ख. ग. ङ. च. भां। ११ क. रः। १२ क. ख. ग. ङ च कं। १३ क च खपोल्कि°। ग. खसोल्कि°। घ. खखोल्कया। मू°। ङ. खखोल्कि°। १४ क. ख. ग. ङ. च. °त्वाऽर्घपा°। १५ क. ख. ग. ङ. च चार्घं क्ष°। १६ ख °हृतिः। हृ°। १७ ख. ग. °सहृतम्। १८ क. ख. ग. ङ. च. °वार्घवा°। १९ ख. ग. °पान्न्यसेत्। २० घ. दक्षिणेऽथ स्थि°। २१ घ. पुष्पाक्षे°। २२ ख. गन्त्वगान्। क. ङ. च. शत्रुकान्।

( शिवपूजाविधिकथनम् )

पवित्राङ्गः प्रजप्तेन वस्त्रपूतेन वारिणा । पूरयेदम्बुधौ तांस्तान्गायत्र्या हृदयेन वा ॥ ७
गन्धकाक्षतपुष्पादिसर्वद्रव्यसमुच्चयम् । संनिधीकृत्य पूजार्थं भूतशुद्ध्यादि कारयेत् ॥ ८
देवदक्षे ततो न्यस्य सौम्यास्यश्च शरीरतः । संहारमुद्रयाऽऽदाय मूर्ध्नि मन्त्रेण धारयेत् ॥ ९
भोग्यकर्मोपभोगार्थं[1] पाणिकच्छपिकाख्यया । हृदम्बुजे निजात्मानं द्वादशान्तपदेऽथ वा ॥ १०
शोधयेत्पश्च भूतानि संचिन्त्य सुषिरं तनौ । चरणाङ्गुष्ठयोर्युग्मान्सुषिरान्तर्बहिः स्मरेत् ॥ ११
शक्तिं हृद्व्यापिनीं पश्चाद्धूंकारे पावकप्रभे । रेन्ध्रमध्ये[2] स्थिते कृत्वा[3] प्राणरोधं हि चिन्तकः[4] ॥ १२
निवेशयेद्रेचकान्ते फडन्तेनाथ तेन च । हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रे विभिद्य च ॥ १३
ग्रन्थीन्[5]निर्भिद्य हूंकारं मूर्ध्नि विन्यस्य जीवनम् । संपुटं हृदयेनाथ पूरका[6]हितचेतनम् ॥ १४
हूं[7] शिखोपरि विन्यस्य शुद्धं बिन्द्वात्मकं[8] स्मरेत् । कृत्वाऽथ कुम्भकं शंभावेकोद्घातेन योजयेत् ॥
रेचकेन बीजवृत्त्या शिवे लीनोऽथ शोधयेत् । *प्रतिलोमं स्वदेहे[9] तु बिन्द्वन्तं तत्र बिन्दुकम् ॥ १६
लयं नीत्वा महीवातौ[10] जलवह्नी परस्परम् । द्वौ द्वौ साध्यौ तथाऽऽकाशमविरोधेन तच्छृणु ॥ १७
पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम्[11] । हौमित्यात्मीयबीजेन तन्निवृत्तिकलामयम् ॥ १८
पादादारभ्य मूर्धान्तं विचिन्त्य चतुरस्रकम् । उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत् ॥ १९
अर्धचन्द्रं द्रवं सौम्यं शुभ्रमम्भोजलाञ्छितम् । [+ह्रीमित्यनेन बीजेन प्रतिष्ठारूपतां गतम् ॥ २०
संयुक्तं राममन्त्रेण पुरुषान्त[13]मकारणम् । अर्ध्यं चतुर्भिरुद्धातैर्वह्निभूतं विशोधयेत् ॥ २१
आग्नेयं मण्डलं त्र्यस्रं रक्तं स्वस्तिकलाञ्छितम् । हूमित्यनेन बीजेन विद्यारूपं विभावयेत् ॥ २२
घोराणुत्रिभिरुद्धातैर्जलभूतं विशोधयेत् । षडस्रं मण्डलं वायोर्बिन्दुभिः षड्भिरङ्कितम् ] ॥ २३
कृ[14]ष्णं[15] हैमितिबीजेन जातं शान्तिकलामयम् । संचिन्त्योद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ॥ २४
नभो बिन्दुमयं वृत्तं बिन्दुशक्ति[16]विभूषितम् । व्योमाकारं सुवृत्तं च शुद्धस्फटिकनिर्मलम् ॥ २५
हौंकारेण फडन्तेन शान्त्यतीतकलामयम् । ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥ २६
आप्याययेत्ततः सर्वं मूलेनामृतवर्षिणा । आधाराख्या(ख्य)मनन्तं च धर्मज्ञानादिपङ्कजम् ॥ २७
हृदाऽऽसनमिदं ध्यात्वा [*मूर्तिमावाहयेत्ततः । स्रष्ट्या शिवमयं तस्या[17]त्मानं द्वादशान्ततः २८
अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः । +दिव्यामृतेन संप्लाव्य कुर्वीत सकलीकृतम् ॥ २९
हृदयादिकरान्तेषु] कनिष्ठाद्यङ्गुलीषु च । हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ॥ ३०
अस्त्रेण(णाऽऽ)रक्ष्य प्राकारं [18]तनुत्रेणाथ तद्बहिः । शक्तिजालमधश्चोर्ध्वं महामुद्रां प्रदर्शयेत् ॥ ३१
आपादमस्तकं यावद्भावपुष्पैः शिवं हृदि । पद्मे यजेत्पूरकेण आकृष्टामृ[19]तसद्घृतैः ॥ ३२

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु । * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । + इदमर्धं च. पुस्तके नास्ति ।

---

१ क. च. °र्थं याने कच्छापकाक्षया । ङ °र्थं जने कच्छापकाक्षया । २ क. ङ. च चन्द्रमध्ये । ३ क. च. °त्वा प्रणवे वह्निचि° । ४ क. च. °न्तकम् । नि । ५ क. च. °न्निवर्त्य हुंका° । ख. ग. °न्निर्वर्ण्य हूं° । ६ ख. °काहृत° । ७ ख. हूरूं । ८ ख. ग. शुद्धिविद्वानुकं । ९ ख. स्वहेतौ तु विद्धं त त° । १० ख. महीपातौ । ११ ख. ग. °लाञ्छनम् । १२ क. ङ. च. °त्यार्थीय° । ख °त्यात्माय° । १३ ख. °न्तसका° । १४ क. च. कृष्टं हैमि° । ङ. कृष्टं हैमि° । १५ ख. ग. °ष्णं हूरैमि° । १६ ङ. °विशेषि° । १७ क. च. °माधानं । १८ क. घ. ङ. च. तन्मन्त्रेणा° । १९ क. ङ. च. °तसंवृतैः ।

शिवमन्त्रैर्नाभिकुण्डे तर्पयेत शिवानलम् । ललाटे बिन्दुरूपं च चिन्तयेच्छुभविग्रहम् ॥ ३३
[1]एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बु[2]शोधितम् । बिन्दु[3]प्रसूतपीयूषरूपतोयाक्षतादिना ॥ ३४
हृदाऽऽपूर्य[4] षडङ्गेन[5] पूजयित्वा[6]ऽभिमन्त्रयेत् । संरक्ष्य हेतिमन्त्रेण कवचे[7]नावगुण्ठयेत्[8] ॥ ३५
रचयित्वाऽर्घ्यमष्टाङ्कं[9] सेचयेद्धेनुमुद्रया । अभिषिञ्चेदथाऽऽत्मानं मूर्ध्नि तत्तोयबिन्दुना ॥ ३६
तत्रस्थं याग[10]संभारं प्रोक्षयेदस्त्रवारिणा । अभिमन्त्र्य हृदा पिण्डैस्तनुत्राणेन वेष्टयेत् ॥ ३७
दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा निजासने । विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥ ३८
स्नाने देवार्चने होमे भोजने यागयोगयोः । आवश्यके जपे धीरः सदा वाचंयमो भवेत् ॥ ३९
नादान्तोच्चारणान्मन्त्रं शोधयित्वा[11] सुसंस्कृ[12]ताम् । [13]पूजामभ्यर्च्य गायत्र्या सामान्या[14]र्घ्यमुपाहरेत् ॥
ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः । ऐशान्यां दिशि चण्डाय हृदयेन निवेदयेत् ॥ ४१
प्रक्षाल्य पिण्डिकालिङ्गे अस्त्रतोये ततो हृदा । अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनम् ॥ ४२
आत्मद्रव्यमन्त्रलिङ्गशुद्धौ सर्वान्सुरान्यजेत् । वायव्ये गणपतये हां गुरुभ्योऽर्चयेच्छिवे ॥ ४३
आधारशक्तिमङ्कुरनिभां कूर्मशिलास्थिताम् । यजेद्ब्रह्मशिलारूढं शिवस्यानन्तमासनम् ॥ ४४
विचित्र[15]केसरिप्रख्यानन्योन्यं पृष्ठदर्शिनः । कृतत्रेतादिरूपेण शिवस्याऽऽसनपादु[16]काम् ॥ ४५
धर्मं ज्ञानं च वैराग्यमैश्वर्यं चाग्निदिङ्मु[17]खान् । कर्पूरकुङ्कुमस्वर्णकज्जलाभान्यजेत्क्रमात् ॥ ४६
पद्मं च क[18]र्णिकामध्ये पूर्वादौ म[19]ध्यतो[20] नव । वरदाभयहस्ताश्च शक्तयो धृतचामराः ॥ ४७
[21]वामा ज्येष्ठा च रौद्री च काली कलविको[22]रिणी । बलविकार(रि)णी पूज्या बलप्रमथनी क्रमात्
हां सर्वभूतदमनी केसराग्रे मनोन्मनी । क्षित्यादिशुद्धविद्यां तु तत्त्वव्यापकमासनम् ॥ ४९
न्यसेत्सिंहासने देवं शुक्लं पञ्चमुखं विभुम् । दशबाहुं च खण्डेन्दुं दधानं दक्षिणैः करैः ॥ ५०
*शक्त्यृष्टिशूलखट्वाङ्गवरदं वामकैः करैः । डमरुं बीजपूरं च नीलाब्जं सूत्रमुत्पलम् ॥ ५१
द्वात्रिंशल्लक्षणोपेतां [23]शैवीं मूर्तिं तु मध्यतः । हां हं हां शिवमूर्तये स्वप्रकाशं शिवं स्मरन् ॥ ५२
ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् । ततो ललाटमध्यस्थं स्फुरत्ताराप्रतिप्रभम् ॥ ५३
[24]षडङ्गेन समाकीर्णं बिन्दुरूपं परं शिवम् । पुष्पाञ्जलिगतं ध्यात्वा ल[25]क्ष्यमू[26]र्तौ निवेशयेत् ॥ ५४
ॐ हां हौं शिवाय नम आवाहन्या हृदा ततः। आवाह्य(ह्याऽऽ)स्थाप्य स्थापन्या संनि[27]धायान्तिकं शिवम्
निरोधयेन्निष्ठुरया [28]कालकान्त्या फडन्त[29]तः । वि[30]घ्नानुत्सार्य मु[31]ख्याऽथ लिङ्गमुद्रां नमस्कृतिम् ॥५६

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. ग. एवं । २ ख. ग. °शोभित° । ३ क. ङ. च. °प्रस्रुत° । ४ ख. ग. °पूज्य ष° । ५ च. षडंशेन । ६ ख. ग. °यित्वा निम° । ७ ख. ग. °चेन विलुण्ठ° । घ. °चेन विगुण्ठ° । ८ क. ङ. च. °त् । वर्धयित्वाऽर्घम° । ९ क. ङ. च. °ङ्कं रोपये° । ख. ग. °ङ्कं रेचये° । १० क. ङ. च. °संस्कारं । ११ क. ङ. च. °त्वा पुरा कृतम् । १२ घ. °स्कृतम् । १३ घ. पूजनेऽभ्य° । १४ क. ख. ग. ङ. च. °न्यार्घमु° । १५ ख. केशविप्राख्या° । ग. °केशप्रख्यानमन्यो° । १६ क. ख. ग. ङ. च. °कान् । ध° । १७ क. ङ. च. °ङ्मुखाः । क° । १८ ख. ग. °र्णिकां म° । १९ ङ. °ध्यतोऽथ वा । व° । २० क. ङ. च. °तो न वा । व° । ख. ग. °तो न च । व° । २१ ख. रामा । २२ क. ङ. च. °का तथा । पू° । २३ क. ङ. च. गौरी । २४ क. ङ. च. पतङ्गेन । २५ ग. घ. लक्ष्मीमू° । २६ क. ङ. च. °मूर्तिं नि° । २७ क. ख. ग. ङ. च. °धानान्ति° । २८ क. ङ. च. कालकर्ण्या । २९ क. ङ. च. °तः । बिम्बान्° । ३० ख. °घ्नान्युत्सा° । ३१ क. ङ. च. °र्यं पष्ठ्याऽ° । घ. °र्यं विष्ठ्याऽ° ।

हृदाऽवगुण्ठयेत्पश्चादावाहः संमुखी[1] ततः । निवे[2]शनं[3] स्थापनं स्यात्संनिधानं तवास्मि भोः ॥५७
आकर्मकाण्डपर्यन्तं संनिधे[4]योऽपरिक्षयैः[5] । स्वभक्तेश्च प्रकाशो यस्तद्भवेदवगुण्ठनम् ॥ ५८
सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् । अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतम् ॥ ५९
चिच्छक्तिहृदयं शंभोः शिव ऐश्वर्यमष्टधा । शिखा वशित्वं चाभेद्यं तेजः कवचमैश्वरम् ॥ ६०
प्रतापो दुःसहश्चास्त्रमन्तरायापहारकम् । नमः स्वधा च स्वाहा च वौषट्चेति यथाक्रमम् ॥६१
हृत्पुरःसरमुच्चार्य पाद्यादीनि निवेदयेत् । पाद्यं पादाम्बुजद्वंद्वे वक्त्रे[6] स्वाचमनीयकम् ॥ ६२
अर्घ्यं शिरासि देवस्य दूर्वापुष्पाक्षतानि च । एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम् ॥ ६३
यजेत्पञ्चोपचारेण विधिना कुसुमादिभिः । *अभ्युक्ष्योद्वर्त्य नि[7]र्मृज्य राजिकालवणादिभिः ६४
अर्घ्योदा[8]बिन्दुपुष्पाद्यैर्गेंडूकैः[9] स्नापयेच्छनैः । पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ॥ ६५
ईशादिमन्त्रि[10]तैर्भुक्त्यै मुक्त्यै तेषां विपर्ययः । तोयधूपान्तरैः सर्वैर्मूलेन स्नपयेच्छिवम् ॥ ६६
विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः । स्वशक्त्या गन्धतोयेन संस्नाप्य शुचिवाससा ॥ ६७
निर्माज्यार्घ्यं प्रदद्याच्च नोपरि भ्रामयेत्करम् । न शून्यमस्तकं लिङ्गं पुष्पैः कुर्यात्ततो ददेत् ॥६८
चन्दनाद्यैः समालभ्य पुष्पैः प्राच्र्य शिवाणुना । धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य शिवाणुना ॥
अस्त्रेण पूजि[11]तां घण्टां चाऽऽदाय गुग्गुलं [12]दहेत् । दद्यादाचमनं पश्चा[13]त्सुधा[14]भं हृदयाणुना ॥ ७०
आरा[15]त्रिकं समुत्तार्य तथैवाऽऽचामयेत्पुनः । प्रणम्याऽऽदाय देवाज्ञां भोगाङ्गानि प्रपूजयेत् ७१
हृदग्नौ चन्द्रभं चैशे [16]शिवं चामीकरप्रभम् । शिखां रक्तां च नैर्ऋत्ये(ते) कृष्णं [17]चर्म च वायवे ॥
चतुर्वक्त्रं चतुर्बाहुं [18]दलस्थान्पूजयेदिमान् । दंष्ट्राकरालमप्यस्त्रं पूर्वादौ वज्रसंनिभम् ॥ ७३
मूले हौं[19] शिवाय नमः, ॐ[20] हां हूं हीं हों शिरश्च । ह्रूं शिखा हैं वर्म चास्त्रं परिवारयुताय च ॥
शिवाय दद्यात्पाद्यं च आचामं चार्घ(र्घ्य)मेव च । गन्धं पुष्पं धूपदीपं नैवेद्याचमनीयकम् ॥७५
करोद्वर्तनताम्बूलं मुखवासं च दर्पणम् । शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ॥ ७६
मूलमष्टशतं जप्त्वा हृदयेनाभिमन्त्रितम् । चर्मणा वेष्टितं [21]खड्गरक्षितं कुशपुष्पकैः ॥ ७७
अक्षतैर्मुद्रया युक्तं शिवमुद्भवसंज्ञया । गुह्यातिगुह्यगुप्त्यर्थं गृहाणास्मत्कृतं जपम् ॥ ७८
सिद्धिर्भ[22]वति मे येन त्वत्प्रसादात्त्वयि स्थिते । भोगी श्लोकं प[23]ठित्वा तु दक्षहस्तेन शंभवे ॥७९
मूलाणुनाऽर्घ्यतोयेन वरहस्ते [24]निवेदयेत् । यत्किंचि[25]त्कुर्महे देव सदा सुकृतदुष्कृतम् ॥ ८०
तन्मे शिवपदस्थस्य हूं क्षः क्षेपय शंकर । शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ८१
शिवो [26]जयति सर्वत्र यः शिवः सोऽहमेव च । श्लोकद्वयमधीत्यैवं जपं देवाय चार्पयेत् ॥ ८२

---

* अय श्लोको नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. °खीकृतः । २ क. ङ. च. °वेशः स्था° । ३ क. ङ. च. °नं तत्स्यात्सं° । ४ क. घ. ङ. च. °धेयोऽप° । ५ क. ङ. च. °यः । अवकाशप्र° । ख. ग. °यः । अभ° । ६ क. ङ. च. °क्त्रे वाऽऽच° । घ. °क्त्रेष्वाच° । ७ घ. निर्मज्ज्य । ८ ख. अर्घोद° । ९ ग. °गेंजकैः° । १० ख. ग. तैर्भक्ष्यैर्मुख्यैस्तेषां । घ. °तैर्द्रव्यैरर्च्य ते° । ११ क. ङ. च. °तां मध्ये वादयेद्गुग्गु° । १२ ख. ग. घ. ददेत् । १३ क. ङ. च. °श्चाद्देवान्तं हृ° । घ. °श्चात्स्वधान्तं हृ° । १४ ख. °धातं हृ° । १५ क. च. °रातिकं । ग. °रार्तिकं । १६ क. ख. ग. ङ. च. शिरश्चामी° । १७ घ. वर्म । १८ क. ङ. च. दर्भस्था° । १९ क. ङ. च. हां । २० ख. ग. ॐ ह्रां ह्रूं ह्रीं शि° । २१ ग. घ. ङ. खड्गं र° । २२ घ. ङ. °वतु मे । २३ क. ग. ङ. च. °ठित्वाऽर्थं द° । घ. °ठित्वाऽऽर्घ्यं द° । २४ च. निवेशयेत् । २५ ख. च. °चित्कर्म हे । २६ क. ङ. च. यजति ।

शिवाङ्गानां दशांशं च दत्त्वाऽर्घ्यं स्तुतिमाचरेत् । प्रदक्षिणीकृत्य नमेच्चाष्टाङ्गं चाष्टमूर्तये ॥ ८३
नत्वा ध्यानादिभिश्चैव यजेच्चित्रेऽनलादिषु ॥ ८४

इत्यादिमहापुराण आग्नेये शिवपूजाविधिकथनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१४३

---

अथ पञ्चसप्ततितमोऽध्यायः ।

---

## शिवपूजाङ्गहोमविधिः ।

ईश्वर उवाच—

अर्घपात्रकरो यायादग्न्यागारं सुसंवृतः । यागोपकरणं सर्वं दिव्यं(व्य)दृष्ट्या(ष्ट्या) च कल्पयेत् ॥
उदङ्मुखः कुण्डमीक्षेत्प्रोक्षणं ताडनं कुशैः । विदध्यादस्त्रमन्त्रेण वर्मणाऽभ्युक्षणं मतम् ॥ २
खड्गेन खातमुद्धारं पूरणं समतामपि । कुर्वीत वर्मणा सेकं कुट्टनं तु शराणुना ॥ ३
संमार्जनं समालेपं कलारूपप्रकल्पनम् । त्रिसूत्रीपरिधानं च वर्मणाऽभ्यर्चनं सदा ॥ ४
रेखात्रयमुदक्कुर्यादेकां पूर्वाननामधः । कुशेन च शिवास्त्रेण यद्वा तासां विपर्ययः ॥ ५
वज्रीकरणमन्त्रेण हृदा दर्भैश्चतुष्पथम् । अक्षपात्रं तनुत्रेण विन्यसेद्विष्टरं हृदा ॥ ६
हृदा वागीश्वरीं तत्र ईशमावाह्य पूजयेत् । वह्निं सद्मश्रयानीतं शुद्धपात्रोपरि स्थितम् ॥ ७
क्रव्यादांशं परित्यज्य वीक्षणादिविशोधितम् । औदार्यं चैन्दवं भौतमेकीकृत्यानलत्रयम् ॥ ८
ॐ हूं वह्निचैतन्याय वह्निबीजेन विन्यसेत् । संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम् ॥ ९
रक्षितं हेतिमन्त्रेण कवचेनावगुण्ठितम् । पूजितं त्रिः परिभ्राम्य कुण्डस्योर्ध्वं प्रदक्षिणम् ॥ १०
शिवबीजमिति ध्यात्वा वागीशागर्भगोचरे । वागीश्वरेण देवेन क्षिप्यमाणं विभावयेत् ॥ ११
भूमिष्ठजानुको मन्त्री हृदाऽऽत्मसंमुखं क्षिपेत् । ततोऽन्तःस्थितबीजस्य नाभिदेशे समूहनम् ॥
संभृतिं परिधानस्य शौचमाचमनं हृदा । गर्भाग्नेः पूजनं कृत्वा तद्रक्षार्थं शराणुना ॥ १३
बध्नीयाद्दर्भजं देव्याः कङ्कणं पाणिपल्लवे । गर्भाधानाय संपूज्य सद्योजातेन पावकम् ॥ १४
ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम् । पुंसवनाय वामेन तृतीये मासि पूजयेत् ॥ १५
आहुतित्रितयं दद्याच्छिरसाऽम्बुकणान्वितम् । सीमन्तोन्नयनं षष्ठे मासि संपूज्य रूपिणा ॥ १६
जुहुयादाहुतीस्तिस्रः शिखया शिखयैव तु । वक्त्राङ्गकल्पनां कुर्याद्वक्त्रोद्घाटननिष्कृती ॥ १७
जातकर्मनृकर्मभ्यां दशमे मासि पूर्ववत् । वह्निं संधुक्ष्य दर्भाद्यैः स्नानं गर्भमलापहम् ॥ १८
सुवर्णबन्धनं देव्या कृतं ध्यात्वा हृदाऽर्चयेत् । सद्यः सूतकनाशाय प्रोक्षयेदस्त्रवारिणा ॥ १९
कुण्डं तु बहिरस्त्रेण ताडयेद्वर्मणाऽक्षिपेत् । अस्त्रेणोत्तरपूर्वाग्रान्मेखलासु बहिः कुशान् ॥ २०
आस्थाप्य स्थापयेत्तेषु हृदा परिधिविस्तरम् । वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ॥ २१

---

१ क. ख. ग. ङ. च. °त्त्वाऽर्घं स्तु° । २ ख. ग. °ण धर्मणाभ्यु° । ३ घ. °रात्मना । ४ ख. °ण हृदा ता° । ५ क. ङ. च. °मन्त्रेण । ६ क. ङ. च. °माराध्य पू° । ७ क. ङ. च. °दाऽग्रपालितं । ८ ख. ग. चैन्धनं भौ° । ९ ख. ग. हूरूं । १० ख. °मृतं हृत° । ११ क. ङ. च. दारुणा । १२ क. ङ. संवीक्ष्य । च. संमीक्ष्य । १३ क. ख. ग. ङ. च. देव्याः । १४ ख. ग. घ. कुम्भं । १५ ख. ग °येद्वर्म° । १६ घ. °णोक्षयेत् । १७ क. ङ. च. आस्तीर्य । १८ ख. °विष्टर° ।

( शिवपूजाङ्गहोमाविधिः )

समिधः पञ्च होतव्याः प्रान्ते मूले घृतप्लुताः । ब्रह्माणं शंकरं विष्णुमनन्तं च हृदाऽर्चयेत्[1] ॥ २२
दूर्वाक्षतैश्च पर्यन्तं परिधिस्थाननुक्रमात् । इन्द्रादीशानपर्यन्तान्विष्टरस्थाननुक्रमात् ॥ २३
अग्नेरभिमुखीभूतान्[2]निजदिक्षु हृदाऽर्चयेत् । निवार्य विघ्नसंघातं बालकं पालयिष्यथं[3] ॥ २४
शैवीमाज्ञामिमां तेषां श्रावयेत्तदनन्तरम् । गृहीत्वा स्रुक्स्रुवावूर्ध्व[5]वदनाधोमुखौ[4] क्रमात् ॥ २५
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् । कुशस्पृष्टप्रदेशेषु[5] आयुर्विद्याशिवात्मकम् ॥ २६
क्रमात्तत्त्वत्रयं न्यस्य हां हीं हूं संरवैः क्रमात् । स्रुचि शक्तिं स्रुवे शंभुं विन्यस्य हृदयाणुना ॥
त्रिसूत्रीवेष्टितग्रीवौ पूजितौ कुसुमादिभिः । कुशानामुपरिष्टात्तौ स्थापयित्वा स्वदक्षिणे ॥ २८
गव्यमाज्यं समादाय वीक्षणादिविशोधितम् । स्वकां ब्रह्ममयीं मूर्तिं संचिन्त्याऽऽदाय तद्घृतम्
कुण्डस्योर्ध्वं हृदाऽऽवर्त्य[6] भ्रामयित्वाऽग्निगोचरे । पुनर्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ३०
धृत्वाऽऽदाय कुशाग्रेण स्वाहान्तं शिरसाऽणुना । जुहुयाद्विष्णवे बिन्दुं रुद्ररूपमनन्तरम्[7] ॥ ३१
भावयन्निजमात्मानं नाभौ धृत्वा प्लवेत्ततः । प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ॥ ३२
धृताभ्यां संमुखं[8] वह्नेरस्त्रेणाऽऽप्लवमाचरेत् । हृदाऽऽत्मसंमुखं तद्वत्कुर्यात्संप्लवनं ततः ॥ ३३
हृदालब्धदग्धदर्भं शस्त्रक्षेपात्पवित्रयेत् । दीप्तेनापरदर्भेण[9] नीराज्यान्येन[10] दीपयेत् ॥ ३४
अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् । क्षिप्त्वा घृते कृतग्रन्थिकुशं प्रादेशसंमितम् ॥ ३५
पक्षद्वयमिडादीनां त्रयं[11] बाह्ये विभावयेत् । क्रमाद्भागत्रयादाज्यं स्रुवेणाऽऽदाय होमयेत् ॥
स्वेत्यग्नौ हा घृते भागं शेषमाज्यं क्षिपेत्क्रमात् । ३६
ॐ हामग्नये स्वाहा । ॐ हां सोमाय स्वाहा ॥
ॐ हामग्नीषोमाभ्यां स्वाहा ॥ ३७
उद्घाटनाय नेत्राणामग्नेर्नेत्रत्रये मुखे । स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् ॥ ३८
ॐ हामग्नये स्विष्टकृते स्वाहा ॥ ३९
अभिमन्त्र्य षडङ्गेन बोधयेद्धेनुमुद्रया । अवगुण्ठ्य तनुत्रेण रक्षेदाज्यं शराणुना ॥ ४०
हृदाऽऽज्यबिन्दुविक्षेपात्कुर्यादभ्युक्ष्य शोधनम् । वक्त्राभिघारसंधानं वक्त्रैकीकरणं तथा ॥ ४१
ॐ हां सद्योजाताय स्वाहा । ॐ हां वामदेवाय स्वाहा । ॐ हामघोराय स्वाहा ॥
ॐ तत्पुरुषाय स्वाहा । ॐ हामीशानाय स्वाहा[12] ॥ ४२
इत्येकैकघृताहुत्या कुर्याद्वक्त्राभिघारकम् ॥ ४३
ॐ हां सद्योजातवामदेवाभ्यां स्वाहा । ॐ हां वामदेवाघोराभ्यां[13] स्वाहा । ॐ हामघोरत-
त्पुरुषाभ्यां स्वाहा । ॐ हां तत्पुरुषेशानाभ्यां स्वाहा ॥ ४४
इति वक्त्रानुसंधानं मन्त्रैरेभिः क्रमाचरेत् । अग्नितो गतया वायुं निर्ऋतादिशिवान्तया ॥
वक्त्राणामेकतां कुर्यात्स्रुवेण घृतधारया। ४५
ॐ हां सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः[14] स्वाहा ॥ ४६

---

१ क. ङ. च. °त् । पूर्वाभ्यन्तरप° । २ क. ङ. च. °ताग्नयदि° । ३ क. ङ. च °थ । गौरीमा° । ४ घ. °मुखैः क° । ५ ख. ग. घ. °शे तु आत्मविद्या° । ६ क च. °र्त्य तापयि° । ७ क. ङ. च. °म् । तावन्निजयमात्मानं नाभौ वृद्धायवेत्ततः । ८ क. ङ. च. °खं बाहुच्छत्रेणोत्प्ल° । ९ घ. °ण निवाह्यानेन । १० ख. नीवाह्यानेन । ११ घ. °यं चाऽऽज्ये वि° । १२ क. ङ. च. °हा । एकैकया घृ° । १३ क. ख. ग. ङ. च. वामाघो° । १४ क. ङ. च. °वामाघो° ।

इतीष्ट[1]वक्त्रे वक्त्राणामन्तर्भावस्तदाकृतिः । ईशेने[2] वह्निमभ्यर्च्य दत्त्वाऽस्त्रेणाऽऽहुतित्रयम् ॥ ४७
कुर्यात्सर्वात्मना नाम शिवाग्निस्त्वं हुताशन । हृदाऽर्चितौ विसृ[3]ज्याग्नौ[4] पितरौ विधिपूरणीम् ॥
मूलेन वौषडन्तेन दद्यात्पूर्णां यथाविधि । ततो हृ[5]दम्बुजे साङ्गं सासनं भासुरं परम् ॥ ४९
यजेत्पूर्ववदावाह्य प्रार्थ्याऽऽज्ञां तर्पयेच्छिवम् । यागाग्निशिवयोः कृत्वा नाडीसंधानमात्मना ॥
शक्त्या मूलाणुना होमं कुर्यादङ्गै[6]र्दशांशतः । घृतस्य [7]कार्षिको होमः क्षीरस्य मधुनस्तथा ॥ ५२
शुक्तिमात्राऽऽहुतिर्दध्नः प्र[8]सृतिः पायसस्य तु । यथावत्सर्वभक्षाणां लाजानां मुष्टिसंमितम् ॥५२
खण्डत्रयं तु मूलानां फलानां स्वप्रमाणतः । ग्रासार्धमात्रमन्नानां सूक्ष्माणि पञ्च होमयेत् ॥ ५३
इक्षोरापर्विकं मानं लतानामङ्गुल[9]द्वयम् । पुष्पं पत्रं स्वमानेन समिधां तु दशाङ्गुलम् ॥ ५४
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् । [10]कलायसंमितानेतान्गुग्गु[11]लं बदरास्थिवत् ॥ ५५
कन्दानामष्टमं भागं जुहुयाद्विधिवत्परम् । होमं निर्वर्तयेदेवं ब्रह्मबीजपदैस्ततः ॥ ५६
घृतेन स्रुचि पूर्णायां निधायाधोमुखं स्रुवम् । स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ॥ ५७
पुनः सव्येन तौ धृत्वा शङ्खसंनिभमुद्रया । समुद्गतोर्ध्वकायश्च समपादः समुत्थितः ॥ ५८
नाभौ तन्मूलमाधाय स्रुगग्रव्यग्रलोचनः । ब्रह्मादिका[12]रणत्यागाद्विनिःसृत्य सु[13]षुम्नया ॥ ५९
वा[14]मस्तनान्तमानीय तयोर्मूलमतन्द्रितः । मूलमन्त्रमविस्पष्टं वौषडन्तं समुच्चरेत् ॥ ६०
तदग्नौ जुहुयादाज्यं यवसंमितधारया । आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि ॥ ६१
भक्त्या तद्भूतिमावन्द्य विदध्यात्प्रणतिं पराम् । ततो वह्निं समभ्यर्च्य फडन्तास्त्रेण सं[15]वरान् ६२
संहारमुद्रयाऽऽहृत्य क्षमस्वेत्यभिधाय च । भासुरान्परिधींस्तांश्च पूरकेण हृदाऽणुना ॥ ६३
श्रद्धया परयाऽऽत्मीये स्थापये[16]द्धृदयाम्बुजे । सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयम् ॥ ६४
अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसंनिधौ । ॐ हां रुद्रेभ्यः स्वाहा पूर्वे मातृभ्यो दक्षिणे तथा ॥
वरुणे हां गणेभ्यश्च स्वाहा तेभ्यस्त्वयं बलिः । उत्तरे हां च यक्षेभ्य ईशाने [17]हां [18]ग्रहैः सह ॥
अग्नौ[19] हामसुरेभ्यश्च रक्षोभ्यो नैर्ऋते वलिः । वायव्ये हां च नागेभ्यो नक्षत्रेभ्यश्च मध्यतः ६७
हां राशिभ्यः स्वाहा वह्नौ विश्वेभ्यो नैर्ऋते तथा । [20]वारुण्यां क्षेत्रपालाय अन्तर्बलिरुदाहृतः ६८
द्वितीये मण्डले बाह्य इन्द्राया[21]ग्नेर्यमाय च । नैर्ऋताय जलेशाय वायवे धनरक्षिणे ॥ ६९
ईशानाय च पूर्वादावीशा[22]ने ब्रह्मणे नमः । नैर्ऋते विष्णवे स्वाहा वायसादेर्बहिर्बलिः ॥ ७०
बलिद्वयगतान्मन्त्रा[23]न्संहरेन्मुद्रयाऽऽत्मनि ॥ ७१

इत्याग्नेये महापुराणे शिवपूजाङ्गहोमविधिनिरूपणं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२१४

---

१ क. ङ. च. इत्यष्ट° । २ क ऐशेन । ङ. च. ईशाने । ३ घ. °सृष्टाग्नौ । ४ क. ङ. च. °ज्याग्नेः पि° । ५ ख. ग. हृदाऽम्बु° । ६ ख. ग. °र्दशाङ्गतः । ७ ख. ग. वार्षिको । ८ क. ङ. च. प्रसूतिः । ९ ख. ग. °लत्रय° । १० ख. कपालसं° । ११ घ. °ग्गुलुं ब° । १२ घ. °रणात्या° । १३ क. ङ. च. मुमुक्षया । घ. सुषुम्णया । १४ ख. °महस्तान्त° । १५ ख. ग. संबरा° । १६ क. ङ. च. °येच्च हृदम्बु° । घ. °येत हृदम्बु° । १७ ख. ग. हां गुहेभ्यश्च । अ° । १८ घ. ग्रहेभ्य उ । अ° । १९ क. ख. ग. ङ. च. °ग्नो होम° । २० ख. ग. वायव्यां । २१ घ. °याग्नियमा° । २२ क. ङ. च. °शानब्र° । २३ क. घ. ङ. च. °न्संहारमुद्र° ।

अथ षट्सप्ततितमोऽध्यायः ।

चण्डपूजा ।

ईश्वर उवाच—

ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम । गृहाण भगवन्पुण्यफलमित्यभिधाय च ॥ १
अर्घ्योदकेन देवाय मुद्रयोद्भवसंज्ञया । हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ॥ २
ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च । अर्घ्यं पराङ्मुखं दत्त्वा क्षमस्वेत्यभिधाय च ॥ ३
नाराचमुद्रयाऽस्त्रेण फडन्तेनाऽऽत्मसंचयम् । संहृत्य दिव्यया लिङ्गं मूर्तिमन्त्रेण योजयेत् ॥ ४
स्थण्डिले त्वर्चिते देवे मन्त्रसंहारमात्मनि । नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनम् ॥ ५
ॐ चण्डेशानाय नमो मध्यतश्चण्डमूर्तये । ॐ धूलिचण्डेश्वराय हूं फट्स्वाहा तमाह्वयेत् ॥ ६
चण्डहृदयाय हूं फडों चण्डशिरसे तथा । ॐ चण्डशिखायै हूं फट्चण्डायुष्कवचाय च ॥ ७
चण्डास्त्राय तथा हूं फट्चण्डं रुद्राग्निजं स्मरेत् । शूलटङ्कधरं कृष्णं साक्षसूत्रकमण्डलुम् ॥ ८
टङ्काकारेऽर्धचन्द्रे वा चतुर्वक्त्रं प्रपूजयेत् । यथाशक्ति जपं कुर्यादङ्गानां तु दशांशतः ॥ ९
गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणम् । विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ॥ १०
लेह्यचोष्याद्यन्नवरं ताम्बूलं स्रग्विलेपनम् । निर्माल्यं भोजनं तुभ्यं प्रदत्तं तु शिवाज्ञया ॥ ११
सर्वमेतत्क्रियाकाण्डं मया चण्ड तवाऽऽज्ञया । न्यूनाधिकं कृतं मोहात्परिपूर्णं सदाऽस्तु मे ॥ १२
इति विज्ञाप्य देवेशं दत्त्वाऽर्घ्यं तस्य संस्मरन् । संहारमूर्तिमन्त्रेण शनैः संहारमुद्रया ॥ १३
पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत् । निर्माल्यापनयस्थानं लिम्पेद्गोमयवारिणा ॥ १४
प्रोक्ष्यार्घ्यादि विसृज्याथ आचान्तोऽन्यत्समाचरेत् ॥ १५

इत्याग्नेये महापुराणे चण्डपूजाकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२२९

---

अथ सप्तसप्ततितमोऽध्यायः ।

कपिलापूजनम् ।

ईश्वर उवाच—

कपिलापूजनं वक्ष्य एभिर्मन्त्रैर्यजेच्च गाम् । ॐ कपिले नन्दे नमः कपिले भद्रिके नमः ॥ १
कपिले सुशीले नमः कपिले सुरभिप्रभे । ॐ कपिले सुमनसे भुक्तिमुक्तिप्रदे नमः ॥ २
सौरभेयि जगन्मातर्देवानाममृतप्रदे । गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे ॥ ३
वन्दिताऽसि वसिष्ठेन विश्वामित्रेण धीमता । कपिले हर मे पापं यन्मया दुष्कृतं कृतम् ॥ ४

---

१ क. ख. ग. छ. च. अर्घोद° । २ क. °संहर° । घ. °सघातमा° । ङ. °संहतिमा° । च. °संहतमा° । ३ क. ङ. च. ॐ ध्वनिच° । ४ ख. हूरूं । ५ ख. ग. हूरूं । ६ ख. ग. हरूं । च. हुं । ७ क. ङ. च. °म् । ढकाका° । ८ क. ङ. च. °नां तद्दशां° । ९ क. ङ. तासां । च. तोयं । १० ख. °र्घ्यांथ विमृज्या° । ११ ख. ग. घ. °नम ॐ क° । १२ ख. ग. घ. °मः । ॐ क° । १३ घ. °से नम ॐ भु° । १४ क. ङ. च. जह्नुना ।

गावो ममाग्रतो नित्यं गावः पृष्ठत एव च । गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ॥ ५
दत्तं गृह्णाण[1] मे ग्रासं जप्त्वाऽस्यां निर्मलः शिवः । प्रार्च्य विद्यापुस्तकानि गुरुपादौ नमेन्नरः ६
यजेत्स्नात्वा तु मध्याह्ने अष्टपुष्पिकया शिवम् । पीठमूर्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ॥ ७
मध्याह्ने भोजनागारे सुलिप्ते पाकमानयेत् । ततो मृत्युंजयेनैव वौषडन्तेन सप्तधा ॥ ८
जप्तैः सद्‌र्भशङ्खस्थैः सिञ्चेत्तं वारिबिन्दुभिः । सर्वपाकाग्रमुद्धृत्य शिवाय विनिवेदयेत् ॥ ९
अथार्धं चुल्लिकाहोमे विधानायोपकल्पयेत् । विशोध्य विधिना चुल्लीं तद्वह्निं पूरकाहुतिम् ॥ १०
हुत्वा नाभ्यग्निना चैकं ततो रेचकवायुना । वह्निबीजं समादाय कादिस्थानगतिक्रमात् ॥ ११
शिवाग्निरस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत्[2] । ॐ हामग्नये[च] नमो वै हां सोमाय वै नमः
सूर्याय बृहस्पतये प्रजानां पतये नमः । सर्वेभ्यश्चैव[3][4] देवेभ्यः सर्वविश्वेभ्य एव च ॥ १३
हामग्नये स्विष्टकृते[5] पूर्वादावर्चयेदिमान् । स्वाहान्तामाहुतिं दत्त्वा क्षमयित्वा विसर्जयेत् ॥ १४
चुल्ल्या दक्षिणबाहौ च यजेद्धर्माय वै नमः । वामबाहावधर्माय काञ्जिकादिकभाण्डके ॥ १५
रसपरिवर्तमानाय वरुणाय जलाश्रये[6] । *विघ्नराजे[7] गृहद्वारे पेषण्यां सुभगे नमः ॥ १६
ॐ रौद्रिके[8] गिरिके च नमश्चोलूखले यजेत् । बलिप्रियायाऽऽयुधाय नमस्ते मुसले यजेत् ॥ १७
संमार्जन्यां देवतोक्ते कामाय शयनीयके । मध्यस्तम्भे च स्कन्दाय दत्त्वा वास्तुबलिं ततः ॥१८
भुञ्जीत पात्रे सौवर्णे पद्मिन्यादिदलादिके । आचार्यः साधकः पुत्रः समयी मौनमास्थितः ॥
वटाश्वत्थार्कवातारि[9]सर्जभल्लातकांस्त्यजेत्[10] । आपोशा(श)नं[11] पुराऽऽदाय प्राणाद्यैः प्रणवान्वितैः
स्वाहान्ते चाऽऽहुतीः पञ्च दत्त्वाऽऽदीप्योदरानलम् । नागः कूर्मोऽथ कृकरो देवदत्तो धनंजयः
एतेभ्य उपवायुभ्यः स्वाहाऽऽपोशा(श)नवारिणा । भक्तादिकं निवेद्याथ पिबेच्छेषोदकं नरः ॥
अमृतोपस्तरणमसि प्राणाहुतीस्ततो ददेत् । प्राणाय स्वाहाऽपानाय समानाय ततस्तथा ॥ २३
उदानाय च व्यानाय भुक्त्वा[12] चुल्ल(ल)कमाचरेत् । +अमृतापिधानमसीति शरीरेऽन्नादनाय[13] च॥

इत्यादिमहापुराण आग्नेये कपिलापूजनादिविधिकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२५३

---

अथाष्टसप्ततितमोऽध्यायः ।

---

## पवित्राधिवासनविधिकथनम् ।

ईश्वर उवाच—

पवित्रारोहणं वक्ष्ये क्रियार्चादिषु[14] पूरणम् । नित्यं[15] तन्नित्यमुदिष्टं नैमित्तिकमथापरम् ॥ १
आषाढादिचतुर्दश्यामथ श्रावणभाद्रयोः । सितासितासु कर्तव्यं चतुर्दश्यष्टमीषु तत् ॥ २

---

* अयं श्लोको नास्ति क. ङ. च. पुस्तकेषु । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ क. घ. ङ. च. गृह्णन्तु । २ क. ङ. च. °वेदये° । ३ क. ङ. च. सर्वशश्चै° । ४ क. ङ. ञ. °श्चेश ए° । ५ क. ङ. च. °ते सर्वदाऽप्यर्च° । ६ घ. °लाग्नये । ७ घ. °राजो गृ° । ८ घ. °के नमो गि° । ९ ख. °तानि स° । घ. °ताविस° । १० क. घ. च. °त् । अपो° । ११ ख. ग. °नं सुरेशाय । १२ ङ. भुक्त्वाऽऽचमनमा° । १३ घ. °न्नादि-वायवः । ङ° । १४ क. ङ. च. °यार्थादि° । १५ ख. नित्ये ।

( पवित्राधिवासनाविधिः )

कुर्याद्वा कार्तिकीं यावत्तिथौ प्रतिपदादिके । वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ॥ ३
दुर्गायमेन्द्रगोविन्दस्मरशंभुसुधाभुजाम् । सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम् ॥ ४
कलौ कार्पासजं वाऽपि पट्टपद्मादिसूत्रकम् । प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो हरिः ॥ ५
सर्वेशः सर्वदेवाः स्युः क्रमेण नवतन्तुषु । अष्टोत्तरशता[1]द्य(ध्य)[2]र्धं तदर्धं चोत्तमादिकम् ॥ ६
एकाशीत्याऽथ वा सूत्रैस्त्रिशताऽप्यष्टयुक्तया । पञ्चाशता वा कर्तव्यं तुल्यग्रन्थ्यन्तरालकम् ॥ ७
द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि च । लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ॥ ८
तथैव पिण्डिकास्पर्शं चतुर्थं सार्वदैवतम् । गङ्गावतारकं [3]कार्यं [4]प्रजातेन सुधौतकम् ॥ ९
ग्रन्थिं कुर्याच्च वामेन अघोरेणाथ शोधयेत् । रञ्जयेत्पुरुषेणैव रक्तचन्दनकुङ्कुमैः ॥ १०
कस्तूरीरोचनाचन्द्रैर्हरिद्रागैरिकादिभिः । ग्रन्थयो दश कर्तव्या अथ वा तन्तुसंख्यया ॥ ११
अन्तरं वा यथाशोभमेकद्विचतुरङ्गुलम् । प्रकृतिः पौरुषी वीरा चतुर्थी त्वपराजिता ॥ १२
जयाऽन्या विजया षष्ठी अजिता च सदाशिवा । मनोन्मनी सर्वमु[5]खी ग्रन्थयोऽभ्यधिकाः शुभाः
कार्या वा [6]चैन्द्रवह्न्यर्कपवित्रं शिवव[7]द्धृदि । एकैकं निजमूर्तौ वा[8] पुस्तके गुरुके गणे ॥ १४
स्यादेकैकं तथा द्वारदिक्पालकलशादिषु । हस्तादिनवहस्तान्तं लिङ्गानां स्यात्पवित्रकम् ॥ १५
अष्टाविंशतितो वृद्धं दशभिर्दशभिः क्रमात् । त्र्यङ्गुलाभ्यन्तरास्तत्र क्रमादेकाङ्गुलान्तराः ॥ १६
ग्रन्थयो मानमप्येषां लिङ्गविस्तारसंमितम् । सप्तम्यां वा त्रयोदश्यां कृतनित्यक्रियः शुचिः १७
भूषयेत्पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरम् । कृत्वा नैमित्तिकीं सं[9]ध्यां विशेषेण च तर्पणम् ॥ १८
परिगृहीते भूभागे [10]पवित्रे सूर्यमर्चयेत् । आचम्य सकलीकृत्य प्रणवार्घ्यकरो गुरुः ॥ १९
द्वाराण्यस्त्रेण संप्रोक्ष्य पूर्वादिक्रमतोऽर्चयेत् । [11]हां शान्तिकलाद्वाराय तथा विद्याकलात्मने ॥ २०
निवृत्तिकलाद्वाराय प्रतिष्ठाख्यकलात्मने । तच्छाखयोः प्रतिद्वारं द्वौ द्वौ द्वाराधिपौ यजेत् ॥ २१
नन्दिने महाकाला[12]य भृङ्गिणेऽथ गणाय च । वृषभाय च स्कन्दाय देव्यै चण्डाय च क्रमात् २२
नित्यं च द्वारपालादीन्प्रविश्य [13]द्वारि पश्चिमे । इष्ट्वा वास्तुं भूतशुद्धिं विशेषार्घ्यकरः शिवः ॥२३
प्रोक्षणाद्यं विधायाथ यज्ञ[14]संस्कारकृन्नरः । [15]मन्त्रयेद्दर्भदूर्वाद्यैः पुष्पाद्यैश्च हृदादिभिः ॥ २४
शिवहस्तं विधायेत्थं स्वशिरस्यधिरोपयेत् । शिवोऽहमादिः सर्वज्ञो मम यज्ञप्रधानता ॥ २५
अत्यर्थं भावयेदेवं ज्ञानखड्गकरो गुरुः । नैर्ऋतीं दिशमासाद्य प्रक्षिपेदुदगाननः ॥ २६
अर्घ्याम्बु पञ्चगव्यं च समन्ता[16]न्मखमण्डपे । चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैः सुसंस्कृतैः ॥ २७
विक्षिप्य विकिरांस्तत्र कुश[17]कूर्चोपसंहरेत् । तानीशदिशि वर्धन्यामासनायोपकल्पयेत् ॥ २८
नैर्ऋते वास्तुगीर्वाणा[न्] द्वारे लक्ष्मीं प्रपूजयेत् । पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितम् ॥
प्रणवेन वृषारूढं सिंहस्थां वर्धनीं ततः । कुम्भे साङ्गं शिवं देवं वर्धन्यामस्त्रमर्चयेत् ॥ ३०

---

१ ख. °तात्पूर्व त° । २ ख. °र्ध चारुमासिक° । ३ क. ङ. च. कार्यमजा° । ४ घ. सुजातेन । ५ क. ख. ग. ङ. च. चण्डव° । ६ क. ङ. च. °वत्यपि । ए° । ख. °वत्त्वया । ए° । ७ ख. ग. वा सप्तके गुरवे ग° । ८ क. ङ. च. गुरवे ग° । ९ क. ङ. च. शय्यां । १० क. ख. ग. ङ. च. सूत्रिते । ११ क. ख. ग. ङ. च. हा । १२ ख. °य शृङ्गि° । १३ ख. ग. द्वारमध्यमे । घ. द्वारप° । १४ घ. °संभार° । १५ क. ङ. च. मण्डपे दर्भकूद्वाद्यैः पु° । १६ क. ङ. च. °न्तान्मुख° । १७ ख. ग. घ. °कूर्चोप° ।

दिक्षु शक्रादिदिक्पालान्विष्णुब्रह्म[१]शिवादिकान् । वर्धनीं सम्यगादाय[२] घटपृष्ठानुगामिनीम् ॥ ३१
शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशानगोचरम् । अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयेत् ॥ ३२
समन्ताद्भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीम् । पूर्वं कलशमारोप्य शस्त्रार्थं[३] तस्य वामतः ॥ ३३
समग्रासनके कुम्भे यजेद्देवं स्थिरासने । वर्धन्यां प्रणवस्थायामायुधं तदनु द्वयोः ॥ ३४
भगलिङ्गसमायोगं विदध्यॉल्लिङ्गमुद्रया । कुम्भे निवेद्य बोधासिं मूलमन्त्रजपं तथा ॥ ३५
तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेदपि । गणेशं वायवेऽभ्यर्च्य हरं पञ्चामृतादिभिः ॥ ३६
स्नापयेत्पूर्ववत्प्रार्च्य कुण्डे च शिवपावकम् । विधिवच्चरुकं कृत्वा संपाताहुतिशोधितम् ॥ ३७
देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत्रिधा । दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनि ३८
नै[५]रेण वै[६]र्मणा देयं पूर्वतो दन्तधावनम्[७] । भस्म घोर[८]शिखाभ्यां[९] वा दक्षिणे पश्चिमे मृदम् ॥ ३९
सद्योजातेन च हृदा चोत्तरे[१०] वाऽऽमलीफलम् । जलं वामेन शिरसा ईशे[११] गन्धान्वितं जलम् ४०
पञ्चगव्यं पलाशादिपुटकं वै समन्ततः । ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम् ॥ ४१
अगुरुं निर्ऋताशायां वायव्यां च चतुःसमम् । होमद्रव्याणि सर्वाणि सद्योजातैः कुशैः सह ४२
दण्डाक्षसूत्रकौपीनभिक्षापात्राणि रूपिणे । कज्जलं कुङ्कुमं तैलं शलाकां केशशोधिनीम् ॥ ४३
ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि । आसनं पादुके[१२] पात्रं योगपट्टा[१३]तपत्रकम् ॥ ४४
ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये । पूर्वस्यां चरुकं साज्यं दद्याद्गन्धादिकं नरे[१४] ॥ ४५
पवित्राणि समादाय प्रोक्षितान्यर्घ्यवारिणा । संहितामन्त्रपूतानि नीत्वा पावकसंनिधिम् ॥ ४६
कृष्णाजिनादिनाऽऽच्छाद्य स्मरन्संवत्सरात्मकम् । साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययम्॥
स्वोति हेति प्रयोगेण मन्त्रसंहितया पुनः । शोधयेच्च पवित्राणि वाराणामेकविंशतिम् ॥ ४८
गृहादि वेष्टयेत्सूत्रैर्गन्धाद्यं रवये ददेत् । पूजिताय समाचम्य कृतन्यासः कृतार्घ्यकः ॥ ४९
नन्द्यादिभ्योऽथ गन्धाख्यं वास्तोश्चाथ प्रविश्य च । शस्त्रेभ्यो लोकपालेभ्यः स्वनाम्ना शिवकुम्भके
र्धन्यै विघ्नराजाय गुरवे ह्यात्मने यजेत् । अथ सर्वौषधीलिप्तं धूपितं पुष्पदूर्वया ॥ ५१
आ... न्त्र्य च पवित्रं तद्विधायाञ्जलिमध्यगम् । ॐ समस्तविधिच्छिद्रपूरणे च विधिं प्रति ॥ ५२
प्रभवान्... मन्त्रयामि त्वां त्वदिच्छावाप्तिकारिकाम् । तत्सिद्धिमनुजानीहि यजतश्चिदाचित्पते ॥ ५३
सर्वथा स... दा शंभो नमस्तेऽस्तु प्रसीद मे । आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ॥ ५४
मन्त्रेशैर्लोकप... लैश्च सहितः परिचारकैः । निमन्त्रयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ॥ ५५
नियमं च क... रिष्यामि परमेश तवाऽऽज्ञया । इत्येवं देवमामन्त्र्य रेचकेनामृतीकृतम् ॥ ५६
शिवान्तं मूल... मुच्चार्य तच्छिवाय निवेदयेत् । जपं[१५] स्तोत्रं प्रणामं च कृत्वा शंभुं क्षमापयेत् ॥ ५७
हुत्वा चरो... स्तृतीयांशं तद[१६](तं द)दीत शिवाग्नये । दिग्वासिभ्यो दिगीशेभ्यो भूतमात्रगणैः[१७] सह॥

---

१ क. ङ. च. °ब्रह्मावसानका° । ख. ग. °ब्रह्मेश्वरादि° । २ क. ख. ग. ङ. च. °य मूढं दृष्ट्वाऽनु° । ३ ख. °स्त्राल... म्भस्य । ४ क. ङ. च. °ध्यादङ्गमु° । ५ घ. शरेण । ६ ख. धर्मणा । ७ ख. ग. घ. °म् । तस्माद्घोर° । ८ क. ङ. च. भ... स्माङ्गार° । ९ ख. ग. °शिवाभ्यां । १० ख. ग. °रे वामलीकृतम् । घ. °रे वामनीकृतम् । ११ क. ख. ग. ङ. च. ईशग° । १२ ख. °दुकापा° । १३ ख. °ट्टादिपात्र° । १४ घ. नवे । १५ ख. ग. जप्त्वा । १६ क. च. तदधीतशिवालये । १७ ख. ग. घ. °गणेभ्य उ । रु° ।

रुद्रेभ्यः क्षेत्रपादिभ्यो नमः स्वाहा बलिस्त्वयम् । *दिग्गजाद्यैश्च पूर्वादौ क्षेत्राय चाग्नये बलिः
समाचम्य विधिच्छिद्रपूरकं होममाचरेत् । पूर्णां व्याहृतिहोमं च कृत्वा रुन्धीत पावकम् ॥ ६०
तत ओमग्नये स्वाहा स्वाहा सोमाय चैव हि । ओमग्नीषोमाभ्यां स्वाहाऽग्नये स्विष्टकृते तथा ६१
इत्याहुतिचतुष्कं तु दत्त्वा कुर्यात्तु योजनाम् । वह्निकुण्डार्चितं देवं मण्डलाभ्यर्चिते शिवे ॥ ६२
नाडीसंधानरूपेण विधिना योजयेत्ततः । वंशादिपात्रे विन्यस्य अस्त्रं च हृदयं ततः ॥ ६३
अधिरोप्य पवित्राणि कलाभिर्वाऽथ मन्त्रयेत् । षडङ्गं ब्रह्ममूलैर्वा हृद्वर्मास्त्रं च योजयेत् ॥ ६४
विधाय सूत्रैः संवेष्ट्य पूजयित्वाऽङ्गसंभवैः । रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत् ॥ ६५
पूजिते पुष्पधूपाद्यैर्दत्त्वा सिद्धान्तपुस्तके । गुरोः पादान्तिकं गत्वा भक्त्या दद्यात्पवित्रकम् ६६
निर्गत्य बहिराचम्य गोमये मण्डलत्रये । पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्यजेत् ॥ ६७
स्वाचान्तो मन्त्रसंनद्धः कृतसंगीतजागरः । स्वपेदन्तः स्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥ ६८
अनेनैव प्रकारेण मुमुक्षुरपि संविशेत् । केवलं भस्मशय्यायां सोपवासः समाहितः ॥ ६९

इत्यादिमहापुराण आग्नेये पवित्राधिवासनविधिकथनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३१२

---

अथैकोनाशीतितमोऽध्यायः ।

---

पवित्रारोहणविधिः ।

ईश्वर उवाच—

अथ प्रातः समुत्थाय कृतस्नानः समाहितः । कृतसंध्यार्चनो मन्त्री प्रविश्य मखमण्डलम् ॥ १
समादाय पवित्राणि अविसर्जितदेवतः । ऐशान्यां भाजने शुद्धे स्थापयेत्कृतमण्डले ॥ २
ततो विसर्ज्य देवेशं निर्माल्यमपनीय च । पूर्ववद्भूतले शुद्धे कृत्वाऽऽह्निकमथ द्वयम् ॥ ३
आदित्यद्वारदिक्पालकुम्भेशानौ शिवेऽनले । नैमित्तिकीं सविस्तारां कुर्यात्पूजां विशेषतः ॥ ४
मन्त्राणां तर्पणं प्रायश्चित्तहोमं शराणुना । अष्टोत्तरशतं कृत्वा दद्यात्पूर्णाहुतिं शनैः ॥ ५
पवित्रं भानवे दत्त्वा समाचम्य ददीत च । द्वारपालादिदिक्पालकुम्भवर्धनिकादिषु ॥ ६
संनिधाने ततः शंभोरुपविश्य निजासने । पवित्रमात्मने दद्याद्गणाय गुरुवह्नये ॥ ७
ॐ कालात्मना त्वया देव यद्दिष्टं मामके विधौ । कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तं च यत्कृतम् ॥ ८
तदस्तु क्लिष्टमक्लिष्टं कृतं क्लिष्टमसंस्कृतम् । सर्वात्मनाऽमुना शंभो पवित्रेण त्वदिच्छया ॥ ९
ॐ पूरय मखव्रतं नियमेश्वराय स्वाहा ॥ १०

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. नाभिसं° । २ ख. °पात्रे वि° । ३ ख. पूजिते । ४ ख. ग. ङ. च. हृद्वर्मा° । ५ क. ङ. च. °ङ्गसस्वनैः । र° । ख. ग. °ङ्गशंवरैः । र° । ६ क. ङ. च. °ण्डपत्र° । ७ घ. आचान्तो । ८ घ. °संबद्धः । ९ क. ङ. च. °परागः स° । १० क. च. मण्डमण्डपे । त° । ११ ख. ग. °मखद्व° । १२ क. ङ. च. °र्पणे होमं प्रायश्चित्तं श° । १३ घ. °रात्मना । १४ क. ख. ग. ङ. च. हुत्वा । १५ ग. सुखासने । १६ ङ. च. °कारार्थ त्व° । १७ ङ. च. यद्दृष्टं । १८ क. ङ. च. °तं क्षिप्तम° ।

आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना । मूलं लयान्तमुच्चार्य पवित्रेणार्चयेच्छिवम् ॥ ११
विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते । ईश्वरान्तं समुच्चार्य पवित्रमधिरोपयेत् ॥ १२
शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते । शिवान्तं मन्त्रमुच्चार्य तस्मै देयं पवित्रकम् ॥ १३
सर्वकारणपालेषु शिवमुच्चार्य सुव्रत । मूलं लयान्तमुच्चार्य दद्याद्गङ्गावतारकम् ॥ १४
आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकम् । विनिर्दिष्टं बुभुक्षूणां शिवतत्त्वात्मभिः क्रमात् ॥ १५
स्वाहान्तं वा नमोन्तं वा मन्त्रमेषामुदीरयेत् ॥ १६
ॐ हामात्मतत्त्वाधिपतये शिवाय स्वाहा । ॐ हां विद्यातत्त्वाधिपतये शिवाय स्वाहा ॥
(*ॐ हौं शिवतत्त्वाधिपतये शिवाय स्वाहा । ॐ हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ॥) १७
नत्वा गङ्गावतारं तु प्रार्थयेत्तं कृताञ्जलिः । त्वं गतिः सर्वभूतानां संस्थितिस्त्वं चराचरे ॥ १८
अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर । कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ १९
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यत्कृतम् । जपहोमार्चनैर्हीनं कृतं नित्यं मया तव ॥ २०
अकृतं वाक्यहीनं च तत्पूरय महेश्वर । सुपूतस्त्वं परेशान पवित्रं पापनाशनम् ॥ २१
त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् । खण्डितं यन्मया देव व्रतं वैकल्ययोगतः ॥ २२
एकी भवतु तत्सर्वं तवाऽऽज्ञासूत्रगुम्फितम् । जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥ २३
नत्वा तु गुरुणाऽऽदिष्टं गृह्णीयान्नियमं नरः । चतुर्मासं त्रिमासं वा त्र्यहमेकाहमेव च ॥ २४
प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती । पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयम् ॥ २५
समारोप्य समभ्यर्च्य पुष्पधूपाक्षतादिभिः । अन्तर्बलिं पवित्रं च रुद्रादिभ्यो निवेदयेत् ॥ २६
प्रविश्यान्तः शिवं स्तुत्वा सप्रणामं क्षमापयेत् । प्रायश्चित्तकृतं होमं कृत्वा हुत्वा च पायसम् २७
शनैः पूर्णाहुतिं दत्त्वा वह्निस्थं विसृजेच्छिवम् । होमं व्याहृतिभिः कृत्वा रुन्ध्यान्निष्ठुरयाऽनलम्
अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयम् । दिक्पतिभ्यस्ततो दद्यात्सपवित्रं बहिर्बलिम् २९
सिद्धान्तपुस्तके दद्यात्सप्रमाणं पवित्रकम् ॥ ३०
ॐ हां भूः स्वाहा । ॐ हां भुवः स्वाहा । ॐ हां स्वः स्वाहा । ॐ हां भूर्भुवः स्वः स्वाहा ३१
होमं व्याहृतिभिः कृत्वा दत्त्वाऽऽहुतिचतुष्टयम् ॥ ३२
ॐ हामग्नये स्वाहा । ॐ हां सोमाय स्वाहा । ॐ हामग्नीषोमाभ्यां स्वाहा । ॐ हामग्नये स्विष्टकृते स्वाहा ॥ ३३
गुरुं शिवमिवाभ्यर्च्य वस्त्रभूषादिविस्तरैः । समग्रं सफलं तस्य क्रियाकाण्डादि वार्षिकम् ॥ ३४
यस्य तुष्टो गुरुः सम्यगित्याह परमेश्वरः । इत्थं गुरोः समारोप्य हृदालम्बि पवित्रकम् ॥ ३५
द्विजादीन्भोजयित्वा तु भक्त्या वस्त्रादिकं ददेत् । दानेनानेन देवेशः प्रीयतां मे सदाशिवः ३६

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख. ग. पुस्तकयोरन्यथा ग्रन्थः स यथा—" ॐ हां बलतत्त्वाधिपतये शिवाय स्वाहा " इति ।

१ क. ङ. च. °तत्त्वं च । २ ख. °द्यान्तं वि° । ३ ख. शिवान्तं । ४ क. ङ. च. °षु सर्वतत्त्वेषु सु° । ५ क. ङ. च. °रणम् । ६ ख. °वविद्यादिभिः । ७ क. ङ. च. °धिपाय शि° । ८ क. ङ. च. °धिपाय शि° । ९ क. ख. ग. ङ. च. दत्त्वा । १० ख. °येत्तु कृ° । ११ ङ. °नं विधिहीं° । च. °नं भक्तिहीं° । १२ क. ङ. च. °त्वा कन्याविष्टर° । १३ ख. दत्त्वा सप° । १४ ख. स्वाहेति । ग° ।

भक्त्या स्नानादिकं प्रातः कृत्वा शंभोः समाहरेत् । पवित्राण्यष्टपुष्पैस्तं पूजयित्वा विसर्जयेत् ॥
नित्यं नैमित्तिकं कृत्वा विस्तरेण यथा पुरा । पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत् ३८
प्रायश्चित्तं ततोऽस्त्रेण हुत्वा पूर्णाहुतिं यजेत् । भुक्तिकामः शिवायाथ कुर्यात्कर्मसमर्पणम् ॥ ३९
त्वत्प्रसादेन कर्मेदं ममास्तु फलसाधकम् । मुक्तिकामस्तु कर्मेदं माऽस्तु मे नाथ बन्धकम् ॥ ४०
वह्निस्थं नाडीयोगेन शिवं संयोजयेच्छिवे । हृदि न्यस्याणुसंघातं पावकं च विसर्जयेत् ॥ ४१
समाचम्य प्रविश्यान्तः कुम्भानुगतसंवरान् । शिवं संयोज्य साक्षेपं क्षमस्वेति विसर्जयेत् ॥ ४२
विसृज्य लोकपालादीनादायेशात्पवित्रकम् । सति चण्डेश्वरे पूजां कृत्वा दत्त्वा पवित्रकम् ॥४३
तन्निर्माल्यादिकं तस्मै सपवित्रं समर्पयेत् । अथ वा स्थण्डिले चण्डं विधिना पूर्ववद्यजेत् ॥ ४४
यत्किंचिद्वार्षिकं कर्म कृतं न्यूनाधिकं मया । तदस्तु परिपूर्णं मे चण्ड नाथ तवाऽऽज्ञया ॥ ४५
इति विज्ञाप्य देवेशं नत्वा स्तुत्वा विसर्जयेत् । त्यक्तनिर्माल्यकः शुद्धः स्नापयित्वा शिवं यजेत्
पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसंनिधौ ॥ ४६

इत्यादिमहापुराण आग्नेये पवित्रारोहणविधिकथनं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३५८

---

अथाशीतितमोऽध्यायः ।

---

दमनकारोहणविधिः ।

ईश्वर उवाच—

वक्ष्ये दमनकारोहविधिं पूर्ववदाचरेत् । हरकोपात्पुरा जातो भैरवो दमिताः सुराः ॥ १
तेनाथ शप्तो विटपो भवेति त्रिपुरारिणा । प्रसन्नेनेरितं चेदं पूजयिष्यन्ति ये नराः ॥ २
परिपूर्णं फलं तेषामन्यथा न भविष्यति । सप्तम्यां वा त्रयोदश्यां दमनं संहितौणुभिः ॥ ३
संपूज्य बोधयेद्वृक्षं भववाक्येन मन्त्रवित् । हरप्रसादसंभूत त्वमत्र संनिधौ भव ॥ ४
शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया । गृहेऽप्यामन्त्रणं कुर्यात्सायाह्ने चाधिवासनम् ॥ ५
यथाविधि समभ्यर्च्य सूर्यशंकरपावकान् । देवस्य पश्चिमे मूलं दद्यात्तस्य मृदा युतम् ॥ ६
वामेन शिरसा वाऽथ नालं धात्रीं तथोत्तरे । दक्षिणे भस्मपत्रं च प्राच्यां पुष्पं च धावनम् ॥ ७
पुटिकास्थं फलं मूलमथैशान्यां यजेच्छिवम् । पश्चाङ्गमञ्जलौ कृत्वा आमन्त्र्य शिरसि न्यसेत् ॥८
आमन्त्रितोऽसि देवेश प्रातःकाले मया प्रभो । कर्तव्यस्तपसो लाभः पूर्णं सर्वं तवाऽऽज्ञया ॥ ९
मूलेन शेषं पात्रस्थं पिधायाथ पवित्रकम् । प्रातः स्नात्वा जगन्नाथं गन्धपुष्पादिभिर्यजेत् ॥ १०
नित्यं नैमित्तिकं कृत्वा दमनैः पूजयेत्ततः । शेषमञ्जलिमादाय आत्मविद्याशिवात्मभिः ॥ ११
मूलाद्यैरीश्वरान्तैश्च चतुर्थाञ्जलिना ततः ॥ १२

---

१ क. ङ. च. °स्याश्वसं° । घ. °स्याभिसं° । २ क. ख. ङ. सापेक्षा । ३ घ. °तात्मभिः । ४ ख. °हेष्वाम° । ५ क. च. °लं गन्धं तस्य च शाश्वतम् । ङ. °लं गत्वा तस्य च शाश्वतम् । ६ ख. फलं । ७ ङ. °णेऽम्भसः प° । ८ ख. च. भस्म प° । ९ ङ. च पुष्पं च दन्तधावनम् । १० क. च. पुष्पं । ११ ख. धावलम् । घ. धारणम् । १२ क. ङ. च. °कास्त्रं फ° । ख. °कास्त्रफ° । १३ ख. °वाणुभिः ।

ॐ[1] ह्रौं महेश्वराय[2] मखं पूरय पूरय शूलपाणये नमः ॥ १३
शिवं वह्निं च संपूज्य गुरुं प्राच्यार्थ बोधयेत्[3] । भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ॥१४
सर्वं तदस्तु संपूर्णं यच्च दामनकं मम । सकलं चैत्रमासोत्थं फलं प्राप्य दिवं व्रजेत् ॥ १५

इत्यादिमहापुराण आग्नेये दमनकारोहणविधिकथनं नामाशीतितमोऽध्यायः ॥ ८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३७३

---

अथैकाशीतितमोऽध्यायः ।

---

समयदीक्षाविधिः ।

ईश्वर उवाच—

वक्ष्यामि भोगमोक्षार्थं दीक्षां पापक्षयंकरीम् । मलमायादिपाशानां विश्लेषः क्रियते यया ॥ १
ज्ञानं च जन्यते शिष्ये सा दीक्षा भुक्तिमुक्तिदा । विज्ञानकलनामैको[4] द्वितीयः प्रलयाकलः ॥ २
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः । तत्राऽऽद्यो मलमात्रेण मुक्तोऽन्यो[5] मलकर्मभिः ॥३
कलादिभूमिपर्यन्तं स्तम्बैस्तु[6] सकलो मतः[7] । निराधाराऽथ साधारा दीक्षाऽपि द्विविधा मता॥४
निराधारा द्वयोस्तेषां साधारा सकलस्य तु । आधारनिरपेक्षेण क्रियते शंभुचर्यया ॥ ५
तीव्रशक्तिनिपातेन निराधारेति सा स्मृता । आचार्यमूर्तिमास्थाय मायातीव्रादिभेदया ॥ ६
शक्त्या यां कुरुते शंभुः सा साधिकरणोच्यते । इयं चतुर्विधा प्रोक्ता सबीजा बीजवर्जिता ॥
साधिकाराऽनधिकारा यथा तदभिधीयते । समयाचारसंयुक्ता सबीजा जायते नृणाम् ॥ ८
निर्बीजा त्वसमर्थानां समयाचारवर्जिता । नित्ये नैमित्तिके काम्ये यतः[8] स्यादधिकारिता ॥ ९
साधिकारा भवेद्दीक्षा साधकाचार्ययोरतः[10] । निर्बीजा दीक्षितानां तु[11] तथा समयिपुत्रयोः(?) १०
नित्यमात्राधिकारत्वाद्दीक्षा[12][13] (?) निरधिकारिका । द्विविधेयं द्विरूपा[14] हि प्रत्येकमुपजायते ॥ ११
एका क्रियावती तत्र कुण्डमण्डलपूर्विका । मनोव्यापारमात्रेण या सा ज्ञानवती मता ॥ १२
इत्थं लब्धाधिकारेण दीक्षाऽऽचार्येण साध्यते । स्कन्द दीक्षां गुरुः कुर्यात्कृत्वा[15] नित्यक्रियां ततः
प्रणवार्घ्यकराम्भोजः कृतद्वाराधिपार्चनः[16] । विघ्नानुत्सार्य देहल्यां न्यस्यास्त्रं स्वासने स्थितः १४
कुर्वीत भूतसंशुद्धिं मन्त्रयोगं यथोदितम् । तिलतण्डुलसिद्धार्थकुशदूर्वाक्षतोदकम् ॥ १५
सयवक्षीरनीरं च विशेषार्घ्यमिदं ततः । तदम्बुना द्रव्यशुद्धिं तिलकं स्वासनात्मनोः ॥ १६
पूजनं मन्त्रशुद्धिं[17] च पञ्चगव्यं च पूर्ववत् । लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतं कुशान् ॥ १७
विकिरान्शुद्धलाजांस्तान्[18]सधूपानस्त्रमन्त्रितान्[19] । शस्त्राम्बुप्रोक्षितानेतान्कवचेनावगुण्ठितान् ॥ १८
नानाप्रहरणाकारान्विघ्नौघविनिवारकान् । दर्भाणां तालमानेन[20] कृत्वा[21] षट्त्रिंशता दलैः ॥ १९

---

१ क. ङ. च. ॐ ह्रौमग्नेश्व° । २ घ. मखेश्व° । ३ ख. शोधयेत् । ४ ख. °तकाल° । ५ ख. °ण युक्तोऽ° । ६ घ. स्तवैस्तु । ७ ख. युतः । ८ क. ख. °बीजत्वे स° । ९ क. ङ. च यत्र । १० क. ङ. च. °र्यगोचरे । नि° । ११ ख. तु यथा सदपि पु° । घ. तु यदा स मम पु° । १२ च. °मात्माविकारित्वा° । १३ क. ङ. °त्राविकारित्वा° । १४ क. ङ. च. °रूपाऽपि प्र° । १५ क. ङ. च. °त्कृतनित्यक्रियो नृपः । प्र° । १६ क. ङ. च. °रा(र)विपर्ययः । वि° । १७ क. ङ. च °न्त्रसंशुद्धिं प° । १८ क. ङ. च. °लाजास्थान्स° । १९ ख. °न् । अस्त्रा° । २० ख. °मात्रेण कृ° । २१ क. ख. ङ. च. कृतां ।

( समयदीक्षाविधिकथनम् )

सप्तजप्तं शिवास्त्रेण वेर्णी बोधासिमुत्तमम् । शिवमात्मनि विन्यस्य सृष्ट्याधारमभीप्सितम् ॥ २०
निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत् । उष्णीषं शिरसि न्यस्य अलं कुर्यात्स्वदेहकम्
गन्धमण्डनकं[1] स्वीये विदध्याद्दक्षिणे करे । विधिनाऽत्रार्चयेदीशमित्थं स्याच्छिवे[2]हस्त[3]कम् ॥ २२
विन्यस्य शिवमन्त्रेण भा[4]स्वरं निजमस्तके । शिवादभिन्नमात्मानं कर्तारं भावयेद्यथा ॥ २३
मण्डले कर्मणां साक्षी कलशे यज्ञरक्षकः । होमो[5]धिकरणं वह्नौ शिष्ये पाशविमोचकः ॥ २४
स्वात्मन्यनुगृहीतेति षडाधारो य ईश्वरः । सोऽहमेवेति कुर्वीत भावं[6] स्थिरतरं पुनः ॥ २५
ज्ञानखड्गकरः स्थित्वा नैर्ऋत्या(त्य)भिमुखो नरः । सार्घ्याम्बुपञ्चगव्याभ्यां प्रोक्षयेद्यागमण्डपम्
चतुष्पथान्तसंस्कारैः संस्कुर्याद्वीक्षणादिभिः । विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत् ॥ २७
तानीशदिशि वर्धन्यामासनायोपकल्पयेत् । नैर्ऋते वास्तुगीर्वाणान्द्वारे लक्ष्मीं प्रपूजयेत् ॥ २८
आ[7]ज्ये र[8]त्नैः पूरयन्तीं हृदा मण्डपरूपिणीम् । साम्बुवस्त्रे सरत्ने च धान्यस्थे पश्चिमानने ॥ २९
ऐशे कुम्भे यजेच्छंभुं शक्तिं कुम्भस्य दक्षिणे । पश्चिमस्यां(मायां) तु सिंहस्थां वर्धनीं खड्गरूपिणीम्
दिक्षु शक्रादिदिक्पालान्वि[9]ष्णवन्तान्प्रणवासनान् । वाहनायुधसंयुक्तान्हृदाऽभ्यर्च्य स्वनामभिः
प्रथमं तान्समादाय कुम्भस्याग्रां[10]भिगामिनीम् । अविच्छिन्नपयोधारां भ्रामयित्वा प्रदक्षिणम् ३२
शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन् । संरक्षत यथायोगं कुम्भं धृत्वाऽथ तां धरेत् ॥ ३३
ततः स्थिरासने कुम्भे साङ्गं संपूज्य शंकरम् । विन्यस्य शोध्यमध्वानं वर्धन्यामस्त्रमर्चयेत् ॥ ३४
ॐ[11] हः, अस्त्रासनाय[12] हूं फट् । ॐ[13] ओमस्त्रमूर्तये नमः । ॐ[14] हूं फट्, पाशुपतास्त्राय नमः ।
ॐ ॐ हृदयाय हूं फट्, नमः । ॐ श्रीं[15] शिरसे हूं फट्, नमः । ॐ यं शिखायै हूं फट्,
नमः । ॐ गूं[16] कवचाय हूं फट्, नमः । ॐ[17] फट्, अस्त्राय हूं फट्, नमः ॥ ३५
चतुर्वक्त्रं सदंष्ट्रं च स्मरेदस्त्रं सशक्तिकम् । समुद्गरत्रिशूलासिं सूर्यकोटिसमप्रभम् ॥ ३६
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया । अङ्गुष्ठेन स्पृशेत्कुम्भं हृदा[18] मुष्ट्याऽस्त्रवर्धनीम् ॥ ३७
भुक्तये मुक्तये त्वादौ मुष्टिना वर्धनीं स्पृशेत् । कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ३८
शस्त्रं च मूलमन्त्रस्य शतकुम्भे निवेशयेत् । तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेत्ततः ॥ ३९
यथेदं कृत(तं(?))यत्नेन भगवन्मखमन्दिरम् । रक्षणीयं जगन्नाथ सर्वाध्वरधर त्वया ॥ ४०
प्रणवस्थं चतुर्बाहुं वायव्ये गणमर्चयेत् । स्थण्डिले शिवमभ्यर्च्य सार्घ्यः कुण्डं व्रजेन्नरः ॥ ४१
निविष्टो मन्त्र[19]तुष्ट्यर्थमर्घ्यगन्धघृतादिकम् । वामे सव्ये तु विन्यस्य समिद्दर्भतिलादिकम् ॥ ४२
कुण्डवह्निस्रुगाज्यादि प्राग्वत्संस्कृत्य भावयेत् । मुख्यतामूर्ध्ववक्त्रस्य हृदि वह्नौ शिवं यजेत्॥४३
स्वमूर्तौ शिवकुम्भे च स्थण्डिले त्वग्निशिष्ययोः । सृष्टिन्यासेन विन्यस्य(स्याऽऽ) शोध्याध्वानं
यथाविधि ॥ ४४
कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् । बीजानि सप्तजिह्वानामग्नेर्होमाय भण्यते ॥ ४५

---

१ क. ख. ङ. च. °ण्डलकं । २ ख. घ. °वमस्त° । ३ ख. °स्तके । वि° । ४ क. ङ. च. भास्करं । ५ ख. °मादिक° । ६ क. च. °वं च सुस्थिरं पु° । ७ ख. आद्ये । ८ क ङ. बलिः । ९ क. ङ. च. °न्विष्कम्भान्प्र° । १० च. °ग्रानुवार्तिनी° ११ क. ङ. च. ॐ अ हः । १२ क. ङ च. °य फ° । १३ क ङ. च. ॐ अं ॐ अस्त्र° । १४ क. ङ. च. ॐ यं रूं हूं । १५ क च. ग्लां । १६ क. च. श्रूं । १७ क. च. ॐ हू फ° । १८ ख. °दा पुष्ट्याऽ° । १९ घ. °त्रतृप्त्यर्थं° ।

त्रिरेफावन्तिमौ[1] वर्णौ रेफषष्ठस्वरान्वितौ[2] । इन्दुबिन्दुशिखायुक्तौ[3] जिह्वाबीजाद्यनुक्रमात् ४६
हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा । अतिरिक्ता बहुरूपा रुद्रेन्द्राग्न्याप्यदिङ्मुखाः(?)॥
क्षीरादिमधुरैर्होमं कुर्याच्छान्तिकपौष्टिके । अभिचारे तु पिण्याकसक्तुकञ्चुककाञ्जिकैः ॥ ४८
लवणै राजिकातक्रकटुतैलैश्च कण्टकैः । समिद्भिरपि वक्राभिः क्रुद्धो भाष्याणुना यजेत् ॥ ४९
कलम्बकलिकाहोमाद्यक्षिणी सिध्यति ध्रुवम् । बन्धूककिंशुकादीनि वश्याकर्षाय होमयेत् ॥ ५०
बिल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकानपि । पद्मानि चक्रवर्तित्वे भक्ष्यभोज्यानि संपदे ॥५१
दूर्वा व्याधिविनाशाय सर्वसत्त्ववशीकृते । प्रियंगुपाटलीपुष्पं चूतपत्रं ज्वरान्तकम् ॥ ५२
मृत्युंजयो मृत्युजित्स्याद्वृद्धिः स्यात्तिलहोमतः । रुद्रशान्तिः सर्वशान्त्या अथ प्रस्तुतमुच्यते ५३
आहुत्यष्टशतैर्मूलमङ्गानि तु दशांशतः । संतर्पयेन मूलेन दद्यात्पूर्णां यथा पुरा ॥ ५४
तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं जपेत् । दुर्निमित्तापसाराय सुनिमित्तकृते तथा ॥ ५५
शतद्वयं च होतव्यं मूलमन्त्रेण पूर्ववत् । मूलाद्यष्टास्त्रमन्त्राणां स्वाहान्तैस्तर्पणं सकृत् ॥ ५६
शिखासंपुटितैर्बीजैर्हूंफडन्तैश्च दीपनम् । ॐ हौं शिवाय स्वाहा इत्यादिमन्त्रैश्च तर्पणम् ॥ ५७
ॐ ह्रूं हौं हीं शिवाय ह्रूं फडित्यादि[च] दीपनम् । ततः शिवाम्भसा स्थालीं क्षालितां वर्मगुण्ठिताम् ॥ ५८
चन्दनादिसमालब्धां बध्नीयात्कटकं गले । वर्मास्त्रजप्तसद्दर्भपत्राभ्यां चरुसिद्धये ॥ ५९
धर्माद्यैरासने दत्त[11] सार्धेन्दुकृतमण्डले । न्यस्तायां मूर्तिभूतायां भावपुष्पैः शिवं यजेत् ॥ ६०
वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पैर्बहिर्भवैः । चुल्ल्यां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ६१
न्यस्ताहंकारबीजायां न्यस्तायां कुण्डदक्षिणे । धर्माधर्मशरीरायां जप्तायां मानुषात्मना ॥ ६२
स्थालीमारोपयेदस्त्रजप्तां[12] गव्याम्बुमार्जिताम् । गव्यं पयोऽस्त्रसंशुद्धं प्रासादशतमन्त्रितम् ॥ ६३
तण्डुलाञ्श्यामकादीनां निक्षिपेत्तत्र तद्यथा । एकशिष्यविधानाय तेषां प्रसृतिपञ्चकम् ॥ ६४
प्रसृतिं प्रसृतिं पश्चाद्वर्धयेद्द्व्यादिषु क्रमात् । कुर्याच्चानलमन्त्रेण[13] पिधानं कवचाणुना ॥ ६५
शिवाग्नौ मूलमन्त्रेण पूर्वास्यश्चरुकं यजेत् । सुस्विन्ने तत्र तच्चुल्ल्यां स्रुवमापूर्य सर्पिषा ॥ ६६
स्वाहान्तैः संहितामन्त्रैर्दत्त्वा तप्ताभिघारणम् । संस्थाप्य मण्डले स्थालीं सद्दर्भेऽस्त्राणुना कृते ६७
प्रणवेन पिधायास्यां तद्देहलेपनं हृदा । सुशीतलो भवत्येवं प्राप्य शीताभिघारणम् ॥ ६८
विदध्यात्संहितामन्त्रैः शिष्यं प्रति सकृत्सकृत् । धर्माद्यासनके हुत्वा[14] कुण्डमण्डलपश्चिमे[15] ॥ ६९
संपातं च स्रुचा हुत्वा शुद्धिं संहितयाऽऽचरेत् । चरुकं सकृदालभ्य तथैव वषडन्तया ॥ ७०
धेनुमुद्रामृतीभूतं स्थण्डिले शान्तिकं नयेत् । साज्यभागं स्वशिष्याणां भागो देवाय वह्नये ॥ ७१
कुर्यात्तु लोकपालादेः समध्वाज्यमिदं त्रयम्[16] । नमोन्तेन हृदा दद्यात्तेनैवाऽऽचमनीयकम् ॥ ७२
साज्यं[17] मन्त्रशतं हुत्वा दद्यात्पूर्णां यथाविधि । मण्डलं कुण्डतः पूर्वे मध्ये वा शंभुकुम्भयोः ७३
रुद्रमातृगणादीनां निर्वर्त्यान्तर्बलिं हृदा । शिवमध्ये[18]ऽथ लब्धाज्ञो विधायैकत्वभावनम् ॥ ७४

---

१ ख. °मां रे° । २ ख. °ष्टसुरक्षितौ । ३ ख. °शिवायु° । ४ ज. °जानुपक्र° । ५ ख. °तिरक्ता । ६ ख. °त्स्याद्विष्टिः स्या° । ७ ख. °तर्प्यं प्रुत° । ८ ख. °प्रदेशा° । ९ ख. °जैर्हूंरूंफ° । १० ख. °प्तसंदर्भ प° । ११ ख. °त्ते मात्रो यक्र° । १२ ख. °जप्तग° । १३ ख. कुर्वश्चालनमन्त्रेण । १४ ख. धृत्वा । १५ ख. °ण्डपप° । १६ ख. °नीत्रयम् । १७ ख. साग्यं । १८ घ. °ध्येऽप्यल° ।

सर्वज्ञतादियुक्तोऽहं समन्ताच्चोपरि स्थितः । ममांशो योजनास्थानमधिष्ठाताऽहमध्वरे ॥ ७५
शिवोऽहमित्यहंकारी निष्क्रमेद्यागमण्डपात् । न्यस्तपूर्वाग्रसंदर्भे शस्त्राणुकृतमण्डले ॥ ७६
प्रणवासनके शिष्यं शुक्लवस्त्रोत्तरीयकम् । स्नातं चोदङ्मुखं मुक्त्यै पूर्ववक्त्रं तु भुक्तये ॥ ७७
ऊर्ध्वकायं समारोप्य पूर्वास्यं प्रविलोकयेत् । चरणादिशिखां यावन्मुक्तौ भुक्तौ विलोमतः ७८
चक्षुषा सप्रसादेन शैवं धाम विद्वण्वता । अस्त्रोदकेन संप्रोक्ष्य मन्त्राम्बुस्नानसिद्धये ॥ ७९
भस्मस्नानाय विघ्नानां शान्तये पापभित्तये । सृष्टिसंहारयोगेन(ण) ताडयेदस्त्रभस्मना ॥ ८०
पुनरस्त्राम्बुना प्रोक्ष्य सकलीकरणाय तम् । नाभेरूर्ध्वं कुशाग्रेण मार्जनीयास्त्रमुच्चरन् ॥ ८१
त्रिधाऽऽलभेत तन्मूलैरघमर्षाय नाभ्यधः । द्वैविध्याय च पाशानामालभेत शराणुना ॥ ८२
तच्छरीरे शिवं साङ्गं सासनं विन्यसेत्ततः । पुष्पादिपूजितस्यास्य नेत्रे नेत्रेण वा हृदा ॥ ८३
बद्ध्वा मन्त्रितवस्त्रेण सितेन सदशेन च । प्रदक्षिणक्रमादेनं प्रवेश्य शिवदक्षिणम् ॥ ८४
सवस्त्रमासनं दद्याद्यथावर्णं निवेदयेत् । संहारमुद्रयाऽऽत्मानं मूर्त्या तस्य हृदम्बुजे ॥ ८५
निरुध्य शोधिते काये न्यासं कृत्वा तमर्चयेत् । पूर्वाननस्य शिष्यस्य मूलमन्त्रेण मस्तके ॥ ८६
शिवहस्तं प्रदातव्यं रुद्रेशपददायकम्(?) । शिवसेवाग्रहोपायं दत्तहस्तं शिवाणुना ॥ ८७
शिवे प्रक्षेपयेत्पुष्पमपनीयार्चकान्तरम् । तत्पात्रस्थानमन्त्राढ्यं शिवदेवगणानुगम् ॥ ८८
विप्रादीनां क्रमान्नाम कुर्याद्वा स्वेच्छया गुरुः । प्रणतिं कुम्भवर्धन्योः कारयित्वाऽनलान्तिके ८९
सदक्षिणासने तद्वत्सौम्यास्यमुपवेशयेत् । शिष्यदेहविनिष्क्रान्तां सुषुम्नामिव चिन्तयेत् ॥ ९०
निजविग्रहलीनां च दर्भमूलेन मन्त्रितम् । दर्भाग्रं दक्षिणे तस्य विधाय करपल्लवे ॥ ९१
तन्मूलमात्मजङ्घायामग्रं चेति शिखिध्वंज । शिष्यस्य हृदयं गत्वा रेचकेन शिवाणुना ॥ ९२
पूरकेण समागत्य स्वकीयं हृदयान्तरम् । शिवाग्निना पुनः कृत्वा नाडीसंधानमीदृशम् ॥ ९३
हृदा तत्संनिधानार्थं जुहुयादाहुतित्रयम् । शिवहस्तस्थिरत्वार्थं शतं मूलेन होमयेत् ॥ ९४
इत्थं समयदीक्षायां भवेद्योग्यो भवार्चने ॥ ९५

इत्यादिमहापुराण आग्नेये समयदीक्षाविधिकथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४६८

---

अथ द्व्यशीतितमोऽध्यायः ।

---

संस्कारदीक्षाविधिः ।

ईश्वर उवाच—

वक्ष्ये संस्कारदीक्षाया विधानं शृणु षण्मुख । आवाहयेन्महेशस्य वह्निस्थस्य शिवौ[3] हृदि ॥ १
संश्लिष्टौ तौ समभ्यर्च्य संतर्प्य हृदयाणुना । तयोः संनिधये दद्यात्तेनैवाऽऽहुतिपञ्चकम् ॥ २
कुसुमेनास्त्रलिप्तेन ताडयेत्तं हृदा शिशुम् । प्रस्फुरत्तारकाकारं चैतन्यं तत्र भावयेत् ॥ ३
प्रविश्य तत्र हुंकारमुक्तं रेचकयोगतः । संहारिण्या तदाहृत्य पूरकेण हृदि न्यसेत् ॥ ४
ततो वागीश्वरीं योनौ मुद्रयोद्भवसंज्ञया । हृत्संपुटितमन्त्रेण रेचकेन विनिक्षिपेत् ॥ ५

---

१ घ. ॰प्रसन्धर्मे । २ ख. ॰ध्वजे । शि॰ । ३ घ. शिरो । ४ घ. ॰यात्मना । ५ ख. ॰त्र हूरुंका॰ । ६ घ. ॰दाकृष्य । ७ क. ङ. च. ॰पुटात्मम॰ । ख. ॰पुटासमुद्रेण ।

ॐ हां हां[1] हामात्मने नमः ॥ ६
जाज्वल्यमाने निर्धूमे जुहुयादिष्टसिद्धये । अप्रवृद्धे[2] सधूमे तु होमो वह्नौ न सिध्यति ॥ ७
स्निग्धः प्रदक्षिणावर्तः सुगन्धिः शस्यतेऽनलः । विपरीतः स्फुलिङ्गी च भूमिस्पृङ्[3]न प्रशस्यते ॥ ८
इत्येवमादिभिश्चिह्नैर्हुत्वा शिष्यस्य कल्मषम् । पापभक्षणहोमेन दहेद्द्रातं[4] भवात्मना[5] ॥ ९
द्विजत्वापादनार्थाय तथा रुद्रांशभावने । आहारबीजसंशुद्धौ गर्भाधानाय संस्थितौ ॥ १०
सीमन्ते जन्मतो नामकरणाय च होमयेत् । शतानि पञ्च मूलेन वौषडादिदशांशतः ॥ ११
[6]शिथिलीभूतबन्धस्य शक्तावुत्कर्षणं च यत् । आत्मनो रुद्रपुत्रत्वे गर्भाधानं तदुच्यते ॥ १२
स्वातन्त्र्यात्मगुणव्यक्तिरिह पुंसवनं मतम् । मायात्मनोर्विवेकेन ज्ञानं सीमन्तवर्धनम् ॥ १३
शिवादितत्त्व[7]संशुद्धेस्तु स्वीकारो जननं मतम् । बोधनं यच्छिवत्वेन शिवत्वा[8]र्हस्य नो मतम् ॥ १४
संहारमुद्रयाऽऽत्मानं स्फुरद्वह्निकणोपमम् । विदधीत समादाय निजे हृदयपङ्कजे ॥ १५
ततः कुम्भकयोगेन मूलमन्त्रमुदीरयेत् । कुर्यात्समरसीभावं तदा च शिवयोर्हृदि ॥ १६
ब्रह्मादिका[9]रणत्यागक्रमाद्रेचकयोगतः । नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ॥ १७
हृत्संपुटितमन्त्रेण रेचकेन विधानवित् । शिष्यस्य हृदयाम्भोजकर्णिकायां विनिक्षिपेत्[10] ॥ १८
पूजां शिवस्य वह्नेश्च गुरुः कुर्यात्तदोचिताम् । प्रणतिं चाऽऽत्मने शिष्यं समयाञ्श्रावयेत्तथा ॥ १९
[11]देवं न निन्देच्छास्त्रा[12]णि निर्माल्यादि न लङ्घयेत् । शिवाग्निगुरुपूजा च कर्तव्या जीविताविधि ॥
बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् । यथाशक्ति ददीता[13]र्थं समर्थस्य समग्रकान् ॥ २१
[14]व्रताङ्गानि जटाभस्मदण्डकौपीनसंयमान् । ईशानाद्यैर्हृदाद्यैर्वा परिजप्य यथाक्रमात् ॥ २२
स्वाहान्तसंहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत् । संपा[15]ताभिहुतं हुत्वा स्थण्डिलेशाय दर्शयेत् ॥ २३
रक्षणाय घटाधस्तादारोप्य क्षणमात्रकम् । शिवादाज्ञां समादाय ददीत व्रतिने गुरुः ॥ २४
एवं समयदीक्षायां विशिष्टायां विशेषतः । वह्निहोमागमज्ञानयोग्यः संजायते शिशुः[16] ॥ २५

इत्यादिमहापुराण आग्नेये संस्कारदीक्षाविधिकथनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४९३

---

अथ त्र्यशीतितमोऽध्यायः ।

---

## निर्वाणदीक्षाविधिः ।

ईश्वर उवाच—

अथ निर्वाणदीक्षायां कुर्यान्मूलादिदीप[17]नम् । पाशबन्धनशक्त्यर्थं ताडनादि[18]कृतेन वा ॥ १
एकैकया तदा[19]हुत्या प्रत्येकं तत्त्रयेण वा । बीजगर्भशिखा[20]र्धं तु हूंफडन्तध्रुवादिना ॥ २

---

१ क. ङ. च. हं । २ क. ङ. च. अप्रबुद्धे । ३ घ. °भिस्पर्शः प्र° । ४ क. ङ. च. °तं नवा° । ५ ख. °नाम् । द्वि° । ६ क. ङ. च. शिखिनां भू° । ७ क. ङ. च. °त्वसिद्धस्तु । ८ घ. °मवशीभा° । ९ घ. °रणात्या° । १० ख. °येद्यथा । ११ च. देवान्न नि° । १२ क. ङ. च. °स्त्रादि नि° । १३ क. ङ. च. °तान्नं स° । १४ ख. घ. भूताङ्गानि । १५ घ. °पादितद्रुतं । १६ ख. शुचिः । १७ ख. °पकम् । १८ क. ङ. च. °कृतेऽपि वा । १९ क. ख. ङ. च. हुत्वा प्र° । २० क. ख. ङ. च. °खाद्बंद्रहूं° ।

( निर्वाणदीक्षाविधिः )

ॐ हूरूं[1] हौं हौं हूरूं फडिति मूलमन्त्रस्य दीपनम् । ॐ[2] हूरूं हौं हौं हूरूं फडिति हृदय एवं शिरोमुखे
प्रत्येकं दीपनं कुर्यात्सर्वस्मिन्[3]क्रूरकर्मणि । शान्तिके पौष्टिके चास्य वषडन्तादिनाऽणुना[4] ॥ ४
वषड्वौषट्समोपेतैः सर्वकाम्योपरि स्थितैः । हैवनं[5] संवरैः कुर्यात्सर्वत्राऽऽप्यायनादिषु ॥ ५
ततः स्वसव्यभागस्थं मण्डले[6] शुद्धविग्रहम् । शिष्यं संपूज्य[7] तत्सूत्रं सुषुम्नेति विभावितम् ॥ ६
मूलेन तच्छिखाबन्धं पादाङ्गुष्ठान्तमानयेत् । संहारेण मुमुक्षोस्तु वध्नीयाच्छिष्यकायके ॥ ७
पुंसस्तु दक्षिणे भागे वामे नार्या नियोजयेत् । शक्तिं च शक्तिमन्त्रेण पूजितां तस्य मस्तके ॥ ८
संहारमुद्रयाऽऽदाय सूत्रं[8] तेनैव योजयेत् । नाडीं त्वादाय मूलेन सूत्रे न्यस्य हृदाऽर्चयेत्[9] ॥ ९
अवगुण्ठ्य तु रुद्रेण हृदयेनाऽऽहुतित्रयम् । प्रदद्यात्संनिधानार्थं शक्तावप्येवमेव हि ॥ १०
(*ॐ हां पदाध्वने नमः[10] ॥ ) ११
ॐ हां वर्णाध्वने[11] नमो [12]हां भवनाध्वने नमः । ॐ हां कलाध्वने[13] नमः (+शोध्याध्वानं हि सूत्रके
न्यस्यास्त्रवारिणा शिष्यं प्रोक्ष्यास्त्रमन्त्रितेन च । पुष्पेण हृदि संताड्य शिष्यदेहे प्रविश्य च १३)
गुरुश्च तत्र[14] हूंकारयुक्तं[15] रेचकयोगतः । चैतन्यं हंसबीजस्थं विश्लिष्येदायुधाणुना[16][17] ॥ १४
ॐ हौं[18] हूं फट् ॥ १५
आच्छिद्य शक्तिसूत्रेण हां[19] हं स्वाहेति चाणुना । संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ॥ १६
ॐ हां हं हामात्मने नमः[20] ॥ १७
व्यापकं भावयेदेनं तनुत्रेणावगुण्ठयेत् । आहुतित्रितयं दद्याद्धृदा संनिधिहेतवे ॥ १८
विद्यादेहं च विन्यस्य शान्त्यतीतावलोकनम् । तस्यामितरतत्त्वाद्यं[21] मन्त्रभूतं विचिन्तयेत्[22] ॥ १९
ॐ हां हौं शान्त्यतीतकलापाशाय नम इत्यनेनावलोकयेत् ॥ २०
द्वे तत्त्वे मन्त्रमप्येकं पदं वर्णा(र्णौ)श्च षोडश । तथाऽष्टौ भुवनान्यस्यां बीजनाडीकथद्वयम्[23] ॥ २१
विषयं च गुणं चैकं कारणं च सदाशिवम्[24] । सितायां शान्त्यतीयामन्तर्भाव्य प्रपीडयेत् ॥ २२
ॐ हौं शान्त्यतीतकलापाशाय हूं[25] फट् ॥ २३
संहारमुद्रयाऽऽदाय विदध्यात्सूत्रमस्तके । पूजयेदाहुतीस्तिस्रो दद्यात्संनिधिहेतवे ॥ २४
तत्त्वे द्वे अक्षरे द्वे च बीजनाडीकथद्वयम्[26] । गुणौ मन्त्रौ तथाऽन्तस्थमेकं[27] कारणमीश्वरम् ॥ २५
पदानि भानुसंख्यानि भुवनानि[28] च सप्त च । एकं च विषयं[29] शान्तौ[30] कृष्णायामच्युतं स्मरेत् ॥
ताडयित्वा समादाय मुखसूत्रे नियोजयेत् । जुहुयान्निजबीजेन सांनिध्यायाऽऽहुतित्रयम् ॥ २७

* घ. पुस्तके धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थस्त्रुटितः क. ङ. च. पुस्तकेषु ।

१ ङ. च. ॐ हूं हौ हू हूं फ° । २ क. ङ. च. ॐ हूं हू हां हं हूं फ° । ३ ख. °स्मिन्सुर° । ४ ख. °डन्तशिवाणु° । ५ क. ङ. घ. हिरण्यं । ६ ख. मण्डलैः । ७ ख. °ज्य स सु° । ८ ख. सूत्रे । ९ क. ङ. च. °दात्मने । १० क. ख. ङ. च. °मः । हां । ११ क. ङ. च. °र्णात्मने । १२ क. ङ. च हां भुवनात्मने । १३ क. ङ. च. °लात्मने । १४ क. ङ. च. °त्र हुंका° । ख. °त्र हूंका° । १५ क. ख. ङ. च. °रमुक्तरे° । १६ घ. °धात्मना । १७ ख. °ना । हौं हरौ फ° । १८ क. ङ. च. हां । १९ ख. हां । २० ख. °मः । ॐ हौ हं हुम् । व्या° । २१ क. ख. ङ. च. °त्वायम° । २२ क. ङ. च. °त् । ऐ हौ । २३ ख. °करद्व° । २४ क. ख. ङ. च. °म् । शिता° । २५ क. ङ. च. हुं । ख. हरूं । २६ ख. °कखद्व° । २७ ख. °थाऽन्तस्थ° । २८ ख. घ. °नि दश स° । २९ क. ङ. च. मध्यतः । ३० क. ङ. च. हृष्टायां मध्यतः स्म° ।

विद्यायां सप्त तत्त्वानि[1] पादानामेकविंशतिम् । षड्वर्णान्[2]संचरं चैकं लोकानां पञ्चविंशतिम् ॥ २८
गुणानां त्रयमेकं च विषयं[3] रुद्रकारणम् । अन्तर्भाव्यातिरिक्तायां बीजनाडीकथद्वयम्[4][5] ॥ २९
तान्यादाय विदध्याच्च पदं ह्यधिकविंशतिम् । लोकानां च कलानां च षष्टिं गुणचतुष्टयम् ॥ ३०
मन्त्राणां त्रयमेकं च विषयं कारणं हरिम् । अन्तर्भाव्य प्रतिष्ठायां शुक्लायां ताडनादिकम् ॥ ३१
विधाय नाभिसूत्रस्थां संनिधायाऽऽहुतीर्यजेत्[6] । ह्रीं भुवनानां शतं साग्रं[7] पदानामष्टविंशतिम्[8] ॥
बीजनाडीसमीराणां द्वयोरिन्द्रिययोरपि[9] । वर्णं तत्त्वं च विषयमेकैकं गुणपञ्चकम् ॥ ३३
हेतुं ब्रह्माण्डमन्तस्थं[10] शम्बराणां चतुष्टयम् । निवृत्तौ पीतवर्णायामन्तर्भाव्य प्रताडयेत् ॥ ३४
आदौ[11] यत्तत्त्वभागान्ते सूत्रे विन्यस्य पूजयेत् । जुहुयादाहुतीस्तिस्रः संनिधानाय पावके ॥ ३५
इत्यादाय कलासूत्रे योजयेच्छिष्यविग्रहात् । सबीजायां तु दीक्षायां समयाचारयागतः[12] ॥ ३६
देहारम्भकरक्षार्थं[13] मन्त्रसिद्धिफलादपि । इष्टापूर्तादिधर्मार्थं[14] व्यतिरिक्तं प्रबन्धकम् ॥ ३७
चैतन्यबोधकं[15] सूक्ष्मं कलानामन्तरे स्मरेत् । अमुनैव क्रमेणाथ कुर्यात्तर्पणदीपने ॥ ३८
आहुतिभिः स्वमन्त्रेण तिसृभिस्तिसृभिस्तथा ॥ ३९
ॐ ह्रौं[16] शान्त्यतीतकलापाशाय स्वाहेत्यादि तर्पणम् । ॐ ह्रां[17] हं ह्रां[18] शान्त्यतीतकलापाशाय हूं[19] फडित्यादि दीपनम् ॥ ४०
तत्सूत्रं व्याप्तिबोधाय[20] कलास्थानेषु पञ्चसु । संगृह्य कुङ्कुमाद्येन[21] तत्र साङ्गं शिवं यजेत्[22] ॥ ४१
हूंफडन्तैः कलामन्त्रैर्भित्त्वा पाशाननुक्रमात् । नमोन्तैश्च प्रविश्यान्तः कुर्याद्ग्रहणबन्धने ॥ ४२
ॐ हूं ह्रां ह्रौं ह्रां हूं फट्शान्त्यतीतकलां गृह्णामि बध्नामि चेत्यादिभिर्मन्त्रैः कलानां ग्रहणबन्धनादिप्रयोगः ॥ ४३
पाशादीनां च स्वीकारो ग्रहणं बन्धनं पुनः । पुरुषं प्रति निःशेषव्यापारप्रतिपत्तये[23] ॥ ४४
उपवेश्याथ तत्सूत्रं शिष्यस्कन्धे निवेशयेत् । विस्मृताद्यप्रमोषाय[24] शतं मूलेन होमयेत् ॥ ४५
शरावसंपुटे पुंसः स्त्रियाश्च प्रणितोदरे । हृदस्त्रसंपुटं सूत्रं[25] विधायाभ्यर्चयेद्धृदा ॥ ४६
सूत्रं शिवेन साङ्गेन कृत्वा संपातशोधितम् । निदध्यात्कलशस्याधो रक्षां विज्ञापयेदिति ॥ ४७
शिष्यं पुष्पं करे दत्त्वा संपूज्य[26] कलशादिकम् । प्रणमय्य बहिर्यायाद्यागमन्दिरमध्यतः ॥ ४८
मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननान् । भुक्तये पूर्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ॥ ४९
प्रथमे पञ्चगव्यस्य प्राशयेच्चुलुकत्रयम्[27] । पाणिना कुशयुक्तेन अर्चितानन्तरान्तरम् ॥ ५०
चरुं ततस्तृतीये तु ग्रासत्रितयसंमितम् । अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् ॥ ५१
पालाशपुटके मुक्तौ भुक्तौ पिप्पलपत्रके । हृदा संभोजनं दत्त्वा पूतैराचामयेज्जलैः ॥ ५२

---

१ क. ड. च. °नि पदा° । २ क. ड. च. षडन्तान्सस्वरं । ३ च. °यं करणं हरिम् । ४ क. ङ. °करद्व° । ख. °कखद्व° । ५ घ. °म् । अत्रमादाय द° । ६ क. ड. च. °त् । केवलाना । ७ ख. °ग्रं पादा° । ८ ङ. °नामेकविं° । ९ ङ. °योरन्तरयो° । १० क. ड. च. °न्तस्थमगुरा° । ११ क. ड. च. आदायैतत्रिभा° । १२ क. ङ. च. °रपाशतः । १३ क. ङ. च. °कधर्मार्थ । १४ ख. °र्थं प्रतिर्धाजं प्र° । १५ क. ङ. च. °न्यरोचकं मृक्षं क° । १६ ख. ह्रां । १७ क. ङ. च. ह्रां हूं ह्रौं शा° । १८ ख. ह्रौं । १९ ख. हः । २० क. ङ. च. °सिरोधा° । २१ घ. ङ. °माज्येन । २२ ख. °त् । हूंफ° । २३ क. ड. च. °तिपेचनम् । उ° । २४ घ विस्तृता° । २५ क. ङ. च. °त्रं निधा° । २६ च. संपूर्य । २७ घ. °चुळुक° ।

दन्तकाष्ठं हृदा कृत्वा प्रक्षिपेच्छोभने शुभम् । न्यूनादिदोष[1]मोपाय मूलेनाष्टोत्तरं शतम् ॥ ५३
विधाय स्थण्डिलेशाय सर्वकर्मसमर्पणम् । पूजाविसर्जनं चास्य चण्डेशस्य च पूजनम् ॥ ५४
निर्माल्यमपनीयाथ शेषमग्नौ यजेच्चरोः । कलशं लोकपालांश्च पूजयित्वा विसृज्य च ॥ ५५
विसृजे[2]द्गणमग्निं च रक्षितं यदि बाह्यतः । बाह्यतो लोकपालानां दत्त्वा संक्षेपतो बलिम् ॥ ५६
भस्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् । गृहस्थान्दर्भशय्यायां पूर्वशीर्षान्सुरक्षितान् ॥ ५७
हृदा सन्द्रस्मशय्यायां यतीन्दक्षिणमस्तकान् । शिखाबद्धशिखानस्त्रसप्तमाणवकान्वितान् ॥ ५८
विज्ञाय[3] स्नापयेच्छिष्यांस्ततो यायात्पुनर्बहिः ॥ ५९
ॐ हिलि हिलि[4] शूलपाणये स्वाहा ॥ ६०
पञ्चगव्यं चरुं प्राश्य गृहीत्वा दन्तधावनम् । समाचम्य शिवं ध्यात्वा शय्या[5]मास्थाय पावनीम्
दीक्षा[6]गतं क्रियाकाण्डं संस्मरन्संविशेद्गुरुः । इति संक्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ६२

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायामधिवासनविधिकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५५५

---

अथ चतुरशीतितमोऽध्यायः ।

---

## निर्वाणदीक्षायां निवृत्तिकलाशोधनम् ।

ईश्वर उवाच—

अथ प्रातः समुत्थाय कृतस्नानादिको गुरुः । दध्यार्द्रमांसमद्यादेः प्रशस्ताऽभ्यवहारिता ॥ १
गजाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकम् । तैलाभ्यङ्गादिकं हीनं होमोऽघोरेण शान्तये ॥ २
नित्यकर्मद्वयं कृत्वा प्रविश्य मखमण्डपम् । स्वा[7]चान्तो नित्यवत्कर्म कुर्यान्नैमित्तिके विधौ ॥ ३
ततः संशोध्य चाऽऽत्मानं शि[8]वहस्तं तथाऽऽत्मनि । विन्यस्य कुम्भगं प्रार्च्य इन्द्रादीनामनुक्रमात्
मण्डले स्थण्डिले वाऽपि प्रकुर्वीत शिवार्चनम् । तर्पणं पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणम् ॥ ५
दुःस्वप्नदोषमोषाय शस्त्रेणाष्टाधिकं शतम् । हुत्वा[9] हूंसंपुटेनैव विदध्यान्मन्त्रदीपनम् ॥ ६
अन्तर्बलिविधानं च मध्ये स्थण्डिलकुम्भयोः । कृत्वा शिष्यप्रवेशाय लब्धानुज्ञो बहिर्व्रजेत् ॥ ७
कुर्यात्समय[10]वत्तत्र मण्डलारोपणादिकम् । संपातहो[11]मं तन्नाडीरूपदर्भकरानुगम् ॥ ८
तत्संनिधानाय तिस्रो हुत्वा मूलाणुनाऽऽहुतीः । कुम्भस्थं शिवमभ्यर्च्य पाशसूत्र[12]मपाहरेत् ॥ ९
स्वदक्षिणोर्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च । तच्छिखायां निबध्नीयात्पादाङ्गुष्ठावलम्बितम् ॥
तं निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य चेतसा । ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ११
कपालोऽजश्च बुद्धश्च वज्रदेहः प्रमर्दनः । विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ॥ १२
[13]अग्नी रुद्रो हुताशी च पिङ्गलः खादको हरः । ज्वलनो दहनो[14] बभ्रुर्भस्मान्तकक्षपान्तकौ ॥ १३

---

१ क. ङ. च. °मोक्षाय । २ क. ङ. च. °जेत्क्षण° । ख. °जेद्गुण° । ३ क. ङ. च. °य श्रावये° । ख. °य स्थाप° । ४ घ. °लि त्रिशू° । ५ ख. °मादाय । ६ घ. °गताक्रि° । ७ क. ङ. च. स्वधान्तं । ८ ख. शिवं हंसं त° । ९ क. ङ. च. °त्वा हुंसं° । ख. °त्वा हरुंसं° । १० क. ङ. च. °यकं तत्र । ११ ख. °होमवन्ना° । १२ घ. °त्रमुपा° । १३ क. ख. ङ. च. अग्निरुद्रौ हु° । १४ ख. °नो वाऽपि भस्मा° ।

( निवृत्तिकलाशोधनम् )

या[1]म्यमृत्युहरो धाता विधाता कार्य[2]रञ्जकः । कालो धर्मोऽप्यधर्मश्च संयोक्[3]ता च वियोजकः १४
नैर्ऋतो मारणो हन्ता क्रूरदृष्टिर्भयानकः । ऊर्ध्वांशको विरूपाक्षो धूम्रलोहितदंष्ट्रवान् ॥ १५
बलश्चातिबलश्चैव पाशह[4]स्ती महाबलः । श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥ १६
वडवास्यश्च[5] भीमश्च दशैते वारुणाः स्मृताः । [6]दीर्घो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्ष[7]मान्तकः॥१७
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः । जटामुकुटधारी च नानारत्नधरस्तथा ॥ १८
निधीशो रूपवा[8]न्धन्यः सौ[9]म्यदेहः प्रसादकृत् । प्रकाशोऽप्यथ लक्ष्मीवान्कामरूपो दशोत्तरे॥१९
विद्याधरो ज्ञानधरः सर्वज्ञो वेदपारगः । मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ २०
सर्वविद्याविधाता च सुखदुःखहरो दश । अनन्तः पालको धी[10]रः पातालाधिपतिस्तथा ॥ २१
वृषो वृषध[11]रो वीर्यो ग्रसनः सर्वतोमुखः । लोहितश्चैव विज्ञेया दश रुद्राः फणिस्थिताः ॥ २२
शंभुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः । संवा[12]हश्च विवाहश्च[13] लाभो लिप्सुर्विचक्षणः ॥ २३
अत्ता कुहककालाग्निरुद्रो हाटक एव च । कूष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ २४
रुद्रश्चाष्टाविमे रुद्राः कटाहाभ्यन्तरे स्थिताः । एतेषामेव नामानि भुवनानामपि स्मरेत् ॥ २५
भवोद्भवः सर्वभूतः सर्वभूतसुखप्रदः । सर्वसांनिध्यकृद्ब्रह्मविष्णुरुद्रशरार्चि[14]तः ॥ २६
संस्तुत पूर्वस्थित, ॐ साक्षि[15]न्, ॐ रुद्रान्तक, ॐ पतङ्ग, ॐ शब्द, ॐ सूक्ष्म, ॐ शिव सर्व
सर्वद सर्वसांनिध्यकर ब्रह्मविष्णुरु[16]द्रकर, ॐ नमः शिवाय, ॐ नमो न[17]मः ॥ २७
अष्टाविंशति[18]पदानि व्योमव्यापिमनोगुह । सद्योहृ[19]दस्त्रनेत्राणि मन्त्रवर्णाष्टको मतः ॥ २८
बीजकारो मकारश्च नाड्याविडापिङ्गलाह्वये । प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये २९
गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चकं । पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरस्रकम् ॥ ३०
विस्तारो योजनानां तु कोटिरस्य शताहता । अत्रैवान्तर्गता ज्ञेया योनयोऽपि चतुर्दश ॥ ३१
प्रथमं[20] सोमदे[21]वानामश्वाद्या देवयोनयः । [22]मृगः पक्षी च पशवश्चतुर्था तु सरीसृपाः ॥ ३२
स्थावरं पञ्चमं सर्वं योनिः षष्ठी अमानुषी । पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ॥ ३३
सौम्यं [23]प्राजेश्वरं ब्राह्ममष्टमं परिकीर्तितम् । अष्टानां पार्थिवं तत्त्वमधिकारास्पदं मतम् ॥ ३४
लयस्तु प्रकृतौ बुद्धौ भोगो ब्रह्मा च कारणम् । ततो जाग्रदवस्थानैः समस्तैर्भुवनादिभिः ॥ ३५
निवृत्तिं गर्भितां ध्यात्वा स्वमन्त्रेण नियोज्य च ॥ ३६

ॐ हां [24]हॄं हां निवृत्तिकलापाशाय [25]हूं फट् , तत ॐ [26]हां हां निवृत्तिकलापाशाय स्वाहेत्यनेनाङ्कुशमुद्रया पूरकेणाऽऽकृष्य, ॐ [27]हॄं हरां हॄं निवृत्तिकलापाशाय [28]हॄं फडित्यनेन संहारमुद्रया [29]कुम्भकेनाधःस्थानादादाय, [30]ॐ ॐ हूरं हां निवृत्तिकलापाशाय नम इत्यनेनोद्ध-

१ क. ख. ङ. च. याम्यो मृ॰ । २ क. च. ॰र्यवश्चकः । ३ क. ङ. च. ॰क्ता विधिपोषकः । ४ क. ङ. च. ॰हस्तो म॰ । ५ च. ॰श्च भौम॰ । ६ घ. शीघ्रो । ७ क. ङ. च. क्षपान्तकः । घ. क्षयान्तकः । ८ ख. ॰वान्वन्द्यः सौ॰ । ९ घ. ॰न्धन्योऽसौ॰ । १० क. ङ. च. वीरः । ११ क. च. ॰रो धार्यो ग्रथनः । १२ घ. संहारश्च विहारश्च । १३ ख. ॰श्च नभोलि॰ । १४ क. ङ. च. ॰तः । अनर्चित, असं॰ । १५ क. ख. ङ. च. ॰न्, तुङ्ग २ पतङ्ग २ ज्ञान २ शब्द २ सूक्ष्म २ शिव २ सर्वदण्ड २ सर्वसां॰ । १६ क. ङ. च. ॰द्रपर, । १७ क. ङ. च. ॰मः, ॐ शिवाय, ॐ नमो नमः । अ॰ । १८ क. ख. ङ, च ॰तिपदा॰ । १९ क. ङ. च.॰ दन्ते ने॰ । २० घ. ॰मा सर्वदे॰ । २१ घ. ॰वानां मन्वाद्या । २२ ख. घ. मृगप॰ । २३ घ. प्राणेश्व॰ । २४ ख. हं । २५ ख. हॄं । च. हुं । २६ ख. हां नि॰ । च. हां हूं हां । २७ च. हूं हूं हूं नि॰ । २८ ख. हुं । २९ च. कुम्भेन नाभ्यवस्था॰ । ३० ख. ॐ हुं हां नि॰ । च. ॐ हां हूं नि॰ ।

वमुद्रया रेचकेन कुम्भे संस्थाप्य, ॐ हां निवृत्तिकलापाशाय नम इत्यनेनार्घ्यं दत्त्वा संपूज्य विमुखेनैव स्वाहान्तेनैव संनिधानायाऽऽहुतित्रयं संतर्पणाहुतित्रयं च दत्त्वा, ॐ हां ब्रह्मणे नम इति ब्रह्माणमावाह्य संपूज्य च स्वाहान्तेन संतर्प्य ॥ ३७

ब्रह्मंस्तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति ॥ ३८
आवाहयेत्ततो देवीं रक्षां वागीश्वरीं हृदा । इच्छाज्ञानक्रियारूपां षड्विधां ह्येककारणम् ॥[2] ३९
पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः । वागीश्वरीं विनिःशेषयोनिविक्षोभकारणम् ॥ ४०
हृत्संपुटार्थबीजादिहूंफडन्तशराणुना । ताडयेद्धृदये तस्य प्रविशे[4]त्स विधानवित् ॥ ४१
ततः शिष्यस्य चैतन्यं हृदि वह्निकणोपमम् । निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा ॥ ४२
ॐ [6]हां हूं हः, हूं फट् ॥ ४३
ॐ हां स्वाहेत्यनेनाथ पुरकेणाङ्कुशमुद्रया । तदाकृष्य स्वमन्त्रेण गृहीत्वाऽऽत्मनि योजयेत् ॥ ४४
ॐ हां हूं हामात्मने नमः ॥ ४५
पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् । ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदम् ॥ ४६
गर्भाधानार्थमादाय युगपत्सर्वयोनिषु । क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया ॥ ४७
ॐ हां हीं हामात्मने नमः ॥ ४८
पूजयेदप्यनेनैव तर्पयेदपि पञ्चधा । अन्ययोनिषु सर्वासु देहशुद्धिं हृदाऽऽचरेत् ॥ ४९
नात्र पुंसवनं स्त्र्यादिशरीरस्यापि संभवात् । सीमन्तोन्नयनं वाऽपि दैवान्यङ्गानि देहवत् ॥ ५०
शिरसा जन्म कुर्वीत युगपत्सर्वदेहिनाम् । तथैव भावयेदेषामधिकारं [10]शिवाणुना ॥ ५१
भोगं कवचमन्त्रेण शस्त्रेण विषयात्मना । मोहरूपमभेद्यं च लयसंज्ञं विभावयेत् ॥ ५२
शिवेन श्रोतसां शुद्धिं हृदा तत्त्वविशोधनम् । पञ्च पञ्चाऽऽहुतीर्दद्याद्गर्भाधानादिषु क्रमात् ५३
मायया मलकर्मादिपाशबन्धनिवृत्तये । निष्कृत्यैव हृदा पश्चाद्यजेत शतमाहुतीः ॥ ५४
[11]मलशक्तिनिरोधेन पाशानां च [12]वियोजनम् । स्वाहान्तायुधमन्त्रेण पञ्च पञ्चाऽऽहुतीर्यजेत् ॥ ५५
मायाद्यन्[13]तस्य पाशस्य सप्तवारास्त्रजप्तया । कर्तर्या छेदनं कुर्यात्कल्पशस्त्रेण तद्यथा ॥ ५६
ॐ हूं निवृत्तिकलापाशाय हूं फट् ॥ ५७
बन्धकत्वं च निर्वर्त्य हस्ताभ्यां च शराणुना । विसृज्य वर्तुलीकृत्य घृतपूर्णे स्रुवे धरेत्[14] ॥ ५८
दहेदनुकलास्त्रेण केवलास्त्रेण भस्मसात् । कुर्यात्पञ्चाऽऽहुतीर्दत्त्वा पा[15]शाङ्कुशनिवृत्तये ॥ ५९
ॐ [16]हः, अस्त्राय [17]हूं फट् ॥ ६०
प्रायश्चित्तं ततः कुर्यादस्त्राहुतिभिरष्टभिः । अथाऽऽवाह्य विधातारं पूजयेत्तर्पयेत्तथा ॥ ६१
ततः–ॐ हां शब्दस्पर्शशु[18]द्धब्रह्मन्गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्य समर्पयेत् ॥ ६२
दग्धनिःशेषपापस्य ब्रह्मन्नस्य पशोस्त्वया । बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति ॥ ६३

---

१ च. कुण्डे संप्राप्य, ॐ हूं नि° । २ क. ङ. च. °ड्विधार्थैककारणात् । पू° । ३ क. ङ. च. °श्वरं च निः° । ४ क. ङ. च °शेच्च वि° । ५ ख. हां हरूं हां हः, हरूं फ° । ६ क. ङ. च. हूं हां हः, । ७ क. ङ. च. °कृष्याऽऽत्मम° । ८ क. ङ. च. हं । ९ क. ङ. च. हं । १० क. ङ. च. शिखण्डिना । ११ क. ङ. च. मनःश° । १२ क. ङ. च. नियोजनम् । १३ क. ङ. च. °न्तस्थपा° । १४ क. ङ. च. चरेत् । १५ क. ङ. च. पाशशङ्कुनि° । १६ क. ङ. च. हूं । १७ क. ङ. च. हुं । १८ क. ख. ङ. च. °शुक्लब्र° ।

ततो विसृज्य धातारं नाड्या दक्षिणया शनैः । संहारमुद्रयाऽऽत्मानं कुम्भकेन निजाणुना ॥ ६४
राहुयुक्तैकदेशेन चन्द्रबिम्बेन संनिभम् । आदाय योजयेत्सूत्रे रेचकेनोद्भवाख्यया ॥ ६५
पूजयित्वाऽर्घ्यपात्रस्थतोयबिन्दुसुधोपमम् । आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत् ६६
विसृज्य पितरौ दद्याद्वौषडन्तांशिवाणुना । पूरणाय विधिः पूर्णा निवृत्तिरिति शोधिता ॥ ६७

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां निवृत्तिकलाशोधनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६२२

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

प्रतिष्ठाकलासंशोधनविधिः ।

ईश्वर उवाच—

तत्त्वयोरथ संधानं कुर्याच्छुद्धविशुद्धयोः । ह्रस्वदीर्घप्रयोगेण नादनादान्तसङ्गिना ॥ १
ॐ हां हूं हाम् ॥ २
अप्तेजो वायुराकाशं तन्मात्रेन्द्रियबुद्धयः । गुणत्रयमहंकारश्चतुर्विंशः पुमानिति ॥ ३
प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् । पञ्चविंशतिसंख्यानि खादियान्ताक्षराणि च॥ ४
पञ्चाशदधिका षष्टिर्भुवनैस्तुल्यसंज्ञिताः । तावन्त एव रुद्राश्च विज्ञेयास्तत्र तद्यथा ॥ ५
अमरेशः प्रभावश्च नैमिषः पुष्करोऽपि च । तथा पादिश्च दण्डिश्च भावभूतिरथाष्टमः ॥ ६
नकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः । अन्वीशोऽभ्रातिकेशश्च महाकालोऽथ मध्यमः ॥ ७
केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् । ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ८
विमलश्चाट्टहासश्च माहेन्द्रो भीम एव च । वस्त्रापदं रुद्रकोटिरवियुक्तो महाबलः ॥ ९
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च । अजेशश्चैव सर्वज्ञो भास्वरः सूदनान्तरः ॥ १०
सुबाहुर्बहुरूपी च विशालो जटिलस्तथा । रौद्रोऽथ पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः ॥ ११
विदुरश्चैव घोरश्च प्राजापत्यो हुताशनः । कामरूपी तथा कालः कर्णोऽप्यथ भयानकः ॥ १२
मतङ्गः पिङ्गलश्चैव हरो वैधातृसंज्ञकः । शङ्कुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशूलिना ॥
सहैतेन च पर्यन्ताः कथ्यन्तेऽथ पदान्यपि ॥ १३
व्यापिन्, ओमरूप, ॐ प्रमथ, ॐ तेजः, ॐ ज्योतिः, ॐ पुरुष, ओमग्ने, ॐ धूम, ओमभस्म [न], ॐ अनादि, ॐ नाना, ॐ धूधू, ॐ भूः, ॐ भुवः, ॐ स्वः, अनिधन विधनोद्भव

---

१ घ. °जात्मना । २ ख. °न्तशराणु° । ३ क. ङ. च. श्रावणाय । ४ क. ङ. च. तत्तयो° । ५ ख. ग. °न्तसंज्ञिना । ६ क. ख. ग. ङ. च. °वनास्तुल्य° । ७ क. ङ. च. °षः प्लक्षवोऽपि । ८ क. ङ. च. तथाऽऽपाढिश्च । ९ क. ङ. च. °तः । जलान्सौम्याति° । १० घ. °शोऽस्त्राति° । ११ ख. ग. गयां कुरुक्षेत्रं खलोना° । १२ क. ङ. च. °श्चाथ हेमश्च मा° । घ. °चाट्टहा° । १३ क. ख. ग. ङ. च. वस्त्राप° । १४ ख. च । ओजे° । १५ क. ङ. च. °रः । स्वराहुर्मत्तरू° । १६ घ. °हुर्मत्तरू° । १७ ख. विदूर° । १८ क. ङ. च. °कः । पतङ्गश्चैव बहवः श्री° । १९ घ. °न्द्रशेखरः । स° । २० क. ङ. च. °न्, २ अरूप २ प्रथम तेज (जो) ज्योतिः २ पुरुषः(प(?)) २ अनश्च २ अधूम २ अभस्म २ अनादि २ नाना २ वृत्त २ ॐ भूः ।

( प्रतिष्ठाकलासंशोधनाविधिः )

शिव शर्व परमात्मन्महेश्वर महादेव सद्भावेश्वर महातेजः, [1]भोगाधिपते मु[2]श्वे प्र[3]थम सर्व सर्वेति द्वात्रिंशत्पदानि ॥ १४

वी(बी)जभावे त्रयो मन्त्रा वामदेवः शिवः शि[4]खा । गान्धारी च सुषुम्ना च नाड्यौ द्वौ मारुतौ तथा ॥
समानोदाननामानौ रसना पायुरिन्द्रिये । रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः ॥ १६
मण्डलं वर्तुलं तच्च पुण्डरीकाङ्कितं [5]सितम् । स्वभावस्था प्रतिष्ठायां कारणं गरुडध्वजम् ॥ १७
प्रतिष्ठान्तर्गतं सर्वं संचिन्त्य भुवनादिकम् । सूत्रं [6]देहेऽथ मन्त्रेण प्रविश्यैनां वियोजयेत् ॥ १८

ॐ हां [7]खीं हां प्रतिष्ठाकलापाशाय, [8]ॐ फट् । स्वाहान्तेनानेनैव पूरकेणाङ्कुशमुद्रया समाकर्षेत् । ततः, ॐ [9]हां ह्रूं ह्रां ह्रूं प्रतिष्ठाकलापाशाय [10]हूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधो [11]नाभिसूत्रादादाय, ॐ हां [12]ह्रूं [13]हां हां प्रतिष्ठाकलापाशाय नम इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे समारोपयेत् । ॐ [14]हां ह्रीं प्रतिष्ठाकलापाशाय नम इत्यनेनो[15]र्चयित्वा संपूज्य स्वाहान्तेनाऽऽहुतीनां त्रयेण संनिधाय ततः—ॐ हां विष्णवे नम इति विष्णुमावाह्य संपूज्य संतर्प्य ॥ १९

विष्णो तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन विष्णुं विज्ञापयेदिति ॥
ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् । आवाह्याभ्यर्च्य संतर्प्य शिष्यं वक्षसि ताडयेत् ॥ २१
ॐ [16]हां हां हं फट् ॥ २२
प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः । शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ २३
ॐ हां [17]हं [18]हां ह्रूं फट् ॥ २४
स्वाहान्तेन हृदाऽऽकृष्य तेनैव पुटितात्मना । गृ[19]हीत्वा तं नमोन्तेन निजात्मनि नियोजयेत् ॥ २५
ॐ हां [20]हं होमात्मने नमः ॥ २६
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । वा[21]मया तदनेनैव [22]देवीगर्भे विनिक्षिपेत् ॥ २७
ॐ हां हं हामात्मने नमः ॥ २८
देहोत्पत्तौ हृदा ह्येवं शिरसा [23]जन्मना तथा । शिखया वाऽधिकाराय भोगाय कवचाणु[24]ना ॥ २९
तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानाय पूर्ववत् । शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं [25]जपेत् ॥ ३०
एवं पाशवियोगेऽपि ततः शस्त्रात्मजप्तया । छिन्द्यादस्त्रेण कर्तर्या कला बीजवता यथा ॥ ३१
ॐ [26]ह्रीं प्रतिष्ठाकलापाशाय [27]हः फट् ॥ ३२
विसृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत् । घृतपूर्णे [28]स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ ३३

---

१ ख. ग. घ. योगाधिपतये । २ ख. °श्व ॐ प्र° । ३ ख. °थम, ॐ स° । ४ ख. सखा । ५ क. ख. ग. ङ. च. शितम् । ६ घ. देहे स्वम° । ७ क. ङ. च. खां । ८ क. ङ. च. हुं । ९ क. ङ. च. हां हूं क्लीं हा हूं प्र° । ख. हां हुं ह्रूं प्र° । १० क. ङ. च. हुं । ११ घ. नाडीसू° । १२ क. ङ. च. हूं । १३ क. ख. ग. घ. ङ. च. हां प्र° । १४ क. ख. ग. ङ. च. ह्रां । १५ क. ख. ग. ङ. च. °नार्धयि° । १६ क. ङ. च. हां हं हां हः फ° । १७ क. ङ. च. हं हां हं फ° । १८ ख. हां । १९ ख. °हीत्वाऽन्तर्नमो° । २० क. ङ. च. हं हामा° । २१ क. ङ. °मपादतलेनै° । २२ ख. देवो ग° । २३ क. ख. ग. ङ. च. जन्मने । २४ क. ङ. च. °ना । नवशु° । ख. ग. °ना । बलशु° । २५ क. ङ. च. यजेत् । २६ क. ङ. च. क्लीं । २७ ङ. च. हः । वि° । २८ क. घ. ङ. च. श्रुवे ।

अस्त्रेण जुहुयात्पश्च पाशाङ्कुशनिवृत्तये[1] । प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः[2] ॥ ३४
ॐ हः, अस्त्राय[3] हूं[4] फट् ॥ ३५
हृदाऽऽवाह्य[5] हृषीकेशं कृत्वा पूजनतर्पणे । पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ ३६
ॐ हां रसशुल्कं गृहाण स्वाहा ॥ ३७
निःशेषदग्धपाशस्य पशोरस्य हरे त्वया । न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ ३८
ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च[6] । राहुमुक्तार्धदृश्येन चन्द्रबिम्बेन संनिभम् ३९
संहारमुद्रया स्वस्थं विधायोद्भवमुद्रया । सूत्रे संयोज्य विन्यस्य तोयबिन्दुं यथा पुरा ॥ ४०
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः । दद्यात्पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता॥ ४१

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां प्रतिष्ठाकलासंशोधनविधिकथनं नाम पञ्चाशीतितमोऽध्यायः ॥८५॥

आदितः श्लोकानां समष्ट्यङ्काः—२६६३

---

अथ षडशीतितमोऽध्यायः ।

---

विद्यासंशोधनविधिः ।

ईश्वर उवाच—

संधानमथ विद्यायाः प्राचीनकलया सह । कुर्वीत पूर्ववत्कृत्वा तत्त्वं[7] वर्णय तद्यथा ॥ १
ॐ ह्रीं क्षीमिति संधानम्[8] ॥ २
रागश्च[9] शुद्धविद्या च नियतिः कलया सह । कालो माया तथाऽविद्या तत्त्वानामिति सप्तकम् ३
रलवाः शषसा वर्णाः षड्विद्यायां प्रकीर्तिताः । पदानि प्रणवादीनि एकविंशतिसंख्यया ॥ ४
ॐ नमः शिवाय सर्वप्रभवे[10][11] शिवायेशानमूर्धाय तत्पुरुषवक्त्रायाघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तय ॐ नमो नमो गुह्यातिगुह्याय गोप्त्रेऽनिधनाय सर्वाधिपाय[12] ज्योतीरूपाय परमेश्वराय[13] भावेन, ॐ व्योम ॥ ५
ॐ रुद्राणां भुवनानां च स्वरूपमथ[14] कथ्यते । प्रथमो वामदेवः स्यात्ततः सर्वभवोद्भवः ॥ ६
वज्रदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः[15] । बटुः प्रशान्तनामा च परमाक्षरसंज्ञकः ॥ ७
शिवश्च सशिवो बभ्रुरक्षयः शंभुरेव च । अदृष्टरूपनामानौ तथाऽन्यो रूपवर्धनः ॥ ८
मनोन्मनो महावीर्यश्चित्राङ्गस्तदनन्तरम् । कल्याण इति विज्ञेयाः पञ्चविंशतिसंख्यया ॥ ९
मन्त्रौ[16] घोरामरौ बीजे नाड्यौ द्वे तत्र ते यथा[17] । पूर्वा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ १०
विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी । शब्दः स्पर्शश्च रूपं च त्रय एते गुणाः स्मृताः ॥ ११
अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणम् । विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम् ॥ १२

---

१ ख. ग. घ. °ह्कुरनि° । २ क. ङ. च. °तः । अ° । ३ क. ङ. च. °य फ° । ४ ख. हुं । ५ ख. ग. घ. च । बाहु° । ६ ख. ग. °यविद्धं य° । ७ क. ङ. च. तद्वद्वर्णोदितं यथा । ८ क. च. ॐ हां क्लीं हूं हां संधाने । रोग° । ङ. ॐ ह्रां ह्रीं ह्रूं ह्रां संधाने । रोग° । ९ ख. ग. °म् । योग° । १० क. ख. ङ. च. °गश्चाशु° । ११ घ. °वे हं शि° । १२ क. ङ. च. सर्वविद्याधि° । १३ क. ङ. च. °रायाचिन्तनाय । रुद्राय भु° । १४ ख. °मपि क° । १५ क. ङ. च. °प्रजाः । ब° । १६ ख. ग. घ. ङ. च. मन्त्रो । १७ ख. ग. तथा ।

ताडनं छेदनं तत्र प्रवेशं चापि योजनम् । आकृष्य ग्रहणं कुर्याद्द्वियया हृत्प्रदेशतः ॥ १३
आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् । वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः॥१४
कुर्वीत देहसंपत्तिं जन्माधिकारमेव च । भोगं लयं तथा स्रोतःशुद्धिस्तत्त्वविशोधनम् ॥ १५
निःशेषमलकर्मादिपाशबन्धनिवृत्तये । निष्कृत्यैव विधानेन यजेत शतमाहुतीः ॥ १६
अस्त्रेण पाशशैथिल्यं मलशक्तितिरोहतिम् । छेदनं मर्दनं तेषां वर्तुलीकरणं तथा ॥ १७
दाहं तदक्षराभावं प्रायश्चित्तमथोदितम् । रुद्राण्यावाहनं पूजा रूपगन्धसमर्पणम् ॥ १८
ॐ ह्रीं रूपगन्धौ शुल्कं रुद्र गृहाण स्वाहा ॥ १९
संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् । विधायाऽऽत्मनि चैतन्यं पाशसूत्रे निवेशयेत्२०
बिन्दुं शिरसि विन्यस्य विसृजेत्पितरौ ततः । दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ॥ २१
पूर्वोक्तविधिना कार्यं विद्यायां ताडनादिकम् । स्वबीजं तु विशेषः स्यादिति विद्या विशोधिता

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षायां विद्याशोधनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६८५

---

अथ सप्ताशीतितमोऽध्यायः ।

---

## शान्तिशोधनम् ।

ईश्वर उवाच—

संदध्यादधुना विद्यां शान्त्या सार्धं यथाविधि । शान्तौ तन्तुद्वयं लीनं भावेश्वरसदाशिवौ ॥ १
हकारश्च क्षकारश्च द्वौ वर्णौ परिकीर्तितौ । रुद्राः समाननामानो भुवनैः सह तद्यथा ॥ २
प्रभवः समयः क्षुद्रो विमलः शिव इत्यपि । घनौ निरञ्जनाकारौ स्वशुरौ दीप्तकारणौ ॥ ३
त्रिदशेश्वरनामा च त्रिदशः कालसंज्ञकः । सूक्ष्माम्बुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४
व्योमव्यापिने व्योमव्याप्यरूपाय सर्वव्यापिने शिवायानन्तायानाथायानाश्रिताय ध्रुवाय
शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति द्वादश पदानि ॥ ५
पुरुषः कवचो मन्त्रौ बीजे विन्दूपकारकौ । अलम्बुषायसानाड्यौ वायू कृकरकूर्मकौ ॥ ६
इन्द्रिये त्वक्करावस्याः स्पर्शस्तु विषयो मतः । गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ॥ ७
तुर्यावस्थितिशान्तिस्थं संभाव्य भुवनादिकम् । विदध्यात्ताडनं भेदं प्रवेशं च वियोजनम् ॥ ८
आकृष्य ग्रहणं कुर्याच्छान्तेर्वदनसूत्रतः । आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् ॥ ९
ईशं तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन कुर्याद्विज्ञापनामिति ॥ १०
आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् । विधायाऽऽदाय चैतन्यं विधिनाऽऽत्मनि योजयेत्

---

१ क. ङ. च. 'द्विक्षेपाद्धृत्प्रवेश' । २ क. ङ च. कलाकु' । ख. ग. कल्पकु' । ३ घ. 'रोहिताम् । ४ क. ङ. च. 'दक्षनाभा' । ५ क. ङ. च. ह्रां । ६ क. ख. ग. ङ. च. विशेषं । ७ क. ङ. च तत्त्वत्रयं नीलं भा' । ८ ख. ग. नीलं । ९ ख. ग. धनौ । १० क. ङ. च. 'ताः । व्या' । ११ क. 'वायानाथा' । ङ. 'वायानाश्रि' । च. 'वाय स्वनाथा' । १२ क. ङ. च. क्रूराय । १३ घ. कवचौ । १४ क. ङ. च. 'णौ चात्र नि' । १५ ख. ग. 'शान्त्यर्थे सं' । १६ क. ङ. च. नियोजयेत् । १७ क. ङ. च. संपूज्य । १८ क. ङ. च. ईशे ।

पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । हृत्संपुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ १२
देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे । शिखयाँ वाऽधिकाराय भोगाय कवचाणुना ॥ १३
लयाय शस्त्रमन्त्रेण स्रोतःशुद्धौ शिवेन च । तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानादि पूर्ववत् ॥ १४
वर्मणा पाशशैथिल्यं निष्कृत्यैवं शतं यजेत् । मलशक्तितिरोधाने शस्त्रेणाऽऽहुतिपञ्चकम् ॥ १५
एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया । छिन्द्यादस्त्रेण कर्तर्या पाशान्बीजवता यथा ॥ १६
ॐ ह्रौं शान्तिकलापाशाय हः, हूं फट् ॥ १७
विसृज्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १८
अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधाय दद्यादष्टाऽऽहुतीरथ ॥ १९
ॐ हः, अस्त्राय हूं फट् ॥ २०
हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे । विदधीत विधानेन तस्मै शुल्कसमर्पणम् ॥ २१
ॐ हामीश्वर बुद्ध्यहंकारौ शुल्कं गृहाण स्वाहा ॥ २२
निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया । न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ २३
विसृजेदीश्वरं देवं रौद्रात्मानं नियोजयेत् । ईशश्चन्द्रमिवाऽऽत्मानं विधिनाऽऽत्मनि योजयेत् २४
सूत्रे संयोजयेदेनं शुद्ध्योद्भवमुद्रया । दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥ २५
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः । दद्यात्पूर्णां विधानज्ञो निःशेषविधिपूरणीम् ॥ २६
अस्यामपि विधातव्यं पूर्ववत्ताडनादिकम् । स्वबीजं तु विशेषः स्याच्छुद्धिः शान्तेरपीडिता २७

इत्याग्नेये महापुराणे निर्वाणदीक्षायां शान्तिशोधनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७१२

---

अथाष्टाशीतितमोऽध्यायः ।

---

निर्वाणदीक्षाशेषविधिः ।

ईश्वर उवाच—

संधानं शान्त्यतीतायाः शान्त्या सार्धं विशुद्धया । कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १
ॐ ह्रीं क्ष्मौं ह्रौं हामिति संधानानि ॥ २
उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकसिद्धिकम् । दीपकं रोचिकं चैव मोचकं चोर्ध्वगामि च ॥ ३
व्योमरूपमनाथं च स्यादनाश्रितमष्टकम् । ॐकारपदमीशाने मन्त्रो वर्णाश्च षोडश ॥ ४
अकारादिविसर्गान्ता बीजेन देहकारकौ । कुहूश्च शङ्खिनी नाड्यौ देवदत्तधनंजयौ ॥ ५
+मारुतौ स्पर्शनं श्रोत्रमिन्द्रिये विषयो नभः । शब्दो गुणोऽस्यावस्था तु तुर्यातीता तु पञ्चमी ॥

---

+ इदमुत्तरं चार्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. °या चाधि° । २ घ. जपेत् । ३ क. ङ. च हूं । ४ क. ङ. च. हाः । ५ ख. °मन्त्रेण । ६ ख. हूं । ७ क. ङ. च. °तपिण्डक° । ८ क. च. °वर्णोदितं य° । ९ क. ङ. च. हां । ख. ह्रीं । १० क. ङ. च. °कमिश्रितम् । ११ क. च. रौचकं । १२ क. ङ. च. °शानं म° । १३ क. ख. ङ. च. नाथौ ।

( निर्वाणदीक्षाशेषविधिः )

हेतुः सदाशिवो देव इति तत्त्वादिसंचयम् । संचिन्त्य शान्त्यतीताख्यं[1] विदध्यात्ताडनादिकम् ॥
कलापाशं समाताड्य फडन्तेन विभिद्य च । प्रविश्यान्तर्नमोन्तेन फडन्तेन[2] वियोजयेत् ॥ ८
शिखाहृत्संपुटीभूतं स्वाहान्तं सृणिमुद्रया[3] । पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥ ९
कुम्भकेन समादाय रेचकेनोद्भवाख्यया[4] । हृत्संपुटनमोन्तेन[5] वह्निं[6] कुण्डे निवेशयेत् ॥ १०
अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत् । सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ ११
सदाऽऽख्यातेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति
पित्रोरावाहनं पूजां कृत्वा तर्पणसंनिधी । हृत्संपुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ १३
ॐ हां हूं हां फट् ॥ १४
प्रविश्य चाप्यनेनैव चैतन्यं विभजेत्ततः । शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १५
ॐ हां[10] हः, हूं फट् ॥ १६
स्वाहान्तेन तदाकृष्य तेनैव पुटितात्मना । गृहीत्वा तं नमोन्तेन निजात्मनि नियोजयेत् ॥ १७
ॐ हां[11] हं हीमात्मने नमः ॥ १८
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया । वामया तदनेनैव देव्या गर्भे नियोजयेत् ॥ १९
गर्भाधानादिकं सर्वं पूर्वोक्तविधिना[12]ऽऽचरेत् । मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ २०
मलशक्तितिरोधाने पाशानां च वियोजने । पञ्च पञ्चाऽऽहुतीर्दद्यादायुधेन यथा पुरा ॥ २१
पाशानायुधमन्त्रेण सप्तवाराभिजप्तया । छिन्द्यादस्त्रेण कर्तर्या कलाबीजयुजा यथा ॥ २२
ॐ हां शान्त्यतीतकलापाशाय हः, हूं[13] फट् ॥ २३
विसृज्य वर्तुलीकृत्य पाशानस्त्रेण पूर्ववत् । घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ २४
अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये । प्रायश्चित्तनिषेधार्थं दद्यादष्टाऽऽहुतीस्ततः ॥ २५
सदाशिवं हृदाऽऽवाह्य कृत्वा पूजनतर्पणे । पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ २६
ॐ हां सदाशिवं मनोबिन्दुं शुल्कं गृहाण स्वाहा ॥ २७
निःशेषदग्धपाशस्य पशोरस्य सदाशिव । बन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति ॥ २८
मूलेन जुहुयात्पूर्णां विसृजेत्तु सदाशिवम् । ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम् ॥ २९
संहारमुद्रया रौद्र्या संयोज्य गुरुरात्मनि[15] । कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥ ३०
दद्यादाप्यायनायास्य मस्तके[16]ऽर्घ्याम्बुबिन्दुकम् । क्षमयित्वा महाभक्त्या पितरौ विसृजेत्तथा ॥
खेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् । कारुण्यान्मोक्ष(च)यित्वा तद्व्रज त्वं स्थानमात्मनः
शिखामन्त्रितकर्तर्या बोधशक्तिस्वरूपिणीम् । शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलाम्[17]
ॐ क्लीं[18] शिखायै हूं[19] फट्, ओमस्त्राय हूं[20] फट् ॥ ३४

---

१ क. ङ. च. °तायां वि° । २ क. ङ. च. °न नियो° । ३ क. ङ. च. प्राणमुद्रया । ख. ग. शूलमुद्रया । ४ क. ङ. च. °केनान्तराख्य° । ५ ख. ग. °पुटं न° । ६ क. ख. ग. ङ. च. वह्निकु° । ७ ख. ॐ ह्रां ह्रूं ह्रां फ° । ८ घ. हं । ९ क. ङ. च. हां हूं । १० ख. ग. ह्रूं । ११ क. ङ. च. हं हामा° । १२ क. ङ. च. °धिमाच° । १३ क. ङ. च. हुं । ख. ह्रूं । १४ क. च. °व नमो वि° । १५ क. ङ. च. °त्मवान् । कु° । १६ ख. ग. °स्तके ह्यम्बु° । १७ क. ख. ग. ङ. च. °ङ्गुलम् । १८ क. ङ. च. ह्रूं । ख. ग. हूं । १९ ख. ग. ह्रूं । २० ख. ग. ह्रूं ।

स्रुचि तां घृतपूर्णायां गोवि[1]ड्गोलकमध्यगाम् । संविधायास्त्रमन्त्रेण[2] हूंफडन्तेन होमयेत् ॥ ३५
ॐ हौं हैः[3], अस्त्राय[4] हूं फट् ॥ ३६
प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याऽऽचम्य च स्वयम् । योज[5]निकास्थमात्मानं शस्त्रमन्त्रेण ताडयेत्
वियोज्याऽऽकृष्य सं[6]पूज्य पूर्ववद्द्वादशान्ततः । आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत् ॥ ३८
पूरितं[7] स्रुवमाज्येन विहिताधोमुख[8]स्रुचा । नित्योक्तविधिनाऽऽदाय शङ्खसंनिभमुद्रया ॥ ३९
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः । समदृष्टिः[9] स्थिरश्शान्तः परभावसमन्वितः ॥ ४०
कुम्भमण्डलवह्निभ्यः शिष्यादपि निजात्मनः । गृहीत्वा[10] षड्विधाध्वानं श्रु(स्रु)गग्रे प्राणनाडिकम्[11]
संचिन्त्य[12] बिन्दुवद्ध्यात्वा क्रमशः सप्तधा यथा । प्रथमं प्राणसंयोग[13]स्वरूपमपरं ततः ॥ ४२
हृदयादिक्रमोच्चारविसृष्टं मन्त्र[14]संज्ञकम्* । सुषुम्नानुगतं[15] नादस्वरूपं तु तृतीयकम् ॥ ४३
सप्तमे कारणत्यागात्[16]प्रशान्तविस्वरं लयः । शक्तिनादोर्ध्वसंचारस्तच्छक्ति[17] विस्वरं मतम् ॥ ४४
प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम् । तत्कालविस्वरं[18] षष्ठं शक्त्यतीतं[19] च सप्तकम् ॥ ४५
तदेतद्योजनस्थानं[20] विस्वरं[21] तत्त्वसंज्ञकम् । पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ ४६
शनैरुदीरयन्मूलं कृत्वा शिष्यात्मनो[22] लयम् । हकारे तडिदाकारे षडध्वप्राणरूपिणि ॥ ४७
उकारं परतो नाभेर्वितस्तिं व्याप्य संस्थितम् । ततः परमकारस्तु हृदयाच्चतुरङ्गुलम् ॥ ४८
ॐकार[23]वाचकं[24] विष्णोस्ततोऽष्टाङ्गुलकण्ठकम्[25] । चतुरङ्गुलतालस्थं मकारं रुद्रवाचकम् ॥ ४९
तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् । नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानकम् ॥ ५०
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् । दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च ॥ ५१
द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे । भावशून्ये मनोतीते शिवे नित्यगुणोदये ॥ ५२
विलीयमानमेतस्मिञ्छिष्यात्मानं[26] विभावयेत् । विमुञ्चन्सर्पिषो धारां ज्वालान्तेऽपि परे शिवे ५३
योजनिका[27]स्थिरत्वाय वौषडन्तशिवाणुना । दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत् ॥ ५४
ॐ हामात्मने सर्वज्ञो भव स्वाहा । ॐ हामात्मने परितृप्तो भव स्वाहा[28] । ॐ हूमात्मनेऽनादि-
बोधो भव स्वाहा । ॐ हौमात्मने स्वतन्त्रो भव स्वाहा । ॐ हौमात्मन्नलुप्तशक्तिर्भव स्वाहा ।
ॐ हः, आत्मनेऽनन्तशक्तिर्भव स्वाहा ॥ ५५
इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् । विधिना भावनोपेतः शिष्यदेहे[29] नियोजयेत् ॥ ५६
तीव्राणुशक्तिसंपातजनितश्रमशान्तये । शिष्यमूर्धनि विन्यस्ये[30]द्दर्भादमृतबिन्दुकम्[31] ॥ ५७

* एतदग्रे—" पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् । " इत्यर्धमाधिक घ. पुस्तके ।

१ ख. ग. °विन्दोऽल° । २ ख. °ण हूंफ° । ३ क. ङ. च. हं । ४ ख. °य फ° । ५ क. ङ. च. °जनीकाक्षमा° । ६ क. ङ. च. संगृह्य । ७ क. ङ. च. °तं श्रुव° । ८ क. घ. ङ. च. °खश्रुचा । ९ ख. ग. घ. °दृष्टिशिवश्शा° । १० क. ङ. च. °त्वा स द्विधाऽऽत्मानं युगाग्रे । ११ क. ङ. च. °डिगम् । १२ क. ङ. च. °न्त्य विश्रवं ध्यात्वा । १३ ख. ङ. च. °योगं स्व° । १४ क. ङ. च. °न्त्ररूपक° । १५ ख. नादं स्व° । १६ क. ख. ग. ङ. च. °विषुवं ल° । १७ क. ख. ग. ङ. च. विषुवं । १८ क. ख. ग. ङ च. °विषुवं ष° । १९ क. ङ. च. °तं तु संयुतम् । २० घ. °जनास्था° । २१ क. ख. ग. ङ. च. विषुवं । २२ क. ख. ग. ङ. च. °त्मना ल° । २३ ख. घ. °कारं वा° । २४ ख. °चको वि° । २५ घ. °कण्ठक° । २६ ख. ग. घ. °नसे त° । २७ क. ङ. च. °जनीयास्थि° । २८ ख. °हा । ओमा° । २९ क. ङ. च. शिवदे° । ३० क. ङ. च. °न्यस्य दद्यादमृ° । ३१ ख. ग. °दर्भाद° ।

प्रणमय्येशकुम्भादीञ्शिवाद्दक्षिणमण्डले । सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिणमात्मनः ॥ ५८
त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् । देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्धय ॥ ५९
इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् । श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात् ६०
ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् । पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ ६१

इत्यादिमहापुराण आग्नेये निर्वाणदीक्षाकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७३

---

अथैकोननवतितमोऽध्यायः ।

---

## एकतत्त्वदीक्षाविधिः ।

ईश्वर उवाच—

अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते । सूत्रबन्धादि कुर्वीत यथायोगं निजांणुना ॥ १
कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् । समतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २
आवाह्य शिवतत्त्वादि[3] गर्भाधानादि पूर्ववत् । मूलेन किं तु कुर्वीत सर्वशुल्कसमर्पणम् ॥ ३
प्रदद्यीत ततः पूर्णां तत्त्वव्रातोपगर्भिताम् । एकयैव यया शिष्यो निर्वाणमधिगच्छति ॥ ४
योजनायै शिवे चान्यां स्थिरत्वापादनाय च । दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥ ५

इत्यादिमहापुराण आग्नेय एकतत्त्वदीक्षाविधिकथनं नामैकोननवतितमोऽध्यायः ॥८९॥

आदितः श्लोकानां समष्ट्यङ्काः—२७७८

---

अथ नवतितमोऽध्यायः ।

---

## अभिषेकादिविधिकथनम् ।

ईश्वर उवाच—

शिवमभ्यर्च्याभिषेकं कुर्याच्छिष्यादिके श्रिये । कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥
तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् । इक्षुकादम्बरीस्वादुमस्तूदानष्ट सागरान् ॥ २
निवेशयेद्यथासंख्यमष्टौ विद्येश्वरान्[4]थ । एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ३
त्रिमूर्तिमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् । सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४
मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् । यागालयान्दिग्गीशस्य रचिते स्नानमण्डपे ॥ ५
कुर्यात्करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् । श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ॥ ६
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् । काञ्जिकौदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७
सिद्धार्थदधितोयैश्च कुर्यान्निर्मन्थनं ततः[10] । क्षारोदानुक्रमेणाथ हृदा विद्येशशम्बरैः[11] ॥ ८
कलशैः स्नापयेच्छिष्यं सुधाधारणयाऽन्वितम् । परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९

---

१ क. ङ. च. 'किं नाथास्य । २ घ. 'जात्मना । ३ ख. 'त्त्वानि ग' । ४ क. ख. ग. ङ. च. विश्वेश्व' । ५ ख. ग. घ. 'मूर्तमे' । ६ ख. ग. 'मं शूकना' । ७ ख. ग. 'याद्दिरीश' । ८ घ. ङ. 'मानसम् । ९ ख. ग. 'मेथनं । १० क. ङ. च. 'तः । क्षीरो' । ११ च. 'शसचरैः ।

पूर्वोदितासने शिष्यं पुनः पूर्ववदर्चयेत् । उष्णीषं योगपट्टं च [1]मुकुटं कर्तरीं [2]घेटीम् ॥ १०
अक्षमालां [3]पुस्तकादि शिबिकाद्यधिकारकम् । दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाऽद्यप्रभृति त्वया ॥
सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति । अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरम् ॥ १२
विघ्नज्वालापनोदार्थं कुर्याद्विज्ञा[4]र्पनां यथा । अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्तिना ॥ १३
संहितापारगः सोऽयमभिषिक्तो मया शिव । तृप्तये मन्त्रचक्रस्य पञ्च पञ्चाऽऽहुतीर्यजेत् ॥ १४
दद्यात्पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे । शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात्१५
[5]लाञ्छयेदुपबद्धाय दग्धदर्भाग्रशम्बरैः । कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ॥ १६
कुम्भेऽनले शिवे स्वस्मिंस्ततस्तत्कृत्यमाविशेत् । अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिताः
भूपवन्मानवादीनामभिषेकादभीप्सितम् । *[6]ॐ श्रां श्रौं पशुं हूं फडित्यस्त्रराजाभिषेकतः ॥ १८

इत्याग्नेये महापुराणेऽभिषेकादिविधिकथनं नाम नवतितमोऽध्यायः ॥ ९० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७९६

---

अथैकनवतितमोऽध्यायः ।

---

अभिषिक्तेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिः ।

ईश्वर उवाच—

अभिषिक्तः शिवं विष्णुं पूजयेद्भास्करादिकान् । शङ्खभेर्यादिनिर्घोषैः स्नापयेत्पञ्चगव्यकैः ॥ १
+यो देवान्देवलोकं स याति स्वं कुलमुद्धरन् । वर्षकोटिसहस्रेषु यत्पापं सम[7]मुपार्जितम् ॥ २
घृताभ्यङ्गेन देवानां भस्मी भवति पावके । आढकेन घृताद्यैश्च देवान्स्नाप्य सुरो भवेत् ॥ ३
चन्दनेनानुलिप्याथ गन्धाद्यैः पू[8]जयेत्तथा । अल्पायासेन स्तुतिभिः स्तुता देवास्तु सर्वदा ॥ ४
अतीतानागतज्ञानमन्त्रधीभुक्तिमुक्तिदाः । गृहीत्वा प्रश्नसूक्ष्मार्णे हृते द्वाभ्यां शुभाशुभम् ॥ ५
त्रिभिर्जीवो मूलधा[9]तुश्चतुर्भिर्ब्राह्मणादिधीः । पञ्चादौ भूततत्त्वादि शेषे चैवं जयादिकम् ॥ ६
एकत्रि[10]कांतित्रिकान्ते [11]पदे [12]द्विपमकान्तके । अशुभं मध्यमं [13]मध्येष्विन्द्रास्त्रिषु नृपः शुभः ॥ ७
संख्या[14]र्थेन्दे जीविता[15]ब्दं यमोऽब्ददशहा ध्रुवम् । सूर्यभास्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत्कजे ॥ ८
कठिन्या जप्तया [16]स्पृष्टे गो[17]मूत्राकृतिरेखया । आरभ्यैकं त्रिकं यावत्त्रिचतुष्कावसानकम् ॥ ९
[18]मरुव्योममरुद्बीजैश्चतुःषष्टिपदे तथा । अक्षा[19]णां पातनात्स्पर्शाद्विषमादौ शुभादिकम् ॥ १०
एकत्रिकादिमारभ्य अन्ते चाष्टत्रिकं [20]तथा । ध्वजाद्या याः समा हीना विषमाः शोभना[21]दिदाः॥

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. मुकुरं । २ ख. पटीम् । ३ ख. ङ. पुष्पका° । ४ ख. °पनं तथा । ५ ग. ङ. च. °येदूषरत्वाय दम्रगर्भाङ्गसंचरैः । ६ ख. ॐ श्रां पशून्हुं फ° । ७ ख. °मुपस्थित° । ८ क. ख. ग ङ. च. °जयंस्तथा । ९ क. ङ. च. °तुर्बहृक्तेर्ब्रा° । १० ख. °कात्रित्रि° । ११ क. ङ. च. °दे द्वयम° । १२ ख. °पदका° । १३ क. ङ. च. °ध्ये स्वकेन्द्रास्त्रिनृ° । ख. °ध्ये स्वे केन्द्रास्त्रिनृ° । १४ ख. °वृत्ते र्जा° । १५ ख. °ब्दं मयोऽब्द° । १६ क. ङ. च. स्पृष्टो गो° । १७ क. ख. ग. ङ. च. °मूत्र्याकृ° । १८ क. ङ. ञ. °रुत्वोरामरुद्बेगैश्च° । १९ घ. °णां पत° । २० ख. त्रिधा । २१ क. ङ. च. °दिकाः । आ° ।

[1]ॐईपल्लवितैः काद्यैः षोडशस्वरपूर्वगैः । आद्यैस्तैः [2]संस्वरैः काद्यैस्त्रिपुरानाममन्त्र[3]का[4]ः ॥ १२
ह्रींबीजाः प्रणवाद्याः स्युर्नमोन्ता यत्र पूजने । मन्त्रा विंशतिसाहस्राः शतं [5]षष्ट्यधिकं ततः ॥ १३
[6]ॐह्रींमन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च । तथा गौर्याश्च दुर्गाया [7]ॐश्रींमन्त्राः श्रियस्त[8]था
तथा [9]क्षौंमन्त्राः सूर्यस्य[10] ॐहौंमन्त्राः शिवस्य च । [11]ॐगंमन्त्रा गणेशस्य[12] ॐमन्त्राश्च तथा हरेः ॥१५
शताद्धैकाधिकैः काद्यै[13]स्तथा षोडशभिः स्वरैः । काद्यैस्तैः सस्वरैराद्यैः कान्तैर्मन्त्रास्तथाऽखिलाः
रवीशदेवीविष्णूनां खाब्धीदेवेन्द्रवर्तनात् । [14]शतत्रयं षष्ट्यधिकं प्रत्येकं मण्डलं क्रमात् ॥ १७
अभिषिक्तो जपेद्ध्यायेच्छिष्यादीन्दीक्षयेद्गुरुः ॥ १८

इत्यादिमहापुराणे आग्नेयेऽभिषिक्तेन कर्तव्यस्य तत्तद्देवतापूजनस्य विधिकथनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८१४

---

अथ द्विनवतितमोऽध्यायः ।

---

## संक्षेपेण प्रतिष्ठाविधिः ।

ईश्वर उवाच—

प्रतिष्ठां संप्रवक्ष्यामि क्रमात्संक्षेपतो गुह । पीठं शक्तिः शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥१
प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते । यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः ॥ २
स्थापनं तु यथायोगं पीठ एव निवेशनम् । प्रतिष्ठा भिन्नपीठस्य स्थितस्थापनमुच्यते ॥ ३
उत्थापनं च सा प्रोक्ता लिङ्गोद्धारपुरःसरा । यस्यां [15]तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः॥४
आस्थापनं तदुद्दिष्टं द्विधा विष्ण्वादिकस्य च । आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५
यदाधारादिभेदेन प्रासादेष्वपि पञ्चधा । परीक्षामथ मेदिन्याः कुर्यात्प्रासादकाम्यया ॥ ६
[16]शु[17]क्लाऽऽज्यगन्धा रक्ता च रक्तगन्धा सुगन्धिनी । पीता कृष्णा सुरागन्धा विप्रादीनां मही क्रमात्
पूर्वेशोत्तरसर्वत्र [18]पूर्वा चैषां विशिष्यते । [19]आखाते हास्तिके यस्याः [20]पूर्णे मृदधिका भवेत् ॥ ८
उत्तमां तां महीं विद्यात्तोयाद्यैर्वा समुक्षिताम् । [21]अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधये[22]द्गुरुः ॥ ९
नगरग्रामदुर्गार्थं गृहप्रासादकारणम् । खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ १०
मण्डपे द्वारपूजादिम[23]न्त्रतृप्त्यवसानकम् । कर्म निर्व[24]र्त्याघोरास्त्रं सहस्रं विधिना यजेत् ॥ ११
समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशः । स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम् ॥ १२
मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत् । वास्तुमभ्यर्च्य तत्तोयैः सिञ्चेत्कुद्दालकादिकम् १३

---

१ क. आऐप° । ख. आहाप° । २ क. ङ. च. संवरैः । ख. सुस्वरैः । ३ क. ङ. च. °मन्त्रिकाः । ४ क. ङ. च. °काः । क्लींबी° । ५ ख. षष्ठ्याऽधि° । ६ क. च. अश्रीमन्ताः । ७ क. ख. ग. ङ. च. अश्रीमन्ताः । ८ क. ङ. च. °था । क्षौं° । ९ ख. ग. °था क्रौम° । घ. °था क्रौक्षौ° । १० क. च. °स्य आम्रौम° । ११ क. च. आगमन्ता । १२ क. ख. ग. ङ. च. °स्य आयान्ताश्च । १३ क. ख. ग. ङ. च. °धैराद्यैः षो° । १४ ख. शतद्वयं । १५ क. ङ. च. तु पीठमा° । १६ क. घ. ङ. च. शुल्काऽऽज्य° । १७ ख. ग. °क्लाऽऽयग° । १८ ख. ग. परा । १९ क. ङ. च. आख्याते । २० ख. पूर्वे । २१ क. च. अत्रागारा° । २२ ख. °येत्पुरा । न° । २३ च. °न्त्रदध्यव° । २४ क. ख. ग. ङ. च. °र्त्य घोरास्त्रस° । ख. ग. °र्त्य घो° ।

बाह्ये रक्षोगणानिष्ट्वा विधिना दिग्बलिं[1] क्षिपेत् । भूमिं संसिच्य संस्नाप्य[2] कुद्दालाद्यं प्रपूजयेत् ॥
अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे द्विजन्मनः । निधाय गीतवाद्यादिब्रह्मघोषसमाकुलम् ॥ १५
पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके । कुद्दालेनाभिषिक्तेन मध्वक्तेन[3] तु खानयेत् ॥ १६
नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् । पुरस्य पूर्वसीमान्तं नयेद्यावदभीप्सितम् ॥ १७
अथ तद्रक्षणं स्थित्वा भ्रामयेत्परितः[4] पुरम् । सिञ्चन्सीमान्तचिह्नानि यावदीशानगोचरम् ॥ १८
अर्घ्यदानमिदं[5] प्रोक्तं[6] तत्र कुम्भपरिभ्रमात् । इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥ १९
कर्करान्तं जलान्तं वा शल्यदोषजिघांसया[7] । खानयेच्छ्रुकुमार्यां चेद्विधिना शल्यमुद्धरेत् ॥ २०
(*अकचटतपयशहान्मानवश्चेत्प्रश्नाक्षराणि तु । अग्नेर्ध्वजादिपतिताः[8] स्वस्थाने शल्यमाख्यान्ति
कर्तुश्चाङ्गविकारेण जानीयात्तत्प्रमाणतः । ) पश्वादीनां प्रवेशेन कीर्तनैर्विरुतैर्दिशः ॥ २२
मातृकामष्टवर्गाढ्यां फलके भुवि वा लिखेत् । शल्यज्ञानं वर्गवशात्पूर्वादीशान्ततः क्रमात् ॥ २३
अवर्गे चैव लोहं तु कवर्गेऽङ्गारमग्नितः । चवर्गे भस्म दक्षे स्याट्टवर्गेऽस्थि[9] च नैर्ऋते ॥ २४
तवर्गे चेष्टका चाऽऽप्ये कपालं च पवर्गके । यवर्गे शवकीटादि शवर्गे लोहमादिशेत्[10] ॥ २५
हवर्गे रजतं तद्वद्वर्गांश्चानर्थकरानपि । प्रोक्ष्याश्मभिः[11] करापूरैरष्टाङ्गुलमृदन्तरैः ॥ २६
पादोनं खातमापूर्य सजलैर्मुद्गराहतैः । लिप्तां समप्लवां तत्र कारयित्वा भुवं गुरुः ॥ २७
सामान्यार्घ्यकरो[12] यायान्मण्डपं वक्ष्यमाणकम् । तोरणद्वाःपतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ॥ २८
कुर्यात्तत्राऽऽत्मशुद्ध्यादिकुण्डमण्डपसंस्कृतिम् । कलशं वर्धनीसक्तं लोकपालशिवार्चनम् ॥ २९
अग्नेर्ज्वलनपूजादि[13] सर्वं पूर्ववदाचरेत् । यजमानान्वितो यायाच्छिलानां[14] स्नानमण्डपम् ॥ ३०
शिलाः प्रासादलिङ्गस्य पादा[15] धर्मादिसंज्ञकाः । अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरस्राः करायताः ॥
पाषाणानां शिलाः कार्या इष्टकानां तदर्धतः । प्रासादेऽश्मशिलाः शैल इष्टका इष्टकामये ॥ ३२
अङ्किता नववक्त्राद्यैः पङ्कजाः पङ्कजान्विताः । नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी मता ॥
आसां पद्मो महापद्मः शङ्खोऽथ मकरस्तथा । समुद्रश्चेति पञ्चामी निधिकुम्भाः क्रमादधः ॥ ३४
नन्दा भद्रा जया पूर्णा अजिता चापराजिता । विजया मङ्गलाख्या[16] च धरणी नवमी शिला ३५
सुभद्रश्च विभद्रश्च सुनन्दः पुष्पनन्दकः[17] । जयोऽथ विजयश्चैव कुम्भः पूर्णस्तथोत्तरः[18] ॥ ३६
नवानां तु यथासंख्यं निधिकुम्भा अमी नव । आसनं प्रथमं[19] दत्त्वाऽऽताड्योल्लिख्य शराणुना ॥
सर्वासामविशेषेण तनुत्रेणावगुण्ठनम् । मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवारिणा ॥ ३८
अस्त्रेणं[20] हुंफडन्तेन मलस्नानं समाचरेत् । विधिना[21] पञ्चगव्येन स्नानं पञ्चामृतेन च ॥ ३९
गन्धतोयान्तरं कुर्यान्निजनामाङ्किताणुना । फलैरत्नसुवर्णानां[22] गोशृङ्गसलिलैस्ततः ॥ ४०

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

१ ख. ग. °ग्बलींक्षिपे° । २ क. ख. ग. ङ. च. संस्थाप्य । ३ क. ङ. च. सरक्तेन । ४ ख. ग. °मयन्परि° । ५ क. ख. ग. ङ. च. अर्धदा° । ६ क. ङ. च. °क्तं भद्रकु° । ७ क. ङ. च. जिह्वास° । ८ ख. ग. °दिपाति° । ९ क. ङ. च. °वर्गे स्थिरनै° । ख. ग. °वर्गे चरनै° । १० क. ङ. च. °त् । कवर्गे रजतं तद्वद्रक्षास्ताश्च करान° । ख. ग. °त् । कवर्गे रजतं तद्वदवर्गानर्थचारपि । ११ घ. प्रोक्ष्याऽऽत्मभिः । १२ क. ख. ग. ङ. च. °न्यार्घक° । १३ घ °ग्नेर्जनन° । १४ ख. ग. °नां स्थान° । १५ घ. पादध° । १६ क. च. मण्डलाक्षा । १७ क. ङ. च. °ष्पदन्तकः । १८ क. ङ. च. पूर्वस्त° । १९ क. ख. ग. ङ. च. प्रणवं । २० घ. °ण हूंफ° । २१ क. ङ. च. कुम्भानां । २२ क. ङ. च. °लवत्सुमु° ।

( संक्षेपेण प्रतिष्ठाविधिः )

चन्दनेन समालभ्य वस्त्रैराच्छादयेच्छि[1]लाम्[2] । स्वर्णोत्थमासनं दत्त्वा नीत्वा यो[3]गं प्रदक्षिणम् ॥
शय्यायां कुशतल्पे वा हृदयेन निवेशयेत् । संपूज्य न्यस्य बुद्ध्यादिधरान्तं तत्त्वसंचयम् ॥ ४२
त्रिखण्डव्यापकं तत्त्वत्रयं चानुक्रमान्न्यसेत् । बुद्ध्यादौ चित्तपर्यन्ते चि[4]न्तातन्मात्रकावधौ ॥ ४३
तन्मात्रादौ धरा[5]न्ते च शिवविद्यात्मनां स्थितिः । तत्त्वानि निजमन्त्रेण तत्त्वेशांश्च हृदाऽर्चयेत् ॥
स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमम् ॥ ४५
ॐ हूं[6] शिवतत्त्वाय नमः । ॐ हूं[7] शिवतत्त्वाधिपतये रुद्राय नमः । ॐ ह्रां[8] विद्यातत्त्वाय नमः । ॐ ह्रां विद्यातत्त्वाधिपाय विष्णवे नमः । ॐ ह्रामात्मतत्त्वाय नमः ॥ ॐ ह्रमात्मतत्त्वाधिपतये ब्रह्मणे नमः ॥ ४६
क्षमाग्नियजमानार्काञ्जलवातेन्दुखानि च । प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रति शिलां शिलाम् ॥ ४७
स(श)र्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् । महादेवं च भीमं च मूर्तीशांश्च यथाक्रमात् ॥ ४८
[9]ॐ धरामूर्तये नमः । [10]ॐ धराधिपतये नमः[11] ॥ ४९
इत्यादिमन्त्राँल्लोकपालान्यथासंख्यं निजाणुभिः । विन्यस्य पूजयेत्कुम्भांस्तन्मन्त्रैर्वा निजाणुभिः
इन्द्रादीनां तु बीजानि वक्ष्यमाणक्रमेण तु[12] ॥ ५०
लूं रूं शूं पूं वूं यूं मूं हूं क्षूमिति ॥ ५१
उक्तो नवशिलापक्षः शिला पञ्चपदा तथा[13] । प्रतितत्त्वं न्यसेन्मूर्तीः सृष्ट्या पञ्च धरादिकाः॥ ५२
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः । एते च पञ्च मूर्तीशा यष्टव्यास्तासु पूर्ववत् ॥ ५३
ॐ पृथ्वीमूर्तये नमः । ॐ पृथ्वीमूर्त्यधिपतये ब्रह्मणे नमः । इत्यादिमन्त्राः ॥ ५४
संपूज्य कलशान्पञ्च क्रमेण निजनामभिः । निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥ ५५
कुर्यात्प्राकारमन्त्रेण भूतिदर्भैस्तिलैस्ततः । कु[14]ण्डेषु धारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥ ५६
तत्त्वतत्त्वाधिपान्मूर्तिमूर्तीशांश्च घृतादिभिः । ततो ब्रह्मांशशुद्ध्यर्थं मूलाङ्गं ब्रह्मभिः क्रमात् ॥ ५७
कृत्वा शतादिपूर्णान्तं प्रो[15]क्ष्य शान्तिजलैः शिलाः । पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ५८
सांनिध्यमथ संधानं कृत्वा शुद्धं पुनर्न्यसेत् । एवं भागत्रये कर्म गत्वा गत्वा समाचरेत् ॥ ५९
ॐ, आम्, ईम्, आत्मतत्त्वविद्यातत्त्वाभ्यां नम इति ॥ ६०
संस्पृशेद्दर्भमूलाद्यैर्ब्रह्माङ्गादित्रयं क्रमात् । कुर्यात्तत्त्वानुसंधानं ह्रस्वदीर्घप्रयोगतः ॥ ६१
ॐ हा[16]म्, ॐ विद्यातत्त्वशिवतत्त्वाभ्यां नमः ॥ ६२
घृतेन मधुना पूर्णांस्ताम्रकुम्भान्सरत्नकान् । पञ्चगव्यार्घ्यसंसिक्ताँल्लोकपालाधिदैवतान् ॥ ६३
पूजयित्वा निजैर्मन्त्रैः संनिधौ होममाचरेत् । शिलानामथ सर्वासां संस्मरेदधिदेवताः ॥ ६४
विद्यारूपाः कृतस्नाना हेमवर्णाः शिलाम्बराः । न्यूनादिदो[17]षमो[18]षार्थं वास्तुभूमेश्च शुद्धये ॥
यजेदस्त्रे[19]ण मूर्धान्तमाहुतीनां शतं शतम् ॥ ६५

इत्यादिमहापुराण आग्नेये प्रतिष्ठाङ्गशिलान्यासविधिकथनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

**आदितः श्लोकानां समष्ट्यङ्काः—२८७९**

---

१ क. ङ. च. 'च्छिलाः । सद्वर्णनास' । २ ख. ग. 'म् । यदुत्थ' । ३ घ. यागं । ४ क. ङ. च. चित्तं तैर्मात्रका' । ५ क. ङ. वरान्ते । ६ ख. ग. हूरू । ७ ख. ग. हूरूं । ८ क. ङ. च. हूरीं । ख. हों । ९ क. ङ. च. ॐ वरा' । १० क. ङ. च. ॐ वरा' । ११ क. ङ. च. 'मः । लोकपालाननन्तान्तान्य' । १२ क. ङ. च. तु । ॐ सूं रूं यूं शूं हूं कुमि' । १३ क. ख. ग. ङ. च. तदा । १४ क. ङ. च. कुम्भेषु । ख. कुशेषु । १५ घ. प्रोक्ष्याः । १६ क. ङ. च. ई, । १७ क. ङ. च. 'षनाशार्थं । १८ ख. 'मोक्षार्थं । १९ क. ङ. च. 'ण शुद्ध्यर्थमाकृती' ।

अथ त्रिनवतितमोऽध्यायः ।

---

वास्तुपूजादिविधिः ।

ईश्वर उवाच—

ततः प्रासादमा[1]सूत्र्य वर्तयेद्वास्तुम[2]ण्डपम् । कुर्यात्कोष्ठचतुःषष्टिं क्षेत्रे वेदा[3]स्रके समे ॥ १
कोणेषु विन्य[4]सेद्वंशौ[5] र[6]ज्जवोऽष्टौ विकोणगाः । द्विपदाः षट्पदास्तास्तु वास्तुं तत्रार्चयेद्यथा ॥ २
आकुञ्चितक[7]रं वास्तुमुत्तानमसुराकृतिम् । स्मरेत्पूजासु कुड्यादिनि[8]वेशे त्वधराननम् ॥ ३
जानुनी कूर्परौ सक्थि दिशि वातहुताशयोः । पैत्र्यां पादपु[9]टौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः
अस्य देहे समारूढा देवताः पूजिताः शुभाः । अष्टौ कोणाधिपास्तत्र कोणार्धेष्वष्टसु स्थिताः ॥
षट्प[10]दास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् । मध्ये चतुष्पदो ब्रह्मा शेषास्तु [11]पदिकाः स्मृताः
समस्तनाडीसंयोगे महाम[12]र्मानुजं ह[13]लम् । त्रिशूलं स्वस्तिकं वज्रं महास्वस्तिकसंपुटौ ॥ ७
[14]त्रिकटं मणिबन्धं च सुविशुद्धं पदं तथा । इति द्वादश मर्माणि वास्तोर्भित्त्यादिषु त्यजेत् ॥ ८
साज्यमक्षतमीशाय पर्जन्यायाम्बुजोदकम् । ददीताथ जयन्ताय पताकां कुङ्कुमोज्ज्वलाम् ॥ ९
रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् । सत्याय घृतगोधूममाज्यभक्तं भृशाय च ॥ १०
विमांसमन्तरिक्षा[15]य शकुन्तेभ्यश्च पूर्ववत् । मधुक्षीराज्यसंपू[16]र्णां प्रदद्याद्वह्नये [17]श्रुं(स्रु)च[18]म् ॥ ११
लाजान्पू[19]र्णे सुवर्णाम्बु वितथाय निवेदयेत् । द[20]द्याद्गृहक्षते क्षौद्रं यमराजे पलौदनम् ॥ १२
गन्धं गन्धर्वनाथाय जिह्वां [21]भृङ्गाय पक्षिणः । मृगा[22]य यवपर्णानि याम्यामित्यष्ट देवताः ॥ १३
पित्रे तिलोदकं क्षीरं वृक्षजं दन्तधावनम् । दौवारिकाय देवाय प्रदद्याद्धेनुमुद्रया ॥ १४
सुग्रीवाय दिशे[23]त्[24]पूगान्पुष्पदन्ताय दर्भकम् । रक्तं प्रचेतसे पद्ममसुराय सुरासवम् ॥ १५
घृतं गुडौदनं शेषे रोगाय घृतमण्डकान् । लाजान्वा पश्चिमाशायां देवाष्टकमितीरितम् ॥ १६
मारुताय ध्वजं पीतं नागाय नागकेशरम् । *मु[25]ख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतम् ॥ १७
सोमाय पायसं साज्यं शा[26]लूकमृषये दिशेत् । लोपीमदितये दि[27]त्यै पुरीमित्युत्तराष्टकम् ॥ १८
मोदकान्ब्रह्मणः प्राच्यां षट्पदाय मरीचये । सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १९
तदधःकोष्ठके दद्यात्सावित्र्यै च कुशोदकम् । दक्षिणे चन्दनं रक्तं षट्पदाय विवस्वते ॥ २०
हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके । इन्द्रजयाय मिश्रान्नमिन्द्राधस्तान्निवेदयेत् ॥ २१
वारुण्यां षट्पदासीने मित्रे सगुडमोदनम् । रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे ॥ २२
तदधो रुद्रदासाय मांसं मार्गमथोत्तरे । ददीत माषनैवेद्यं षट्पदस्थे धराधरे ॥ २३

---

* इदमर्ध क ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. °माश्रित्य व° । २ क. ख. ग. ङ. च. °ण्डलम् । ३ क. ङ. च. °दाग्रके । ४ क. ङ. च. °सेद्वंसौ र° । ५ क. ङ. च. °शौ राज्ञानष्टौ द्विको° । ६ ख. ग. रज्जावष्टौ । ७ घ. °कचं वा° । ८ घ. °वेश उत्तरा° । ९ घ. °पुटे रौ° । १० क. ख. ग. ङ. °दासु म° । ११ ख. पट्टिकाः । १२ ख. °र्माम्बुजं । १३ घ. फलम् । १४ घ. त्रिकटुं । १५ क. ङ. च. °य सकृद्वेत्यथ पूर्वतः । म° । १६ ख. ग. °पूर्ण प्र° । १७ क. ङ. च. श्रुवम् । ख. ग. श्रुतम् । १८ ख. °म् । जालां पूर्णे । १९ क. ङ. च. °र्णेऽथ व° । २० ख. ग. °द्याद्भूतकृते । २१ ख. ग. शृङ्गाय । २२ घ. °य पद्मप° । २३ क. ङ. च. °शेद्यूपान्पु° । २४ घ. °त्पूपान्पु° । २५ ख. ग. सुखे । २६ क. ङ. च. °लूकं मृगये । ग. °लूकं संशये । २७ घ. °णि वह्न्यधः° ।

आपाय[1] शिवकोणाधस्तद्वत्साय च तत्तले[2] । क्रमाद्दद्याद्दधि क्षीरं पूजयित्वा विधानतः ॥ २४
चतुष्पदे निविष्टाय ब्रह्मणे मध्यदेशतः । पञ्चगव्याक्षतोपेतं चरुं साज्यं निवेदयेत् ॥ २५
ईशादिवायुपर्यन्तकोणेष्वथ यथाक्रमम् । वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेद्यथा[3] ॥ २६
चरक्यै सघृतं मांसं[4] विदार्यै दाधि पङ्कजम् । पूतनायै पलं पित्तं रुधिरं च निवेदयेत् ॥ २७
अस्थीनि पापराक्षस्यै रक्तपित्तपलानि च । ततो माषौदनं प्राच्यां स्कन्दाय विनिवेदयेत् ॥ २८
अर्यम्णे दक्षिणाशायां पूपान्कृसरया युतान् । जम्भकाय च वारुण्यामामिषं रुधिरान्वितम् ॥
उदीच्यां पिलिपिच्छाय[5] रक्तान्नं कुसुमानि च । यजेद्वा सकलं वास्तुं कुशदध्यक्षतैर्जलैः ॥ ३०
गृहे च नगरादौ च एकाशीतिपदैर्यजेत् । त्रिपदा रज्जवः कार्याः षट्पदाश्च विकोणके ॥ ३१
ईशाद्याः पादिकास्तस्मिन्नागाद्याश्च[6] द्विकोष्ठगाः[7] । षट्पदस्था मरीचा(च्या)द्या ब्रह्मा नवपदः स्मृतः
नगरग्रामखेटादौ वास्तुः शतपदोऽपि वा । वंशद्वयं कोणगतं दुर्जयं दुर्धरं सदा ॥ ३३
यथा देवालये न्यासस्तथा[8] शतपदे हितः । ग्रहाः स्कन्दादयस्तत्र विज्ञेयाश्चैव[11] षट्पदाः ॥ ३४
चरक्याद्या[9] भूतपदा रज्जुवंशादि पूर्ववत् । देशसंस्थापने वास्तुं[10] चतुस्त्रिंशच्छतं भवेत् ॥ ३५
चतुःषष्टिपदो ब्रह्मा मरीच्याद्याश्च देवताः । *चतुष्पञ्चाशत्पदिका आपाद्यष्टौ रसाग्निभिः ॥ ३६
ईशानाद्या नवपदाः स्कन्दाद्याः शतिकाः स्मृताः । चरक्याद्यास्तद्वदेव रज्जुवंशादि पूर्ववत् ॥
ज्ञेयो विंशसहस्रैस्तु वास्तुमण्डलगः पदैः । न्यासो नवगुणस्तत्र कर्तव्यो देशवास्तुवत्[12] ॥ ३८
पञ्चविंशत्पदा(दो) वास्तुर्वैतालाख्यश्चितौ स्मृतः । अन्यो नवपदो वास्तुः षोडशाङ्घ्रिस्तथाऽपरः
षडस्रत्र्यस्रवृत्तादेर्मध्ये स्याच्चतुरस्रकम् । खाते[13] वास्तुसमं[14] पृष्ठे न्यासे ब्रह्मशिलात्मके ॥ ४०
शावाकस्य निवेशे च मूर्तिसंस्थापने तथा । पायसेन तु नैवेद्यं सर्वेषां वा प्रदापयेत् ॥ ४१
उक्तानुक्ते तु वै वास्तुः पञ्चहस्तप्रमाणतः । गृहप्रासादमानेन वास्तुः श्रेष्ठस्तु सर्वदा ॥ ४२

इत्यादिमहापुराण आग्नेये वास्तुपूजादिविधिकथन नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९२१

---

अथ चतुर्नवतितमोऽध्यायः ।

---

## शिलाविन्यासविधिः ।

ईश्वर उवाच—

ईशादिषु चरक्याद्याः पूर्ववत्पूजयेद्बहिः[15] । आहुतित्रितयं दद्यात्प्रतिदेवमनुक्रमात् ॥ १
दत्त्वा भूतबलिं लग्ने शिलान्यासमनुक्रमात् । मध्यसूत्रे न्यसेच्छक्तिं कुम्भं जान्वन्तमुत्तमम् ॥ २
नकारारूढमूलेन कुम्भेऽस्मिन्धारयेच्छिलाम् । कुम्भानष्टौ सुभद्रादीन्दिक्षु पूर्वादिषु क्रमात् ॥ ३

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. अपाय । २ घ. तत्स्थले । ३ ख. ग. °था । वाराह्यै स° । ४ ख. ग. °सं पूजयित्वा विधानतः । पू° । ५ घ. °पिञ्जाय । ६ ख. ग. °भापाद्या° । ७ क. ख. ग. ङ. च. °ष्ठकाः । ष° । ८ ख. ग. °स्तदा श° । ९ ख. ग. °रकाद्या । १० क. ङ. च. °स्तुश्चतु° । ११ क. ङ. च. °तं श(म)तम् । च° । १२ ख. ग. देवशा° । १३ ख. ग. खातवा° । १४ घ. °वास्तोः स° । १५ ख. °येद्बुरिः । आ° ।

लोकपालाणुभिर्[1]न्यस्य [2]श्वभ्रेषु न्यस्तशक्तिषु । शिलास्तेष्वथ नन्दाद्याः क्रमेण विनिवेशयेत् ॥ ४
शम्बरैर्मूर्तिनाथानां यथा [3]स्युर्भित्तिमध्यतः । *[4]तासु धर्मादिकानष्टौ कोणात्कोणं विभागशः ॥५
सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः । अजिताद्याश्च पूर्वादि जयादिष्वथ विन्यसेत् ॥६
+ब्रह्माणं चोपरि न्यस्य व्यापकं च महेश्वरम् । चिन्तये[5]दे[6]षु चाऽऽत्मानं व्योम[7]प्रासादमध्यगम् ॥
बलिं दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणम् । शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ॥ ८
मध्ये पूर्णशिलान्या[8]सः सुभद्रकलशे[9]ऽर्धतः । पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ॥९
[10]मध्याभावे चतस्रोऽपि मातृवद्भावसंमताः । ॐ पूर्णे त्वं महाविद्ये सर्वसंदोहलक्षणे ॥ १०
सर्व(र्वं)संपूर्णमेवात्र कुरुष्वाङ्गिरसः सुते । ॐ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम् ॥
प्रासादे तिष्ठ संतृप्ता यावच्चन्द्रार्कतारकम् । आयुः कामं श्रियं नन्दे देहि वासिष्ठि देहिनाम् १२
अस्मिन्रक्षा सदा कार्या प्रासादे यत्नतस्त्वया । ॐ भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि
आयुर्दा कामदा देवि श्रीप्रदा च सदा भव । ॐ जयेऽत्र[11] सर्वदा देवि श्रीदाऽऽयुर्दा सदा भव
ॐ जयेऽत्र सर्वदा देवि तिष्ठ त्वं स्थापिता मम । नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि
ॐ रिक्तेऽतिरिक्तदोषघ्ने सिद्धिमुक्तिप्रदे शुभे । सर्वदा सर्वदेशस्थे तिष्ठास्[12]मिन्नीशरूपिणि ॥ १६
गगनायतनं ध्यात्वा तत्र तत्त्वत्रयं न्यसेत् । प्रायश्चित्तं ततो हुत्वा विधिना विसृ[13]जेन्मखम् ॥ १७

इत्यादिमहापुराण आग्नेये शिलाविन्यासविधिकथनं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९४८

---

अथ पञ्चनवतितमोऽध्यायः ।

---

## प्रतिष्ठाकालसामग्र्यादिविधिः ।

ईश्वर उवाच—

वक्ष्ये लिङ्गप्रतिष्ठां च प्रासादे भुक्तिमुक्तिदाम् । तां चरेत्सर्वदा मुक्तौ भुक्तौ देवदिने सति ॥ १
विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके । गुरुशुक्रोदये कार्या प्रथमे करणत्रये ॥ २
शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमं दिनम् । चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥ ३
शोभनास्तिथयः शेषाः क्रूरवारविवर्जिताः । शतभिषा धनिष्ठाऽऽर्द्रा अनुराधोत्तरात्रयम् ॥ ४
रोहिणी श्रवणश्चेति स्थिरारम्भे महोदयाः । लग्नं च कुम्भसिंहालितुलास्त्रीवृषधन्विनाम् ॥ ५
शस्तो जीवो नवर्क्षेषु सप्तस्थानेषु सर्वदा । बुधः षडष्टदिक्सप्ततुर्येषु विनर्तु सितः ॥ ६
सप्तर्तुत्रिदशादिस्थः शशाङ्को बलदः सदा । रविर्दशत्रिषट्संस्थो राहुस्त्रिदशषड्गतः ॥ ७
षट्त्रिस्थानगताः शस्ता मन्दा[14]ङ्गारककेतवः । शुभाः क्रूराश्च पापाश्च सर्व एकादशस्थिताः ॥ ८

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ङ. च. °न्र्यस्येत्पात्रेषु । २ ख. ग. सूत्रेषु । ३ ख. ग. स्युर्मितिम° । ४ ख. ग. तास्त्वध° । ५ ख. ग. °येदसुराध्वानं । ६ घ. °देषु चाऽऽधानं । ७ च. °नं योगप्रा° । ८ क. ङ. च. °सः समुद्र° । ९ क. ख. ग. ङ. च. °लशोऽर्धे° । १० घ. मध्यभा° । ११ ख. ग. °त्र त्वं सदा । १२ घ. °स्मिन्विश्वरू° । १३ ख. °जेन्मुख° । १४ घ. °ङ्गारार्कके° ।

( प्रतिष्ठाकालसामग्र्यादिविधिः )

एषां दृष्टिर्मुनौ पूर्णा त्वाधिकी ग्रहभूतयोः । पादिकी रामदिक्स्थाने[1] चतुरष्टौ पादवर्जिता ॥ ९
पादन्यूनचतुर्नाडीभोगः स्यान्मीनमेषयोः । वृषकुम्भौ च भुञ्जाते चतस्रः पादवर्जिताः ॥ १०
मकरो मिथुनं पञ्च चापालिहरिकर्कटाः । पादोनाः षट्तुलाकन्ये घटिकाः सार्धपञ्च च ॥ ११
केसरी वृषभः कुम्भः स्थिराः स्युः सिद्धिदायकाः । चरा धनुस्तुलामेषा द्विस्वभावास्तृतीयकाः
* कर्कटो मकरोऽलिश्च प्रव्रज्याकार्यनाशकाः । शुभः शुभग्रहैर्दृष्टः शस्तो लग्नः शुभाश्रितः ॥१३
गुरुशुक्रबुधै[2]र्युक्तो लग्नो दद्याद्बलायुषी । राज्यं शौर्यं बलं पुत्रान्यशो धर्मादिकं बहु ॥ १४
प्रथमः सप्तमस्तुर्यो दशमः केन्द्र उच्यते । गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायका[3]ः ॥ १५
त्र्येकादशचतुर्थस्था लग्नात्पापग्रहाः शुभाः । अतो[4]ऽन्ये[5]ऽमी च कर्मार्थे योज्यास्तिथ्यादयो बुधै[6]ः
धाम्नः पञ्चगुणां भूमिं त्यक्त्वा वा धामसंमिताम् । हस्ताद्द्वादशसोपानात्कुर्यान्मण्डपमग्रतः ॥१७
चतुरस्रं चतुर्द्वारं स्नानार्थं तु तदर्धतः । +एकास्यं चतुरास्यं वा रौद्र्यां प्राच्युत्तरे[10]ऽथ वा ॥ १८
हास्तिको दशहस्तो वै मण्डपोऽर्ककरोऽथ वा । द्विहस्तोत्तरया वृद्ध्या शेषं स्यान्मण्डपाष्टकम् १९
*वेदी चतुष्करा मध्ये कोणस्त[11]म्भेन संयुता । वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा२०
एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः परम् । मुष्टिमात्रं शतार्धे स्याच्छते चारत्निमात्रकम् ॥
हस्तं सहस्रहोमे स्यान्नियुते तु द्विहास्तिकम् । लक्षे चतुष्करं कुण्डं कोटिहोमेऽष्टहस्तकम् ॥ २२
भगाभमग्नौ खण्डेन्दु दक्षे त्र्य[12]स्रं च नैर्ऋते । षडस्रं वायवे पद्मं सौम्ये चाष्टास्रकं शिवे ॥ २३
तिर्यक्पातं[13]समं खातमूर्ध्वं मेखलया सह । तद्बहिर्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ॥ २४
अङ्गुलैः षड्भिरेका वा कुण्डाकारास्तु मेखलाः । तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः
उच्छ्रायेणाङ्गुलं तस्माद्विस्तारेणाङ्गुलाष्टकम् । दैर्घ्यं कुण्डार्धमानेन कुण्डकण्ठसमोऽधरः ॥ २६
पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना । पूर्वानना तु शेषाणामैशान्येऽन्य[14]तरा[15] तयोः ॥२७
कुण्डानां यश्चतुर्विंशो भागः सोऽङ्गुल इत्यतः । प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ॥२८
शान्तिभूतिबलारोग्यपूर्वाग्न्या नामतः क्रमात् । पञ्चषट्सप्तहस्तानि हस्तखातस्थितानि च ॥ २९
तदर्धविस्तराणि स्युर्युतान्याम्रदलादिभिः । इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा ॥ ३०
[16]शुङ्काभा हेमवर्णा च पताका स्फाटिकोपमा । +पूर्वादितो[17]ऽब्जजे रक्ता[18] नीलाऽनन्तस्य नैर्ऋते ३१
पञ्चहस्तास्तदर्धाश्च ध्वजा दीर्घाश्च विस्तराः । [19]हस्तप्रदेशिता दण्डा ध्वजानां पञ्चहस्तकाः॥३२
वल्मीकाद्दन्तिदन्ताग्रात्तथा वृषभशृङ्गतः । पद्मखण्डाद्वराहाच्च गोष्ठादपि चतुष्पथात् ॥ ३३
मृत्तिका द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनी । न्यग्रोधोदुम्बराश्वत्थचूतजम्बूत्वगुद्भवम् ॥ ३४
कषायपञ्चकं ग्राह्यमार्तवं च फ[20]लाष्टकम् । तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् ॥ ३५

* इदमर्धं घ. पुस्तके नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । * इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ क. ङ. च. °ने वसुद्वौ पा° । ख. ग. °ने रमुष्टौ पा° । २ ख. ग. °धैर्मुक्तो । ३ क. ङ. च. °काः । एका° । ख. ग. °काः । द्व्येका° । ४ घ. °तोऽप्यनीचक° । ५ क. ङ. च. °न्ये नैष(व) क° । ६ क. ख. ग. ङ. च. °धैः । आयुष्पञ्च° । ७ क. ङ. च. वा धेनुसं° । ८ क. ङ. च. °स्तान्वा द° । ९ क. ख. ग. ङ. च. स्थानार्थं । १० ख. ग. °त्तर तथा । हा° । ११ ख. ग. °म्भेषु सं° । १२ क. ङ. च. कुम्भं । १३ घ. °तशिवं खा° । १४ क. ङ. च. °न्यत्र वा त° । १५ ख. ग. °तराऽनयोः । १६ घ. शुक्लाभा । १७ ख. ग. °ते ध्वजे । १८ ग. °क्ता तिलाऽ° । १९ क. ङ. च. हस्ताग्रदे° । २० ख. ग. कलाष्टकम् ।

*शस्तं पुष्पफलं वक्ष्ये रत्नगोशृङ्गवारि च । स्नानायापाहरेत्पञ्च पञ्चगव्यामृतं तथा ॥ ३६
पिष्टनिर्मितव[1]स्त्रादि द्र[2]व्यं निर्मञ्जनाय च । सहस्रशुषिरं कुम्भं मण्डलाय च रोचना ॥ ३७
शतमोषधिमू[3]लानां विजया ल[4]क्ष्मणा बला[5] ॥ गुडूच्यतिबला[6] पाठा सहदेवा शतावरी ॥ ३८
ऋद्धिः सु[7]वर्चला वृद्धिः स्ना[8]ने प्रोक्ता पृथक्पृथक् । +रक्षायै तिलद[9]र्भाद्यं भस्मस्नानं तु केवलम् ॥
यवगोधूमबिल्वानां चूर्णानि च विचक्षणः । विलेपनं सकर्पूरं स्नानार्थं कुम्भगण्डकान् ॥ ४०
खट्वां च तूलिकायुग्मं सोपधानं सवस्त्रकम् । कुर्याद्वित्तानुसारेण शयने लक्ष्यकल्पने ॥ ४१
घृतक्षौद्रयुतं पात्रं कुर्यात्स्वर्णशलाकिकाम् । वर्धनीं शिवकुम्भं च लोकपालघटानपि ॥ ४२
एकं निद्राकृते कुम्भं शान्त्यर्थं कुण्डसंख्यया । द्वारपालादिधर्मादिप्रशान्तादिघटानपि ॥ ४३
वास्तुलक्ष्मीगणेशानां कलशानपरानपि । धान्यपुञ्जकृताधारान्सवस्त्रान्स्रग्विभूषितान् ॥ ४४
सहिरण्यान्समालब्धान्गन्धपानीयपूरितान् । पूर्णपात्र[10]फलाधारान्पल्लवाढ्यान्सलक्षणान् ॥ ४५
वस्त्रैराच्छादयेत्कुम्भानाहरेद्गौरसर्षपान् । विकिरार्थं तथा लाजाञ्ज्ञानखड्गं च पूर्ववत् ॥ ४६
सापिधानां चरुस्थालीं दर्वीं च ताम्रनिर्मिताम् । घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृते तथा ॥ ४७
विष्टरांस्त्रि(स्त्रिं)शता दर्भदलैर्बाहुप्रमाणकान् । चतुरश्चतुरस्तद्वत्पालाशान्परिधीनपि ॥ ४८
तिलपात्रं हविष्पात्रमर्घपात्रं पवित्रकम् । पलविं[11]शतिमानानि [12]घण्टाधूपप्रदानकम् ॥ ४९
स्रुक्स्रुवौ पिटकं पीठं व्यजनं शुष्कमिन्धनम् । पुष्पं पत्रं गुग्गुलं च घृतैर्दीपांश्च धूपकम् ॥ ५०
[13]अक्षतानि(?) त्रिसूत्रीं च गव्यमाज्यं यवांस्तिलान् । कुशाः शा[14]न्त्यै त्रिमधुरं समिधो दशपर्विकाः
बाहुमात्रं स्रुवं हस्तमर्कादिग्रहशान्तये । समिधोऽर्कपलाशोत्थाः खादिरामार्गपिप्पलाः(?) ॥ ५२
उदुम्बरशमीदूर्वाः कुशोत्थाः शतमष्ट च । तदभावे यवतिला[15] गृहोपकरणं तथा ॥ ५३
स्थाली दर्वी पिधानादि देवादिभ्योऽशुकद्वयम् । मुद्रा मुकुटवासांसि हारकुण्डलकङ्कणान् ॥ ५४
कुर्यादाचार्यपूजार्थं वित्तशाठ्यं विवर्जयेत् । तत्पादपादहीना [16]च मूर्तिभृ[17]दस्त्रजापिनाम् ॥ ५५
पूजा स्याज्जापिभिस्तुल्या विप्रदैवज्ञशिल्पिनाम् । वज्रार्क[18]शान्तौ नीला[19]तिनीलमुक्ताफलानि च ॥
पुष्पपद्मादिरागं च वैडू(डू)र्यं रत्नमष्टमम् । उशीरमाध[20]वक्रान्ता रक्तचन्दनकागुरु[21] ॥ ५७
श्रीखण्डं सारिकं कुष्ठं शङ्खिनी ह्योषधीगणः । हेम ताम्रम[22]यो र[23]ङ्गं राजतं च सकांस्यकम् ॥ ५८
सीसकं चेति लोहानि हरितालं मनःशिला । गैरिकं हेम माक्षीकं पारदो वह्निगैरिकम् ॥ ५९
गन्धकाभ्रकमित्यष्टौ धातवो व्रीहयस्तथा । गोधूमान्सतिलान्माषान्मुद्गानप्याहरेद्यवान् ॥ ६०
नीवाराञ्श्यामकानेवं व्रीहयोऽप्यष्ट कीर्तिताः ॥ ६१

इत्यादिमहापुराण आग्नेये प्रतिष्ठाकालसामग्र्यादिविधिकथनं नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३००९

* एतत्प्रभृत्यर्धचतुष्टयं नास्ति क. ङ. च. पुस्तकेषु । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

१ ख. ग. °वक्त्रादि । २ ख. ग. द्रव्यनि° । ३ ख. ग. °लायां वि° । ४ क. ख. ग. ङ. च. लक्षणा । ५ क. ङ. च. °ला । अवल्गुही चाति° । ६ क. ङ. च. °ला स° । ७ घ. सुवर्चसा । ८ क. ख. ग. ङ. च. स्थाने । ९ घ. °दर्भौघो भ° । १० ख. ग. °त्रकलाहारा° । ११ घ. °विंशाष्टमा° । १२ घ. घटीधू° । १३ क. ङ. च. अकृता° । १४ क. ख. ग. ङ. च. शान्तौ । १५ ख. ग. °लान्गृहो° । १६ ख. ग. च पूजाऽभूद° । १७ क. ङ. च °भृच्छस्त्र° । १८ क. ख. ङ. च. °र्ककान्तौ । १९ क. ङ. च. °लाभं नी° । २० क. ख. ग. ङ. च. °धवीक्रा° । २१ ख. ग. घ. °रुम् । श्री° । २२ घ. °मयं रक्तं रा° । २३ क. ङ. च. °ङ्गं तालमात्रं स° । ख. ग. °ङ्गं तावमायं स° ।

अथ षण्णवतितमोऽध्यायः ।

---

प्रतिष्ठायामधिवासनविधिः ।

ईश्वर उवाच—

स्नात्वा नित्यद्वयं कृत्वा प्रणवार्घकरो गुरुः । सहायैर्मूर्तिपैर्विप्रैः सह गच्छेन्मखालयम् ॥ १
शान्त्यादितोरणांस्तत्र पूर्ववत्पूजयेत्क्रमात् । प्रदक्षिणक्रमादेषां शाखायां द्वारपालकान् ॥ २
प्राचि नन्दिमहाकालौ याम्ये[1] भृङ्गिविनायकौ । वारुणे वृषभस्कन्दौ देवीचण्डौ तथोत्तरे ॥ ३
तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ । पर्जन्याशोकनामानौ भूतसंजीवनामृतौ ॥ ४
धनदश्रीप्रदौ द्वौ द्वौ पूजयेदनुपूर्वशः । स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोन्तकैः ॥ ५
लोकग्रहवसुद्वाःस्थस्रवन्तीनां द्वयं द्वयम् । भानुत्रयं युगं वेदो लक्ष्मीर्गणपतिस्तथा ॥ ६
इति देवा मखागारे तिष्ठन्ति प्रतितोरणम् । विघ्नसंघापनोदाय क्रतोः संरक्षणाय च ॥ ७
वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् । त्रिशूलं चक्रमम्भोजं पताकाश्चार्चयेत्क्रमात् ॥ ८
ॐ ह्रूं फट्, नमः । ॐ ह्रूं फट्[2] , हस्ते शक्तये ह्रूं फट्, नम इत्यादिमन्त्रैः ॥ ९
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥
ध्वजाष्टदेवताः पूज्याः पूर्वादौ भूतकोटिभिः ॥ १०
ॐ कौं कुमुदाय नम इत्यादिमन्त्रैः ॥ ११
हेतुकं त्रिपुरघ्नं च शक्त्याख्यं[3] यमजिह्वकम् । कालं करालिनं षष्ठमेकाङ्घ्रिं भीममष्टकम् ॥ १२
तथैव पूजयेद्दिक्षु क्षेत्रपालाननुक्रमात् । बलिभिः कुसुमैर्धूपैः संतुष्टान्परिभावयेत् ॥ १३
*कर्म्बलास्तृतेषु[4] वर्णेषु वंशस्थूणास्त्वनुक्रमात्[5] । पञ्च क्षित्यादितत्त्वानि सद्योजातादिभिर्यजेत् ॥
सदाशिवपदव्यापि मण्डपं धाम शांकरम्[6] । पताकाशक्तिसंयुक्तं तत्त्वदृष्ट्याऽवलोकयेत् ॥ १५
दिव्यान्तरिक्षभूमिष्ठविघ्नानुत्सार्य पूर्ववत् । ( + प्रविशेत्पश्चिमद्वारा शेषद्वाराणि दर्शयेत् ॥ १६
प्रदक्षिणक्रमाद्गत्वा निविष्टो वेदिदक्षिणे । उत्तराभिमुखः कुर्याद्भूतशुद्धिं यथा पुरा ॥ १७
अन्तर्यागं विशेषार्घ्यं मन्त्रद्रव्यादिशोधनम् । कुर्वीत स्वात्मनः[7] पूजां पञ्चगव्यादि पूर्ववत् ॥ )१८
साधारं कलशं तस्मिन्विन्यसेत्तदनन्तरम् । विशेषाच्च[8] शिवं ध्यायेत्तत्त्वत्रयमनुक्रमात्[9] ॥ १९
ललाटस्कन्धपादान्तं शिवविद्यात्मकं परम् । रुद्रनारायणब्रह्मदैवतं[10][11] निजसंच(व)रैः ॥ २०
ॐ हं हाम् ॥ २१
मूर्तीस्तदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत् । तद्व्यापकं शिवं साङ्गं शिवहस्तं च मूर्धनि ॥ २२
ब्रह्मरन्ध्रप्रविष्टेन[12] तेजसा बाह्यसान्तरम् । तमःपटलमाधूय प्रद्योतितदिगन्तरम् ॥ २३
आत्मानं मूर्तिपैः सार्धं स्रग्वस्त्रमुकुटादिभिः[13] । भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत्
चतुष्पदान्तसंस्कारैः[14] संस्कुर्यान्मखमण्डपम् । विक्षिप्य विकिरादीनि कुशकूर्चो(र्चै)पसंहरेत् २५

---

* इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

---

१ ख. ग. °म्ये शृङ्गि° । २ क. ङ. च. ॐ हूं फटशक्त° । ३ क. ङ. च. वह्नयाख्यं । ४ ख. ग. °म्बरातृणेषु । ५ ख. वंशे स्थू° । ६ क. ङ. च. °म् । पिनाकश° । ७ घ. आत्मनः । ८ घ. °षाच्छिवतत्त्वाय तत्त्व° । ९ ख. ग. शिवतत्त्वाय तत्त्व° । १० ख. ग. रुद्रं ना° । ११ ख. ग. °यणं ब्र° । १२ ख. ग. °प्रतिष्ठेन । १३ घ. °स्रक्कुसुमादि° । १४ क. ङ. च. °ष्पथा तु सं° । ख. ग. °ष्पथां तु सं° ।

आसनीकृत्य वर्धन्या वास्त्वादीन्पूर्ववद्यजेत् । शिवकुम्भास्त्रवर्धन्यौ पूजयेच्च स्थिरासने ॥ २६
स्वदिक्षु कलशारूढाल्लोँकपालाननुक्रमात् । वाहायुधादिसंयुक्तान्पूजयेद्विधिना यथा ॥ २७
ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् । सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥ २८
सप्तार्चिषं च बिभ्राणमक्षमालां कमण्डलुम् । ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् ॥ २९
महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् । रक्तनेत्रं खरारूढं खड्गहस्तं च नैर्ऋतम् ॥ ३०
वरुणं मकरे श्वेतं नागपाशधरं स्मरेत् । वायुं च हरिणे नीलं कुबेरं मेषसंस्थितम् ॥ ३१
त्रिशूलिनं वृषे चेशं कूर्मेऽनन्तं तु चक्रिणम् । ब्रह्माणं हंसगं ध्यायेच्चतुर्वक्त्रं चतुर्भुजम् ॥ ३२
स्तम्भमूलेषु कुम्भेषु वेद्यां धर्मादिकान्[१]यजेत् । दिक्षु कुम्भेष्वनन्तादीन्पूजयन्त्यपि केचन ॥ ३३
शिवाज्ञां श्रावयेत्[२]कुम्भं भ्रामयेदात्[३]मपृष्ठगम् । पूर्ववत्स्थापयेदादौ कुम्भं तदनु वर्धनीम् ॥ ३४
शिवं स्थिरासनं कुम्भे शस्त्रार्थं च ध्रुवासनम् । पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ ३५
निजयागं जगन्नाथ रक्ष भक्तानुकम्पया । एभिः संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ॥ ३६
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथ वा । मण्डलेऽभ्यर्च्य देवेशं व्रजेद्वै कुँण्डे[४]संनिधौ ३७
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्तिधारिणः । गुरोरादेशतः कुर्युर्निजकुण्डेषु संस्कृतिम् ॥ ३८
जपेयुर्जा[६]पिनोऽसंख्यं[७] मन्त्रमन्ये तु संहिताम् । पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः ॥ ३९
श्रीसूक्तं पावमानीश्च मैत्रकं च वृषाकपिम् । ऋग्वेदी पूर्वदिग्भागे सर्वमेतत्समुच्चरेत् ॥ ४०
देवव्रतं तु भारुण्डं ज्येष्ठसाम रथंतरम् । पुरुषं गी[८]तिमेतानि सामवेदी तु दक्षिणे ॥ ४१
रुद्रं पुरुषसूक्तं च श्लोकाध्यायं विशेषतः । ब्राह्मणं च यजुर्वेदी पश्चिमायां समुच्चरेत् ॥ ४२
नीलरुद्रं तथाऽथर्वी सूक्ष्मासूक्ष्मं तथैव च । उत्तरेऽथर्वशीर्षं च तत्परस्तु समुद्धरेत् ॥ ४३
आचार्यश्चाग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत् । वह्नेः पूर्वादिकान्भागान्पूर्वकुण्डादितः क्रमात् ॥ ४४
धूपदीपचरूणां च ददीताग्निं समुद्धरेत् । पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ॥ ४५
देशकालादिसंपत्तौ दुर्निमित्तप्रशान्तये । होमं कृ[९]त्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम् ॥ ४६
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् । यजमानालंकृतास्तु व्रजेयुः स्नानमण्डपम् ॥ ४७
भद्रपीठे निधायेशं ताडयित्वाऽवगुण्ठयेत् । स्नापयेत्पूजयित्वा तु मृदा काषायवारिणा ॥ ४८
गोमूत्रैर्गोमयेनापि वारिणा चान्तराऽन्तरा । भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ॥ ४९
देशिको मूर्तिपैः सार्धं कृत्वा कारणशोधनम् । धर्मजप्तेन संछाद्य पीतवर्णेन वाससा ॥ ५०
संपूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् । तत्र दत्तासनायां च शय्यायां संनिवेश्य च ॥ ५१
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् । शलाकया सुवर्णस्य अक्षिणी शस्त्रकर्मणा ॥ ५२
अञ्जयेल्लक्ष्मकृत्पश्चाच्छास्त्रदृष्टेन कर्मणा । (*कृतकर्मा च शस्त्रेण लक्ष्मी (क्ष्मीं(?))शिल्पी समुत्क्षिपेत्
त्र्यंशादर्धोऽथ पादार्धादर्धाया अर्धतोऽथ वा । सर्वकामप्रसिद्ध्यर्थं शुभं लँक्ष्मा[१०]वतारणम् ॥ ५४)
लिङ्गदीर्घविकारांशे त्रिभक्ते भागवर्णनात् । विस्तारो लक्ष्मदेहस्य भवेल्लिङ्गस्य सर्वतः ॥ ५५

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ ख. ग. °कान्प्रसेत् । २ ख. ग °वयन्कुम्भं । ३ क. ङ. च. °दानुपूर्वशः । पू° । ४ ख. ग. °कुण्ठसं° । ५ क. ङ. च. °ण्डलादिभिः । गु° । ६ घ. °पिनः सं° । ७ क. ङ. च. °संख्यमस्त्रम° । ख. ग. °संख्यमत्रम° । ८ ख. ग. गीतमे° । ९ ख. ग. कृत्वाऽथ म° । १० ग. लक्ष्म्याव° ।

( प्रतिष्ठायामधिवासनविधिः )

यवस्य नवभक्तस्य भागैरष्टाभिरावृता । हास्तिके लक्ष्मरेखा च गाम्भीर्या[1]द्विस्तरादपि ॥ ५६
एवमष्टांशवृद्ध्या तु लिङ्गे सार्धकरादिके । भवेदष्टयवा पृथ्वी गम्भीरो[2]ऽत्र च हास्तिके ॥ ५७
शांभवेषु च लिङ्गेषु पादवृद्धेषु सर्वतः । लक्ष्मदेहस्य विष्कम्भो भवेद्वै यववर्धनात् ॥ ५८
गम्भीरत्वपृथुत्वाभ्यां रेखाऽपि त्र्यंशवृद्धितः । सर्वेषु च भवेत्सूक्ष्मं लिङ्गमस्तकमस्तकम् ॥ ५९
लक्ष्मक्षेत्रेऽष्टधा भक्ते मूर्ध्नि भागद्वये शुभे । षड्भागपरिवर्तेन मुक्त्वा भागद्वयं त्वधः ॥ ६०
रेखा[3]त्रयेण संबद्धं कारयेत्पृष्ठदेशगम् । रत्नजे लक्षणोद्धारो यवौ हेमसमुद्भवे ॥ ६१
स्वरूपलक्षणं तेषां प्रभा रत्नेषु निर्मला । (*नयनोन्मीलनं व[4]क्त्रे सांनिध्याय च लक्ष्म तत्॥६२
लक्षणोद्धारै[5]रेखां च घृतेन मधुना तथा । मृत्युंजयेन संपूज्य शिल्पिदोषनिवृत्तये ॥ ६३
अर्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः। शिल्पिनं तोषयित्वा तु दद्याद्गां गुरवे ततः॥६४)
लिङ्गं धूपादिभिः प्राच्यं गायेयुर्भर्तृगाः स्त्रियः । सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६५
स्पृ[6]ष्ट्वा च रोचनं दत्त्वा कुर्युर्निर्मन्थनादिकम् । गुडलवणधान्याकदानेन विसृजेच्च ताः ॥ ६६
गुरुर्मूर्तिधरैः सार्धं हृदा वा प्रणवेन वा । मृत्स्नागोमयगोमूत्रभस्मभिः सलिलान्तरम् ॥ ६७
स्नापयेत्पञ्चगव्येन पञ्चामृतपुरःसरम् । विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥ ६८
शुभ्रपुष्पफलस्वर्णरत्नशृङ्ग[7]यवोदकैः । तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ ६९
तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा । क्षीरार्णवादिभिः कुम्भैः शिवकुम्भजलेन च ॥ ७०
विरूक्षणं विलेपं च सुगन्धैश्चन्दनादिभिः । संपूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥ ७१
[8]रक्तरूपेण नीराज्य रक्षातिलकपूर्वकम् । गीतौ[9]घैर्जलदुग्धैश्च कुशाग्रैरर्घ्यसूचितैः ॥ ७२
द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत्पुरुषाणुना । समाचम्य हृदा देवं ब्रूयादुत्थीयतां प्रभो ॥ ७३
देवं ब्रह्मरथेनैव क्षि[10]प्रं द्रव्याणि तं नयेत् । मण्डपे पश्चिमद्वारे शय्यायां विनिवेशयेत् ॥ ७४
[11]शक्त्यादिमूर्तिपर्यन्ते विन्यसेदासने शुभे । पश्चिमे पिण्डिकां तस्य न्यसेद्ब्रह्मशिलां तथा ॥ ७५
शस्त्र[12]मन्त्रशतालब्धनिद्राकुम्भं ध्रुवासनम् । प्रकल्प्य शिवकोणे च दत्त्वाऽर्घ्यं हृदयेन तु ॥ ७६
उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् । समारोप्य न्यसेत्तस्मिन्सृष्ट्या धर्मादिवन्दनम् ॥
दद्या[13]द्धूपं च संपूज्य तथा वासांसि वर्मणा । गृहोपकृतिनैवेद्यं हृदा दद्यात्स्वशक्तितः ॥ ७८
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके । देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसंचयम् ॥ ७९
शक्त्यादिभूमिपर्यन्तं[14] सुतत्त्वाधिपसंयुतम् । विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ ८०
(+मायापदेशशक्त्यन्तं [15]तुर्या(र्यां)शाष्टांशवर्तुलम् । तत्राऽऽत्मतत्त्वविद्याख्यं शिवं सृष्टिक्रमेण तु )
एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् । विन्यस्य मूर्तिमूर्तीशान्पूर्वादिक्रमतो यथा ॥ ८२
क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् । आकाशमूर्तिरूपांस्तान्न्यसेत्तदधिनायकान् ॥ ८३
स(श)र्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् । महादेवं च भीमं च मन्त्रास्तद्वाचका इमे ॥ ८४

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. °म्भीरां नवहा° । २ ख. °राम्न च हा° । ३ क. ङ. च. °खाभ्रमेण । ४ ख. ग. व्यक्ते । ५ ख. ग. °रलेखां । ६ घ. स्मृत्वा । ७ क. ङ. च. °ङ्गवोद° । ख. ग. °ङ्गसरोद° । ८ क. ङ. च. बहुरूपेण । ९ घ. °म् । घृतौ° । १० क. ङ. च. क्षिपेद्द्रव्या° । ख. ग. क्षिप्तद्र° । ११ घ. °दिशक्तिप° । १२ क. ङ. च. °मन्त्रशतावच्च नि° । १३ क. ङ. च. °याद्द्वयं च । १४ घ. °न्तं स्वत° । १५ ख. ग. तुर्यायाष्टांसव° ।

लवशषचयसाश्च हकारश्च त्रिमात्रिकाः । प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथ वा क्वचित् ॥ ८५
पञ्चकुण्डात्मके यागे मूर्तीः पञ्चाथ वा न्यसेत् । पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८६
क्रमात्तदधिपान्पञ्च ब्रह्माणं धरणीधरम् । रुद्रमीशं सदाख्यं च सृष्टिन्यायेन मन्त्रवित् ॥ ८७
मुमुक्षोर्वा निवृत्ताद्या अजाताद्यास्तदीश्वराः । *त्रितत्त्वं वाऽथ सर्वत्र न्यसेद्व्याप्त्यात्मकारणम् ॥
शुद्धे चाऽऽत्मनि विद्येशा अशुद्धे लोकनायकाः । द्रष्टव्या मूर्तिपाश्चैव भोगिनो मन्त्रनायकाः ॥
पञ्चविंशत्तथैवाष्ट पञ्च त्रीणि यथाक्रमम् । एषां तत्त्वं तदीशानामिन्द्रादीनां ततो यथा ॥ ९०
ॐ हां शक्तितत्त्वा[1]य नम इत्यादि । ॐ हां शक्तितत्त्वाधि[2]पाय नम इत्यादि । ॐ हां[3] क्ष्मामूर्तये नमः । ॐ हां क्ष्मामूर्त्य[4]धिपाय शिवाय नम इत्यादि । ॐ हां पृथिवीमूर्तये नमः । ॐ हां[5] पृथिवीमूर्त्यधिपाय ब्रह्मणे न[6]म इत्यादि । ॐ हां शिवतत्त्वाधिपाय रुद्राय नम इत्यादि ॥ ९१
नाभिकन्दात्समुच्चार्य घण्टानादविसर्पणम् । ब्रह्मादिकारणत्यागाद्द्वादशान्तसमाश्रितम् ॥ ९२
मन्त्रं च मनसाऽभिन्नं प्राप्तानन्दरसोपमम् । द्वादशान्तात्समानीय निष्कलं व्यापकं शिवम् ॥९३
अष्ट(ष्टा)त्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् । सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत् ९४
जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः । पिण्डिकादिषु[7] तु न्यासः प्रोच्यते सांप्रतं यथा ॥९५
पिण्डिकां च कृतस्नानां विलिप्तां चन्दनादिभिः । सद्वस्त्रैश्च समाच्छाद्य रन्ध्रे च भगलक्षणे॥९६
पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम् । लिङ्गवत्कृतविन्यासां विधिवत्संप्रपूजयेत् ॥ ९७
कृतस्नानादिकां तत्र लिङ्गमूले शिलां न्यसेत् । कृतस्नानादिसंस्कारं शक्त्य[8]न्तं वृषभं तथा ॥९८
प्रणवपूर्वं हुं[9] पूं ह्रीं मध्यादन्यतमेन च । क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीम् ॥ ९९
भस्मदर्भतिलैः कुर्यात्प्राकारत्रितयं ततः । रक्षायै लोकपालांश्च सायुधान्योजयेद्बहिः ॥ १००
ॐ[10] हूं हं क्रियाशक्तये नमः । ॐ[11] हूं[12] हां हः, महागौरी(रि) रुद्रदयिते स्वाहेति च पिण्डिकायाम् ।
ॐ हामाधारशक्तये नमः । ॐ हां वृषभाय नमः ॥ १०१
तारिका दीप्तिमत्युग्रा ज्योत्स्ना चैता बलोत्कटाः । तथा धात्री विधात्री च न्यसेद्वा पञ्च नायिकाः
वामा ज्येष्ठा क्रिया ज्ञाना वेधा[13] तिस्रोऽथ वा न्यसेत् । क्रिया ज्ञाना तथेच्छा च पूर्ववच्छान्तिमूर्तिषु
तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः । पञ्च चाथ महामोहा घोरा[14] रात्रिभया ज्वरा ॥
तिस्रोऽथ वा क्रिया ज्ञाना तथा बाधा[15]दिनायिका । आत्मादित्रिषु तत्त्वेषु तीव्रमूर्तिषु विन्यसेत् ॥
अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधि । गौर्यादिसंवरैरेव पूर्ववत्सर्वमाचरेत् ॥ १०६
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः । कुण्डमध्ये महेशानं मेखलासु महेश्वरम् ॥ १०७
क्रियाशक्तिं तथाऽन्यासु नादमोष्ठे च विन्यसेत् । घटं स्थण्डिलवह्नीशैर्नाडीसंधानकं ततः॥१०८
पद्मतन्तुसमां शक्तिमुं[16]द्घातेन समुद्यताम् । विश[17]न्ती(न्तीं) सूर्यमार्गेण निःसरन्तीं समुद्गताम्॥ १०९
पुनश्च शून्यमार्गेण विशन्तीं स्वस्य चिन्तयेत् । एवं सर्वत्र संधेयं मूर्तिपैश्च परस्परम् ॥ ११०

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ ख. ग. °त्त्वात्मने न° । २ क. ङ. च. °धिपतये न° । ३ क. ङ. च. हां पृ° । ४ घ. °र्त्यधीशाय । ५ ख. ग. घ. हां मू° । ६ क. ङ. च. नमः । ॐ । ७ ख. ग. °षु भून्या° । ८ ख. शक्त्या तं वृ° । ९ क. ङ. च. हूं । ख. ग. ह्रूं । १० ख. ग. ॐ ह्रूं हं क्रि° । ११ क. ङ. च. ॐ ह्रीं सः, म° । १२ ख. हं । १३ क. ख. ग. ङ. च. रोधा । १४ घ. °रा च त्रितयज्व° । १५ ख. ग. °धा विनायका । १६ ख. °मुद्धाते° । १७ क. ख. ग. ङ. च. °न्ती शून्यमा° ।

संपूज्य धारिकां शक्तिं कुण्डे संतर्प्य च क्रमात् । तत्त्वतत्त्वेश्वरान्मूर्तिमूर्तीशांश्च घृतादिभिः ॥
संपूज्य तर्पयित्वा तु संनिधौ संहिताणुभिः । शतं सहस्रमर्धं वा पूर्णया सह होमयेत् ॥ ११२
तत्त्वतत्त्वेश्वरान्मूर्तिमूर्तीशांश्च करेणुकान् । *तथा संतर्प्य सांनिध्ये जुहुयुर्मूर्तिपा अपि ॥ ११३
ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः । संतर्प्य शान्तिकुम्भाम्भःप्रोक्षिते कुशमूलतः ॥ ११४
लिङ्गमूलं च संस्पृश्य जपेयुर्होमसंख्यया । संनिधानं हृदा कुर्युर्वर्मणा चावगुण्ठनम् ॥ ११५
एवं संशोध्य ब्रह्मादिविष्ण्वन्तादिविशुद्धये । विधाय पूर्ववत्सर्वं होमसंख्याजपादिकम् ॥ ११६
कुशमध्याग्रयोगेन(ण) लिङ्गमध्याग्रकं स्पृशेत् । यथा यथा च संधानं तदिदानीमिहोच्यते ॥ ११
ॐ हां हम्, ओम्, ओम्, ओम्, एम्, ॐ भूं भूं बाह्यमूर्तये नमः । ॐ हां वाम्, आम्, ओम्,
आं षाम् ॐ भूं भूं वां वह्निमूर्तये नमः ॥ ११८
एवं च यजमानादिर्मूर्तिभिरभिसंधेयम् । पञ्चमूर्त्यात्मकेऽप्येवं संधानं हृदयादिभिः ॥ ११९
मूलेन स्वीयबीजैर्वा ज्ञेयं तत्त्वत्रयात्मके । शिलापिण्डीवृषेष्वेवं पूर्णाछिन्नं सुसंवरैः ॥ १२०
भागाभागविशुद्ध्यर्थं होमं कुर्याच्छतादिकम् । न्यूनादिदोषमोक्षाय शिवेनाष्टाधिकं शतम् ॥ १२१
हुत्वाऽथ यत्कृतं कर्म शिवश्रोत्रे निवेदयेत् । एतत्समन्वितं कर्म त्वच्छक्तौ च मया प्रभो ॥ १२२
ॐ नमो भगवते रुद्राय रुद्र नमोऽस्तु ते । विधिपूर्णमपूर्णं वा स्वशक्त्याऽऽपूर्य गृह्यताम् ॥ १२३
ॐ ह्रीं शांकरि पूरय स्वाहा, इति पिण्डिकायाम् ॥ १२४
अथ लिङ्गे न्यसेज्ज्ञानी क्रियाख्यं पीठविग्रहे । आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि १२५
निबध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् । एकरात्रमथो वाऽपि यद्वा सद्योऽधिवासनम् ॥ १२६
विनाऽधिवासनं यागः कृतोऽपि न फलप्रदः । स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम् ॥ १२७
शिवकुम्भादिपूजां च दिग्बलिं च निवेदयेत् । गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम् ॥
+ अधिवासः स वसतेरधेर्भावे घ ईरितः ॥ १२८

इत्यादिमहापुराण आग्नेये प्रतिष्ठायामधिवासनविधिकथनं नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१३७

अथ सप्तनवतितमोऽध्यायः ।

## शिवप्रतिष्ठाविधिः ।

ईश्वर उवाच—

प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम् । प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत् ॥ १
दिक्पतींश्च समभ्यर्च्य शिवकुम्भं च वर्धनीम् । अष्टमुष्टिकया लिङ्गं वह्निं संतर्प्य च क्रमात् ॥ २
शिवाज्ञातस्ततो गच्छेत्प्रासादं शस्त्रमुच्चरन् । तद्गतान्प्रक्षिपेद्विघ्नान्हुंफडन्तशराणुना ॥ ३

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + क. ङ. च. पुस्तकेष्विदमर्धं नास्ति ।

१ घ. °र्प्य शक्तिं कु° । २ क. ङ. च. ॐ हाम्, ओम्, ओम्, वाम्, ओं भूर्भुवो स्वम्° । ३ ख. हाम् । ४ ख. ग. °म् ए° । ५ ख. ग. भूं बा° । ६ क. ङ. च. ॐ हम्, ओम्, ओम्, ओम्, वाम्, ॐ भूं । ७ ख. °म्, ओम्, ओम्, ओम्, वाम्, ॐ भूं । ८ क. ङ. च. °तन्मयाऽर्पितं । ९ घ. °र्भावः समीरि° । १० क. ख. ग. °दं शास्त्र° । ११ क. ङ. च. °घ्नान्हूंफ° । ख. ग. °घ्नान्हूंफ° ।

तन्मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया । तस्मान्मध्यं परित्यज्य यवार्धेन यवेन वा ॥ ४
किंचिदीशानमाश्रित्य शिलामध्ये निवेशयेत् । मूलेन तामनन्ताख्यां सर्वाधारस्वरूपिणीम् ॥ ५
सर्वगां सृष्टि[1]योगेन विन्यसेद्[2]चलां शिलाम् । अथ वाऽनेन मन्त्रेण शिवस्याऽऽसनरूपिणीम् ॥ ६
ॐ नमो व्यापिनि भगवति स्थिरे[3]ऽचले ध्रुवे । ह्रीं[4] लं ह्रीं स्वाहा ॥ ७
त्वया शिवाज्ञया शक्ते स्थातव्यमिह संततम् । इत्युक्त्वा च समभ्यर्च्य निरुध्यौद्रोधमुद्रया ॥ ८
वज्रादीनि च रत्नानि तथोशीरादिकौषधीः । लोहान्हेमादिकांस्यान्तान्हरितालादिकांस्तथा ॥९
धान्यप्रभृतिसस्यांश्च पूर्वमुक्ताननुक्रमात् । प्रभारागत्वदेहत्ववीर्यशक्तिमयानिमान् ॥ १०
भावयन्नेकचित्तस्तु लोकपालेशसंवरैः । पूर्वादिषु च गर्तेषु न्यसेदेकैकशः क्रमात् ॥ ११
हेमजं तारजं कूर्मं वृषं वा द्वारसंमुखम् । सरित्तटमृदा युक्तं पर्वताग्रमृदाऽथ वा ॥ १२
प्रक्षिपेन्मध्यगर्ता[6]दौ यद्वा मेरुं सुवर्णजम् । मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ॥ १३
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् । सर्वबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् ॥ १४
स्वर्णजं राजतं वाऽपि सर्वलोहसमुद्भवम् । सुवर्णं कृशरायुक्तं पद्मनालं ततो न्यसेत् ॥ १५
देवदेवस्य शक्त्यादिमूर्तिपर्यन्तमासनम् । प्रकल्प्य पायसेनाथ लिप्त्वा गुग्गुलुनाऽथ वा ॥ १६
श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितम् । दिक्पतिभ्यो बलिं दत्त्वा समाचान्तोऽथ देशिकः १७
शिवेन वा शिलाश्वभ्रसङ्गदोपनिवृत्तये । शस्त्रेण वा शतं सम्यग्जुहुयात्पूर्णया सह ॥ १८
एकैकाहुतिदानेन संतर्प्य वास्तुदेवताः । समुत्थाप्य हृदा देवमासनं मङ्गलादिभिः ॥ १९
गुरुर्देवाग्रतो गच्छेन्मूर्तिपैश्च दिशि स्थितैः । चतुर्भिः सह कर्ता[9] च देव[10]यानस्य पृष्ठतः ॥ २०
प्रासादादि परिभ्रम्य भद्राख्यद्वारसंमुखम् । लिङ्गं संस्थाप्य दत्त्वाऽर्घ्यं प्रासादं संनिवेशयेत् ॥
द्वारेण द्वारबन्धेन द्वारदेशेन [11]तद्विच्छि(तच्छि(?))ला । द्वारबन्धे शिखाशून्ये तदर्धेनार्थे[12] तद्दते(?)
वर्जयन्द्वारसंस्पर्शं द्वारेणैव महेश्वरम् । देवगृहसमारम्भे कोणेनापि प्रवेशयेत् ॥ २३
अयमेव विधिर्ज्ञेयोऽव्यक्तलिङ्गेऽपि सर्वतः । गृहे प्रवेशनं द्वारे लोकैरपि समीरिता(त)म् ॥ २४
अपद्वारप्रवेशेन विदुर्गोत्रक्षयं गृहम् । अथ पीठे च संस्थाप्य लिङ्गं द्वारस्य संमुखम् ॥ २५
तूर्यमङ्गलनिर्घोषैर्दूर्वाक्षतसमन्वितम् । समुत्तिष्ठ हृदेत्युक्त्वा महापाशुपतं पठेत् ॥ २६
अपनीय घटं श्वभ्राद्देशिको मूर्तिपैः सह । मन्त्रं संधा+रयित्वा तु विलिप्तं कुङ्कुमादिभिः ॥ २७
शक्तिशक्तिमतोरैक्यं ध्यात्वा चैव तु रक्षितम् । (*लयान्तं मूलमुच्चार्य स्पृष्ट्वा श्वभ्रे निवेशयेत् ॥
अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च । अर्धेन वाऽष्टमांशेन सर्वस्याथ प्रवेशनम् ॥ २९
पिधाय सीसकं नाभिर्दीर्घाभिः सुसमाहितः । श्वभ्रं[13] वालुकयाऽऽपूर्य ब्रूयात्स्थिरी भवेति च) ॥
ततो लिङ्गे स्थिरीभूते ध्यात्वा सकलरूपिणम् । मूलमुच्चार्य शक्त्यन्तं स्पृष्ट्वा[14] च निष्कलं न्यसेत्
स्थाप्यमानं यदा[15] लिङ्गं यामीं दिशमथाऽऽश्रयेत् । तत्तद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ३२

---

\+ ल्यबभाव आर्षः । * धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ ख. °ष्टिघोषेण वि° । २ क. ङ. च. °ति स्वा° । ३ ख. °रे ध्रु° । ४ घ. ह्रं । ५ क. ङ. च. °ध्यात्क्रोध° । घ. °ध्याद्रौद्रमु° । ६ क. ङ. च. °र्तायां य° । ख. ग. °र्तानां य° । ७ क. ख. ग. ङ. च. °प्रवालं । ८ क. ङ. च. बन्धुभिः । ९ घ. कर्तव्या देवयज्ञस्य । १० क. ङ. च. °वपालस्य । ११ क. ख. ग. ङ. च. तद्विना । द्वा° । १२ क. ङ. च. °थ घातयेत् । तक्षय° । १३ ख. ग. अथ । १४ ख. स्पृष्ट्वा । १५ ख. यथा ।

सव्यस्थाने च वक्रे च चलिते स्फुटिते[1]ऽथ वा । जुहुयान्मूलमन्त्रेण बहुरूपेण वा शतम् ॥ ३३
किं चान्येष्वपि दोषेषु शिवशान्तिं समाश्रयेत्[2] । उक्तन्यासविधिं लिङ्गे कुर्यादेवं न दोषभाक्॥
पीठबन्धमतः कृत्वा लक्षणस्यांशलक्षणम् । गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीं च विन्यसेत् ॥
संपूर्य पार्श्व[3]संधिं च वालुकावज्रले[4]पतः । ततो मूर्तिधरैः सार्धं गुरुः शा[6]न्तिपटोर्ध्वतः ॥ ३६
[7]संस्नाप्य कलशैरन्यैस्तद्वत्पञ्चामृतादिभिः । विलिप्य चन्दनाद्यैश्च संपूज्य जगदीश्वरम् ॥ ३७
उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया । ततस्त्रितत्त्वविन्यासं षड[8]र्घादिपुरःसरम् ॥ ३८
कृत्वा मूर्तिं तदीशानामङ्गानां ब्रह्मणामथ । ज्ञा[9]नलिङ्गे क्रियापीठे विन्यस्य स्नापयेत्ततः ॥ ३९
गन्धैर्विलिप्य संधूप्य व्यापित्वेन शिवे न्यसेत् । स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च ॥ ४०
विनिवेद्य यथाशक्ति समाचम्य महेश्वरम् । दत्त्वाऽर्घ्यं च जपं कृत्वा निवेद्य वरदे करे ॥ ४१
चन्द्रार्कतारकं यावन्मन्त्रेण शैवमूर्तिपैः । स्वेच्छयैव त्वया नाथ स्थातव्यमिह मन्दिरे ॥ ४२
प्रणम्यैवं बहिर्गत्वा हृदा वा प्रणवेन वा । संस्थाप्य वृषभं पश्चात्पूर्ववद्बलिमाचरेत् ॥ ४३
न्यूनादिदोषमोक्षाय ततो मृत्युजिता शतम् । शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च ॥४४
ज्ञानाज्ञानकृतं यच्च तत्पूरय महाविभो । हिरण्यपशुभूम्यादिगीतवाद्यादिहेतवे ॥ ४५
अम्बिकेशाय तद्भक्त्या शक्त्या सर्वं निवेदयेत् । दानं महोत्सवं पश्चात्कुर्याद्दिनचतुष्टयम् ॥ ४६
त्रिसंध्यं त्रिदिनं मन्त्री होमयेन्मूर्तिपैः सह । चतुर्थेऽहनि पूर्णां च चरुकं बहुरूपिणा ॥ ४७
निवेद्य सर्वकुण्डेषु संपाताहुतिशोधितम् । दिनचतुष्टयं याव[10]न्न निर्माल्यं तदूर्ध्वतः ॥ ४८
निर्माल्यापनयं कृत्वा स्नापयित्वा तु पूजयेत् । पूजा सामान्यलिङ्गेषु कार्या साधारणाणुभिः ॥
विहाय लिङ्गचैतन्यं कुर्यात्स्थाणुविसर्जनम् । असाधारणलिङ्गेषु क्षमस्वेति विसर्जनम् ॥ ५०
आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता । प्रतिष्ठान्ते क्वचित्प्रोक्तं स्थिराद्याहुतिसप्तकम् ॥ ५१
स्थिरस्तथाऽप्रमेयश्चानादिबोधस्तथैव च । नित्योऽथ सर्वगश्चैवाविनाशी [11]दृष्ट एव च ॥ ५२
एते गुणा महेशस्य संनिधानाय कीर्तिताः । ॐ नमः शिवाय स्थिरो भवेत्याहुतीनां क्रमः॥५३
एवमेतच्च संपाद्य विधाय शिवकुम्भवत् । कुम्भद्वयं च तन्मध्यादेककुम्भाम्भसा भवम् ॥ ५४
संस्नाप्य तद्द्वितीयं च कर्तृस्नानाय धारयेत् । दत्त्वा बलिं समाचम्य [12]बहिर्गच्छेच्छिवाज्ञया॥५५
जगतीबाह्यतश्चण्डमैशान्यां दिशि मन्दिरे । धामगर्भप्रमाणे च सुपीठे कल्पितासने ॥ ५६
पूर्ववन्न्यासहोमादि विधाय ध्यानपूर्वकम् । संस्थाप्य विधिवत्तत्र ब्रह्माङ्गैः पूजयेत्ततः ॥ ५७
अङ्गानि पूर्वमुक्ता[13]नि ब्रह्मा[14]णि त्वणुना यथा[15] ॥ ५८

ए(ॐ) वं सद्योजाताय हूं फट्, नमः । [16]ॐ विं वामदेवाय हूं फट्, नमः । [17]ॐ वुम्, अघोराय हूं फट्, न[18]मः । ओम्, एवं (एवम्, ॐ)चें (वें)तत्पुरुषा[19]य, वोमीशानाय च हूं फट्[20], नमः ॥

---

१ घ. °तेऽपि वा । २ घ. °त् । युक्तन्यासादिभिर्लिङ्गं कुर्वन्नेवं । ३ घ. °श्वसंसिद्धिं वा° । ४ ख. ग. घ. °पनम् । त° । ५ घ. शान्तिं घटो° । ६ ख. ग. °न्तिघटो° । ७ ग. संस्थाप्य । ८ घ. °डर्चादि° । ९ घ. ज्ञानी लिं° । १० घ. °वत्तन्निर्मा° । ११ ख. ग. तृप्त । १२ क. ङ. च. बहिः कुम्भे शिवा° । १३ क. ङ. च. °नि ब्राह्मणत्वर्चना । १४ ङ. °ह्माणी त्वर्चना । १५ क. ङ. च. °था । ॐ स° । १६ क. ङ. च. ॐ वा° । १७ क. ङ. च. ॐ अ° । १८ क. ङ. च. °मः । एवं चें । घ. °मः । ॐ त° । १९ ख. ग. °य नमः । ओर्मा° । २० क. घ. ङ. च. °ट् । ज° ।

जपं निवेद्य संतर्प्य विज्ञाप्य नतिपूर्वकम् । देवः संनिहितो यावत्तावत्त्वं संनिधो भव ॥ ६०
न्यूनाधिकं च यत्किंचित्कृतमज्ञानतो मया । त्वत्प्रसादेन चण्डेश तत्सर्वं परिपूरय ॥ ६१
बाणलिङ्गे बाणरोहे सिद्धलिङ्गे स्वयंभुवि । प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ ६२
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि । अभ्यर्च्य चण्डं ससुतं यजमानं हि भार्यया ॥ ६३
पूर्वस्थापितकुम्भेन स्नापयेत्स्नापकः स्वयम् । स्थापकं[1] यजमानोऽपि संपूज्य च महेशवत् ॥ ६४
वित्तशाठ्यं विना दद्याद्भूहिरण्यादिदक्षिणाम् । मूर्तिपान्विधिवत्पश्चाज्जापकान्ब्राह्मणांस्तथा ६५
दैवज्ञं शिल्पिनं प्राच्यं दीनानाथादि भोजयेत् । यदत्र संमुखीभावे खेदितो भगवन्मया ॥ ६६
क्षमस्व नाथ तत्सर्वं कारुण्याम्बुनिधे मम । इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ६७
प्रतिष्ठापुण्यसद्भावं स्फुरत्तारकसप्रभम् । कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ६८
ततः पाशुपतं[2] जप्त्वा प्रणम्य परमेश्वरम् । ततोऽपि बलिभिर्भूतान्संनिधाय निबोधयेत् ॥ ६९
स्थातव्यं भवता[3] तावद्यावत्संनिहितो हरः । (*गुरुर्वस्त्रादिसंयुक्तं गृह्णीयाद्यागमण्डपम् ॥ ७०
सर्वोपकरणं शिल्पी तथा[4] स्नापनमण्डपम् ।) अन्ये देवादयः स्थाप्या मन्त्रैरागमसंभवैः ॥ ७१
आदिवर्णस्य[5] भेदाद्वा सुतत्त्वव्याप्तिभाविताः । साध्यप्रमुखदेवाश्च सरिदोषधयस्तथा ॥ ७२
क्षेत्रपाः किंनराद्याश्च पृथिवीतत्त्वमाश्रिताः । (+स्थानं[6] सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ७३
भुवनाधिपतीनां च स्थानं[7] यत्र व्यवस्थितिः । अण्डवृद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ७४
तन्मात्रादिप्रधानान्तं पदमेतत्त्रिकं[8] हरेः । नाट्येशगणमातॄणां यक्षेशशरजन्मनाम् ॥ ७५
अण्डजाः शुद्धविद्यान्तं पदं गणपतेस्तथा । मायांशदेशशक्त्यन्तं शिवाशिवो[9]प्ररोचिषाम् ) ॥ ७६
पदमीश्वरपर्यन्तं व्यक्ताचासु च कीर्तितम् । कूर्माद्यं कीर्तितं यच्च यच्च रत्नादिपञ्चकम् ॥ ७७
प्रक्षिपेत्पीठगर्तायां[10][11] पञ्चब्रह्मशिलां विना । षड्भिर्विभाजिते गर्ते त्यक्त्वा भागं च पृष्ठतः ॥ ७८
स्थापनं पञ्चमांशे च यदि वा वसुभाजिते । स्थापनं सप्तमे भागे प्रतिमासु सुखावहम् ॥ ७९
धारणाभिर्विशुद्धिः स्यात्स्थापने लेपचित्रयोः । स्नानादि मानसं तत्र शिलारत्नादिवेशनम् ८०
नेत्रोद्घाटनमन्त्रेष्टमासनादिप्रकल्पनम् । पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥ ८१
विधिस्तु चललिङ्गेषु संप्रत्येव निगद्यते । पञ्चभिर्वा त्रिभिर्वाऽपि पृथक्[12]कुर्याद्विभाजिते ॥ ८२
(*भागत्रयेण भागांशो भवेद्भागद्वयेन वा[13] । स्वपीठेष्वपि तद्वत्स्याल्लिङ्गेषु तत्त्वभेदतः ॥ ८३
सृष्टिमन्त्रेण संस्कारो विधिवत्स्फाटिकादिषु । किं च ब्रह्मशिलारत्नप्रभूतेश्चानिवेदनम् ॥ ८४
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् । स्वयंभूबाणलिङ्गादौ संस्कृतौ नियमो न हि ॥ ८५
स्नापनं संहितामन्त्रैर्न्यासं होमं च कारयेत् । नदीसमुद्ररोहाणां स्थापनं पूर्ववन्मतम् ॥ ८६
ऐहिकं मृन्मयं लिङ्गं पिष्टिकादि च तत्क्षणात् । कृत्वा संपूजयेच्छुद्धं दीक्षणादिविधानतः ॥ ८७

* धनुश्चिह्नान्तर्गतं क. ङ. च. पुस्तकेषु नास्ति । + धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

१ ख. स्नापकं । २ घ. °पतोपेतं प्र° । ३ ख. भावतां । ४ ख. °था स्थाप° । ५ क. ङ. च. °स्य शेषत्वात्स्वत° । ६ घ. स्नानं । ७ ख. ग. °नं त्रयव्य° । ८ ख. ग. °मेकं त्रिकं । ९ ख. °वो गुरोऽर्चिषा° । १० ख. °टसक्तायां । ग. °टरक्तायां । ११ घ. °गर्तं च प° । १२ ख. पृथक्क्षीणविभा° । १३ ख. ग. दा । सुपीठे स्वापिते तद्वल्लि° ।

समादाय ततो मन्त्रानात्मानं संनिधाय च । तज्जले प्रक्षिपेल्लिङ्गं वत्सरात्कामदं भवेत् ॥ ८८
विष्ण्वादिस्थापनं चैव पृथङ्मन्त्रैः समाचरेत् ॥ ८९

इत्यादिमहापुराण आग्नेये शिवप्रतिष्ठाविधिकथनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२६

---

अथाष्टनवतितमोऽध्यायः ।

---

## गौरीप्रतिष्ठाविधिः ।

ईश्वर उवाच—

वक्ष्ये गौरीप्रतिष्ठां च पूजया सहितां शृणु । मण्डपाद्यं पुरो यच्च संस्थाप्य चाधिरोपयेत् ॥ १
शय्यायां [1]तांश्च विन्यस्य मन्त्रान्मूर्त्यादिकान्गुह । आत्मविद्याशिवान्तं च कुर्या[2]दीशनिवेशनम्॥ २
शक्तिं [3]परां ततो न्यस्य हुत्वा जप्त्वा च पूर्ववत् । संधाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम्
सदेशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा । एवं संस्थाप्य तां पश्चाद्देवीं तस्यां नियोजयेत्
परशक्तिस्वरूपां तां स्वाणुना शक्तियोगतः । ततो न्यसेत्क्रियाशक्तिं पीठे ज्ञानं च विग्रहे ॥ ५
ततोऽपि व्यापिनीं शक्तिं समावाह्य नियोजयेत् । [4]अम्बिकां शिवनाम्नीं च समालभ्य प्रपूजयेत्[5] ६
ओम्, आधारशक्त[6]ये नम[7]ः । ॐ कूर्माय नमः । ॐ स्कन्दाय च तथा नमः । ॐ [8]ह्रीं नारायणाय
नमः । ओम्, ऐश्वर्याय नमः । [9]ओम्, अधच्छदनाय नमः ॥ ७
ॐ पद्मासनाय नमोऽथ संपूज्याः केशवांस्तथा ॥ ८
ॐ [10]ह्रीं कर्णिकायै नमः । ॐ क्षं पुष्करा‍क्षेभ्य इहार्चयेत् ॥ ९
ॐ ह्रां पु[11]ष्ट्यै ह्रीं च ज्ञानायै ह्रूं क्रियायै ततो नमः ॥ १०
ॐ नालाय न[12]मः । [13]ॐ रुं धर्माय न[14]मः । रुं ज्ञानाय वै नमः । ॐ वैराग्याय न[15]मः । [16]ॐ वै, अध-
र्माय नमः । ॐ रुम्, अज्ञानाय वै नमः । ओम्, अवैराग्याय वै नमः । अम्, अनैश्वर्याय नमः
[17]ह्रूं वाचे [18]ह्रूं च रागिण्यै [19]ह्रूं ज्वालिन्यै ततो नमः । ॐ ह्रौं शमायै च नमो [20]ह्रूं ज्येष्ठायै ततो नमः
ॐ [21]ह्रौं रौं क्रौं नव[22]शक्त्यै गौं च गौर्यासनाय च । गौं गौरीमूर्तये नमो गौर्या मूलमथोच्यते १३
ॐ ह्रीं सः, महागौरि रुद्रदयिते स्वाहा गौर्यै न[23]मः ॥ १४
ॐ गां [24]ह्रूं ह्रीं शिवो गूं स्याच्छिखायै कवचाय च । गौं नेत्राय च [25]गौम्, अस्त्राय ॐ [26]गौं
विज्ञानशक्तये ॥ १५

---

१ ख. ग. तां च वि° । २ ख. ग. °दीशे नि° । ३ ख. ग. परापरां न्य° । ४ ख. ग. अमुके शिविना° । ५ ख. ग. °त् । आ° । ६ ख. ग. °ये च न° । ७ ख. ग. °मः । स्क° । ८ ख. ग. हुं । ९ ख. ओम्, अम्, अधष्टदलच्छ° । १० ख. ग. हं । ११ ख. °ष्ट्यै, ॐ नाला° । १२ घ. °मः । रुं । १३ ख. ॐ ध° । १४ ख. °मः । ज्ञा° । ग. °मः । सज्ञा° । १५ ग. °मः । ह्रूं वा° । १६ ख. ॐ ह्रूं वा° । १७ घ. हुं । १८ घ. हुं । १९ घ. कै । २० घ. ह्रूं । २१ ख. ग. ह्रौं रौं द्रौं न° । २२ ख. ग. शक्ताश्च गौं । २३ घ. °मः । गां । २४ ख. ग. ह्रूं गी शिवां गूं । २५ ख. ग. गोस्त्रा° । २६ ख. ग. गीं ।

ॐ गूं क्रियाशक्तये नमः पूर्वादौ शक्रादिकान्। ॐ सुं सुभगायै नमो ह्रीं बीजललिता ततः॥
ॐ ह्रीं कामिन्यै च नम ॐ ह्रूं स्यात्कामशालिनी।मन्त्रैर्गौरीं प्रतिष्ठाप्य प्राच्य जप्त्वाऽथ सर्वभाक्

इत्यादिमहापुराण आग्नेये गौरीप्रतिष्ठाविधिकथनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४३

---

अथ नवनवतितमोऽध्यायः ।

---

सूर्यप्रतिष्ठाविधिः ।

ईश्वर उवाच—

वक्ष्ये सूर्यप्रतिष्ठां च पूर्ववन्मण्डपादिकम् । स्नानादिकं च संपाद्य पूर्वोक्तविधिना ततः ॥ १
विद्यासनशय्यायां साङ्गं विन्यस्य भास्करम् । त्रितत्त्वं विन्यसेत्तत्र सं(स)स्वरं खादिपञ्चकम्
शुद्ध्यादि पूर्ववत्कृत्वा पिण्डीं संशोध्य पूर्ववत् । सदेशपदपर्यन्तं विन्यस्य तत्त्वपञ्चकम् ॥ ३
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत्ततः । स्वाणुना विधिवत्सूर्यं शक्त्यन्तं स्थापयेद्गुरुः
स्वाम्यन्तमथ वाऽऽदित्यं पादान्तं नाम धारयेत् । सूर्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च

इत्याग्नेये महापुराणे सूर्यप्रतिष्ठाविधिकथनं नाम नवनवतितमोऽध्यायः ॥ ९९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४८

---

अथ शततमोऽध्यायः ।

---

द्वारप्रतिष्ठाविधिः ।

ईश्वर उवाच—

द्वाराश्रितप्रतिष्ठायां वक्ष्यामि विधिमप्यथ । द्वाराङ्गाणि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १
मूलमध्याग्रभागेषु त्रयमात्मादिसेश्वरम् । विन्यस्य संनिवेश्याथ हुत्वा जप्त्वाऽत्र रूपतः॥ २
द्वारादथो यजेद्वास्तुं तत्रैवानन्तमन्त्रतः । रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिमहातिलाः । गोमृत्सर्षपरागेन्द्रमोहनीलक्ष्मणामृताः ॥ ४
रोचनारुग्वचो दूर्वा प्रासादाधश्च पोटलीम् । प्रकृत्योदुम्बरे बद्ध्वा रक्षार्थं प्रणवेन तु ॥ ५
द्वारमुत्तरतः किंचिदाश्रितं संनिवेशयेत् । आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं च शाखयोः ॥ ६
शिवमाकाशदेशे च व्यापकं सर्वमण्डले । ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः ॥ ७
द्वाराश्रितांश्च तल्पादीन्कृतयुक्तैः स्वनामभिः । जुहुयाच्छतमर्धं वा द्विगुणं शक्तितोऽथ वा ॥ ८
न्यूनादिदोषमोक्षार्थं हेतितो जुहुयाच्छतम् । दिग्बलिं पूर्ववद्दत्त्वा प्रदद्याद्दक्षिणादिकम् ॥ ९

इत्यादिमहापुराण आग्नेये द्वारप्रतिष्ठाविधिकथनं नाम शततमोऽध्यायः ॥ १०० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२५७

---

१ ख. ग. ॐ भूक्रि° । २ ख. खं । ३ ख. ग. नमः, ॐ ह्रीं बीजालताय नमः । ॐ° । ४ ख. ग. °द्यादास° । ५ ख. °शपाद° । ६ ख. ग. °त्यं यदा तन्नाम । ७ ख. ग. °ष्ठायां व° । ८ ख. ग. °तः । चन्द्रादि° । ९ ख. ग. °द्वात्मका° । १० ख. ग. °द्धिसहा° । ११ ख. °नाममुरा दू° । ग. °ना रसदूर्वा प्राप्रासा° । १२ ख. पोच्छुलीम् । ग. पाच्छुलीम् । १३ ख. ग. °म् । कृतौ द्वौदु° । १४ घ. °बद्धुत्वा प्र° ।

अथैकाधिकशततमोऽध्यायः ।

---

## प्रासादप्रतिष्ठा ।

ईश्वर उवाच—)

प्रासादस्थापनं वक्ष्ये तच्चैतन्यसुयोगतः[1] । शुकनाशासमाप्तौ[2] तु पूर्ववेद्याश्च[3] मध्यतः ॥ १
आधारशक्तितः पद्मे विन्यस्ते[4] प्रणवेन च । स्वर्णाद्येकतमोद्भूतं पञ्चगव्येन संयुतम् ॥ २
मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम्[5] । सवस्त्रं गन्धलिप्तं च गन्धवत्पुष्पधूपितम् ॥ ३
चूतादिपल्लवानां च[6] कृती कृत्यं च विन्यसेत् । पूरकेण समादाय सकलीकृत[7]विग्रहः ॥ ४
सर्वात्माभिन्न[8]मात्मानं स्वाणुना स्वान्तमारुतः । आज्ञायाऽऽरोधयेच्छंभौ[9] रेचकेन ततो गुरुः ॥ ५
द्वादशान्तात्समादाय स्फुरद्वह्निकणोपमम् । निक्षिपेत्कुम्भगर्भे च न्यस्ततत्रातिवाहिकम् ॥ ६
विग्रहं तद्गुणानां च बोधकं च कलादिकम् । * क्षान्तं वागीश्वरं[10] तत्तु त्रातं[11] तत्र निवेशयेत् ॥ ७
दश नाडीर्दश प्राणानिन्द्रियाणि त्रयोदश । तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः ॥ ८
स्वकार्यकारणत्वेन मायाकाशनियामिकाः[12] । विद्येशान्प्रेरकाञ्शंभुं व्यापिनं च सुसंवरैः ॥ ९
अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया । सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगम् ॥ १०
पञ्चगव्यकषायाद्यैः पूर्ववत्संस्कृतं ततः । शय्यायां कुम्भमारोप्य ध्यात्वा रुद्रमुमापतिम् ॥ ११
तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत् । संनिधानाय होमं च प्रोक्षणं स्पर्शनं जपम् ॥ १२
सांनिध्य[13]बोधनं सर्वं भागत्रयविभागतः । विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत् ॥ १३

इत्यादिमहापुराण आग्नेये प्रासादप्रतिष्ठावर्णनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

**आदितः श्लोकानां समष्ट्यङ्काः—३२७०**

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

## ध्वजारोपणम् ।

ईश्वर उवाच—

चूलके ध्वजदण्डे च ध्वजे देवकुले तथा । प्रतिष्ठा च यथोद्दिष्टा तथा स्कन्द वदामि ते[14] ॥ १
(+कभागार्धप्रवेशाद्वा यद्वा सर्वार्धवेशनात् । ऐष्टके दारुजः शूलः शैलजे धाम्नि शैलजः) ॥ २
वैष्णवादौ च चक्राढ्यः[15] कुम्भः स्यान्मूर्तिमानतः । स च त्रिशूलयुक्तस्तु अग्रचूलाभिधो मतः ३
ईशशूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः । बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥ ४
चित्रो ध्वजश्च जङ्घातो[16] यथा जङ्घार्धतो भवेत् । भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया ॥ ५

---

* इदमर्ध क. ङ. च. पुस्तकेषु नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

---

१ घ. °तन्य स्त्रयो° । २ च. °नासास° । ३ क. ङ. च. तु पूर्व° । ४ ख. ग. °न्यसेत्प्रण° । ङ. °न्यस्य प्र° । ५ घ. °म् । स्रग्वस्त्रं । ६ क. च. च चक्रीकृत्य युवस्पृशेत् । ङ. च वक्रीकृत्यमुपस्पृशेत् । ७ क. ख. ग. ङ. च. °कृत्यवि° । ८ घ. °र्वात्माभि° । ९ क. ङ. च. आज्ञामारोपयेद्धस्तौ रे° । घ. आज्ञया बोध° । १० ख. ग. वामेश्वरं । ११ घ. त्रातं । १२ ख. ग. °यामकाः । १३ क. घ. ङ. च. °निध्याबो° । १४ घ. ते । तडागा° । १५ क. ङ. चक्रादौ । ख. ग. चक्राद्यः । १६ चैत्राद्यः । क. जङ्घाता । ख. ङ. संगाता ।

महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः । शक्रैर्ग्रहै रसैर्वाऽपि हस्तैर्दण्डस्तु संमितः ॥ ६
उत्तमादिक्रमेणैव विज्ञेयः सूरिभिस्ततः । वंशजः[1] शालजादिर्वा स दण्डः सर्वकामदः ॥ ७
अयमारोप्यमाणस्तु भङ्गमायाति वै यदि । राज्ञोऽनिष्टं विजानीयाद्यजमानस्य वा तथा ॥ ८
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् । द्वारपालादिपूजां च मन्त्राणां तर्पणं तथा ॥ ९
विधाय चूलकं[2] दण्डं स्नापयेदस्त्रमन्त्रतः । अनेनैवोक्तमन्त्रेण ध्वजं संप्रोक्ष्य देशिकः ॥ १०
मृत्कषायादिभिः स्नानं प्रासादं कारयेत्ततः । विलिप्य[3] रसमाच्छाद्य शय्यायां न्यस्य पूर्ववत् ॥
*चूलके[4] लिङ्गवन्न्यासो न[5] च ज्ञानं न च क्रिया । विशेषार्था चतुर्थी च न[6] च कुण्डस्य[7] कल्पना
दण्डे तथा[8]ऽर्थतत्त्वं च विद्यातत्त्वं द्वितीयकम् । सद्योजाता[9]दिवक्त्राणि शिवतत्त्वं पुनर्ध्वजे ॥ १३
निष्कलं च शिवं तत्र न्यस्याङ्गानि प्रपूजयेत् । चूलके[10] च ततो मन्त्री सांनिध्ये[11] संहिताणुभिः १४
होमयेत्प्रतिभागं च ध्वजे तैस्तु फडन्तकैः । अन्यथाऽपि कृतं यच्च ध्वजसंस्कारणं क्वचित् ॥ १५
अस्त्रयागविधा[12]वेवं तत्सर्वमुपदर्शितम् । प्रासादे कारिते[13]स्थाने स्रग्वस्त्रादिविभूषिते ॥ १६
जङ्घा वेदी तदूर्ध्वे तु त्रितत्त्वादि निवेश्य च । होमादिकं विधायाथ शिवं संपूज्य पूर्ववत् ॥ १७
सर्वतत्त्वमयं ध्यात्वा शिवं च व्यापकं न्यसेत् । अनन्तं कालरुद्रं च विभाव्य च पदाम्बुजे ॥ १८
कूष्माण्डहाटकौ पीठे पातालनरकैः सह । भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम् ॥ १९
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायां च विभावयेत् । वारितेजोनिलव्योमपञ्चाष्टकसमन्वितम् ॥ २०
सर्वावरणसंज्ञं च[14] बुद्धियोन्यष्टकान्वितम् । योगाष्टकसमायुक्तं नाशावधि गुणत्रयम् ॥ २१
पटस्थं[15] पुरुषं सिंहं वामं[16] च परिभावयेत् । मञ्जरीवेदिकायां च विद्यादिकचतुष्टयम् ॥ २२
कण्ठे मायां[17] सरुद्रां च विद्याश्चामलसारके । कलशे चेश्वरं बिन्दुं विद्येश्वरसमन्वितम् ॥ २३
जटाजूटं च तं विद्याच्छूलं चन्द्रार्धरूपकम् । शक्तित्रयं च तत्रैव दण्डे नादं विभाव्य च ॥ २४
ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत् । जगत्यां[18] वाऽथ संधाय लिङ्गं[19] पिण्डिकयाऽथ वा
समुत्थाप्य[20] सुमन्त्रैश्च विन्यस्ते[21] शक्तिपङ्कजे । न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २६
यजमानो ध्वजे लग्ने[22] बन्धुमित्रादिभिः सह । धाम[23] प्रदक्षिणीकृत्य लभते फलमीहितम् ॥ २७
+गुरुः[24] पाशुपतं ध्यायन्स्थिरमन्त्रा[25]धिपैर्युतम् । अधिपाञ्शस्त्रयुक्तांश्च रक्षणाय निबोधयेत् ॥ २८
ऊनादिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् । गुरवे दक्षिणां दद्याद्यजमानो दिवं व्रजेत् २९
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः । तावद्युगसहस्राणि कर्तुर्भोगभुजः फलम् ॥ ३०

इत्यादिमहापुराण आग्नेये ध्वजारोपणादिविधिकथनं नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३००

* इदमर्धं क ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ ख °जः साल° । २ क. ङ. च. चूतकं । ख. धूलकं । ३ क. ङ. च. °प्य च समासाद्य । ४ घ. चूडके । ५ ख. ग. न चाज्ञान च सत्क्रिया । ६ क. ङ. च. नवचण्ड° । ७ ग. कुम्भस्य । ८ क. ङ. च. तथाऽऽत्मत° । घ. तयाऽर्थ° । ९ ख. ग. °तानि चक्राणि । घ. °तानि वक्त्राणि । १० क. ङ. च. चूतके । घ. चूडके । ११ क. °निध्येऽङ्गदितात्मभिः । ङ. च. °निध्योङ्गहितात्मभिः । १२ ख. ग. °यागं विधायैवं । १३ घ. °रिते स्था° । १४ ग. च वृद्धियो° । घ. च वृद्धयो° । १५ ङ. च. पुटस्थं । १६ क. ङ. च. रागं । १७ क. ङ. च. मायाधवक्रं च । १८ ख. °त्वा चाथ १९ क. ङ. च. लिङ्गपि° । २० ख. ग. समुत्थाय । २१ ख. ग. °न्यसेच्छक्ति° । २२ क. ख. ग. ङ. च. लग्नौ । २३ क. ङ. च. वाम । ख. ग. वामे । २४ ख. ग. गुरुं । २५ ख. °न्त्रादिभिर्यु° ।

अथ त्र्यधिकशततमोऽध्यायः ।

## जीर्णोद्धारविधिः ।

ईश्वर उवाच—
जीर्णादीनां च लिङ्गानामुद्धारं विधिना वदे । लक्ष्मोज्झितं च भग्नं च स्थूलं वज्रहतं तथा ॥ १
संपुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकम् । इत्यादिदुष्टलिङ्गानां त्याज्या पिण्डी तथा वृषः ॥ २
चालितं चलितं निम्नमत्यर्थं विषमस्थितम् । दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा ॥ ३
एवंविधं च संस्थाप्य निर्व्रणं च भवेद्यदि । *नादेयेन प्रवाहेण तद्पाक्रियते यदि ॥ ४
ततोऽन्यत्रापि संस्थाप्य विधिदृष्टेन कर्मणा । सुस्थितं चास्थितं वाऽपि शिवलिङ्गं न चालयेत् ५
शतेन स्थापनं कुर्यात्सहस्रेण तु चालनम् । पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् ॥ ६
याम्ये मण्डपमीशे चैं प्रत्यग्द्वारैकतोरणम् । विधाय द्वारपूजादि स्थण्डिले मन्त्रपूजनम् ॥ ७
दिग्बलिं च बहिर्गत्वा समाचम्य स्वयं गुरुः । ब्राह्मणान्भोजयित्वा तु शंभुं विज्ञापयेत्ततः ॥ ८
दुष्टं लिङ्गमिदं शंभो शान्तिरुद्धरणस्य चेत् । रुचिस्तवास्ति विधिना अधितिष्ठ च मां शिव ॥ ९
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् । मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ॥ १०
ततो लिङ्गं च संस्थाप्य पूजयेत्स्थण्डिले तथा । +ॐ व्यापकेश्वरायेति तत्त्वेनात्यन्तवादिना ११
ॐ व्यापकेश्वराय हृदयाय नमः । ॐ व्यापकेश्वराय शिरसे नमः । इत्याद्यङ्गमन्त्राः ॥ १३
ततस्तत्राऽऽश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः । सत्त्वः कोऽपीह यः कश्चिल्लिङ्गमाश्रित्य तिष्ठति ॥ १४
लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु । विद्याविद्येश्वरैर्युक्तः शंभुरत्र भविष्यति ॥ १५
सहस्रं प्रतिभागे(गं) च ततः पाशुपताणुना । हुत्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत्ततः १६
दत्त्वाऽर्घं(र्घ्यं) च विलोमेन तत्त्वतत्त्वाधिपांस्ततः । अष्टमूर्तीश्वराल्लिङ्गपिण्डिकासंस्थितान्गुरुः १७
विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा । रज्ज्वा बद्ध्वा तया नीत्वा शिवमन्त्रं गृणञ्जनैः १८
तज्जले निक्षिपेन्मन्त्री पुष्ट्यर्थं जुहुयाच्छतम् । तृप्तये दिक्पतीनां च वास्तुशुद्ध्यै शतं शतम् ॥ १९
रक्षां विधाय तद्धाम्नि महापाशुपतास्त्रतः । लिङ्गमन्यत्ततस्तत्र विधिवत्स्थापयेद्गुरुः ॥ २०
असुरैर्मुनिभिर्गोत्रैस्तन्त्रविद्भिः प्रतिष्ठितम् । जीर्णं वाऽप्यथ वा भग्नं विधिनाऽपि न चालयेत् २१
एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ । खड्गे मन्त्रगणं न्यस्य कारयेन्मन्दिरान्तरम् ॥ २२
संकोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः । तद्द्रव्यं श्रेष्ठद्रव्यं वा तत्कार्यं तत्प्रमाणकम् ॥ २३

इत्यादिमहापुराण आग्नेये जीर्णोद्धारविधिकथनं नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३२२

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

---

१ घ. योज्या । २ घ. °तं लिङ्गम° । ङ. °तं चैवम° । ३ घ. °दि । नद्यादिकप्र° । ४ क च. °तं घटितं । घ. °तं दुःस्थितं । ङ. °तं दूषितं । ५ घ. वा । ६ क. च. °लेयं प्रपू° । ख. ग. °लेशप्रपू° । ङ. °ले यन्त्रं° । ७ घ. °वादिवि° । ८ घ. °ष्ठस्व मां । ८ घ. °ति नालन्तं शिववा° । ९ घ. °पकं हृदयेश्वराय न° । १० ख. ग. इत्यभ्यङ्ग° । ११ ख. ग. °तं मन्त्रं धारये° । १२ घ. °मस्ततः । १३ ख. ग. °तः । मत्तः कोऽ° । १४ क. ग. ङ. च. यः कोऽपि लिङ्ग° । १५ ख. घ. ङ. च. °क्तः स भवोऽत्र । १६ ख ग. °तः । मूर्तिमू° । १७ ख. ग. °लिङ्गे पि° । १८ घ. °शुद्धौ श° । १९ ख. ग. तन्नाम्नि । २० ख. ग. °भिर्देवैस्तत्त्ववि° । २१ क. ङ. च. खड्गम° । २२ ख. ग. मन्त्रागतं न्य° । २३ क. ङ. च व्याप्य ।

अथ चतुरधिकशततमोऽध्यायः ।

---

## प्रासादलक्षणम् ।

ईश्वर उवाच—

वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज । चतुर्भागीकृते क्षेत्रे भित्तेर्भागेन विस्तरात् ॥ १
*अद्रिभागेन(ण) गर्भः स्यात्पिण्डिका पादविस्तरात् । पञ्चभागीकृते चापि मध्यभागे तु पिण्डिका
शुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात् । भागौ द्वौ मध्यमे गर्भे ज्येष्ठे भागद्वयेन तु ॥ ३
त्रिभिस्तु कंन्यांसो(?) गर्भः शेषभित्तिरिति क्वचित् । षोढा भक्तेऽथ वा क्षेत्रे भित्तिर्भागैकविस्तरात्
गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका । विस्ताराद्द्विगुणो वाऽपि सपादद्विगुणोऽपि वा ५
अर्धार्धद्विगुणो वाऽपि त्रिगुणः क्वचिदुच्छ्रयः । जगती विस्तरार्धेन त्रिभागेन(ण) क्वचिद्भवेत् ॥ ६
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः । परिधिस्त्र्यंशको मध्यो रथकास्तत्र कारयेत् ॥ ७
चामुण्डभैरवं तेषु नाट्येशं च निवेशयेत् । प्रासादार्धेन देवानामष्टौ वा चतुरोऽपि वा ॥ ८
प्रदक्षिणावहाः कु(ह्यान्कु)र्यात्प्रासादादिषु वानराः(न्) । आदित्याः पूर्ववत्स्थाप्याः स्कन्दोऽ-
ग्निर्वायुगोचरे ॥ ९
एवं यमादयो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः । चतुर्धा शिखरं कृत्वा शुकनासा द्विभागिका
तृतीये वेदिका त्वग्रेः सकण्ठोऽमलसारकः । वैराजः पुष्पकश्चान्यः कैलासो मणिकस्तथा ॥ ११
त्रिविष्टपश्च पञ्चैव मेरुमूर्धनि संस्थिताः । चतुरस्रस्तु तत्राऽऽद्यो द्वितीयोऽपि तदायतः ॥ १२
वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः । एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च ॥ १३
प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा । विमानं च तथा भद्रः सर्वतोभद्र एव च ॥ १४
चरुको नन्दको नन्दिर्वर्धमानस्तथाऽपरः । श्रीवत्सश्चेति वैराजान्वयाये च समुत्थिताः ॥ १५
बलभी गृहराजश्च शालागृहं च मन्दिरम् । विशालश्चमसो ब्रह्ममन्दिरं भुवनं तथा ॥ १६
प्रभवः शिबिका वेश्म नवैते पुष्पकोद्भवाः । वलयो दुन्दुभिः पद्मो महापद्मक एव च ॥ १७
वर्धनी वान्य उष्णीषः शङ्खश्च कलशस्तथा । खवृक्षश्च तथाऽप्येते वृत्ताः कैलाससंभवाः ॥ १८
गजोऽथ वृषभो हंसो गरुत्मानृक्षनायकः । भूषणो भूधरश्चान्यः श्रीजयः पृथिवीजरः ॥ १९
वृत्तायतात्समुद्भूता नवैते मणिकाह्वयात् । वज्रं चक्रं तथा चान्यत्स्वस्तिकं वज्रस्वस्तिकम् ॥ २०
+चित्रं स्वस्तिकखड्गं च गदा श्रीकण्ठ एव च । विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः ॥ २१
नगराणामिमाः संज्ञा लाटादीनामिमास्तथा । ग्रीवार्धेनोन्नतं चूलं पृथुलं स्वत्रिभागतः ॥ २२

---

* इदमर्धं ख. ग. पुस्तकयोर्नास्ति । + इदमर्धं नास्ति क. ड. च. पुस्तकेषु ।

---

१ ख. ग. °दमानस्य ल° । २ घ. °ते क्षेत्रेऽन्तर्भागे । ३ क. ड. च. °ध्यमो गर्भो ह्येष भा° । ख. ग. °ध्यमो गर्भो ज्ये° । ४ घ. कंन्यसा ग° । ५ क. ड. च. °न्यासा ग° । ६ क. ङ. च. अध्यर्ध° । ७ ख. ग. °चित्क्वचित् । ८ ख. ग. घ. °क्षिणां बहिः कु° । ९ ख. °दिक्षु वा° । १० घ. वा न वा । आ° । ११ क. ड. च. °का विप्रे स° । ख. ग. °का त्वग्रे स° । १२ ख. °मरसा° । १३ क. घ. ड. च. °ष्टपं च प° । १४ ख. ग. नन्दनो । घ. नन्दिको । १५ ख. °ताः । बलभीगृह° । १६ घ. ड. °श्चे समो ब्र° । १७ क. ड. च. च । पद्मालो वान्यदुष्टाश्वः खड्गाश्च क° । ख. ग. च । सकुली बाल्यवक्रीशः शृङ्गाक्षः क° । १८ ख. ग. °अहस्तक° । १९ ख. ग. °मू ↓ चक्रस्व° । २० क. ङ. च. चूर्ण । २१ क. च. °लं च त्रि° । घ. °लं च विभा° ।

दशधा वेदिकां कृत्वा पञ्चभिः स्कन्द विस्तरः । त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकम्[1]॥
दिक्षु द्वाराणि कार्याणि न विदिक्षु कदाचन । पिण्डिका कोणविस्तीर्णा मध्यमान्ता ह्युदाहृता ॥
क्वचित्पञ्चमभागेन महतां[2] गर्भपादतः । उच्छ्रायो[3] द्विगुणस्तेषामन्यथा वा निगद्यते ॥ २५
षष्ट्याऽधिकात्समारभ्य अङ्गुलानां शतादिह । उत्तमान्यपि चत्वारि द्वाराणि दशहानितः २६
त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यधः[4] । उच्छ्रयार्धेन विस्तारो ह्युच्छ्रायो[5] ह्यधिकस्त्रिधा[6] ॥
चतुर्भिरष्टभिर्वाऽपि दशभिर्वाऽङ्गुलैः[7] शुभः । उच्छ्रायात्पादविस्तीर्णाः[8] शाखास्तद्वदुदुम्बरौ(रे)[9] ॥
विस्तारार्धेन बाहुल्यं सर्वेषामेव कीर्तितम्[10] । त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम्[11] ॥ २९
अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् । मिथुनैः पादवर्णाभिः शाखाशेषं विभूषयेत् ॥ ३०
स्तम्भविद्धे भृत्यता स्याद्वृक्षविद्धे त्वभूतिता । कूपविद्धे भयं द्वारे क्षेत्रविद्धे धनक्षयः ॥ ३१
प्रासादगृहशालादिमार्ग[12]विद्धेषु बन्धनम् । सभा[13]विद्धेन दारिद्र्यं वर्ण[14]विद्धे निराकृतिः ॥ ३२
उलूखलेन दारिद्र्यं शिला[15]विद्धेन शत्रुता । छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥ ३३
छेदादुत्पाटनाद्वाऽपि तथा प्राकारलक्षणात् । सीमाया द्विगुणत्यागाद्वेधदोषो न जायते ॥ ३४

इत्यादिमहापुराण आग्नेये सामान्यप्रासादलक्षणकथनं नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३५६

---

अथ पञ्चाधिकशततमोऽध्यायः ।

---

## गृहादिवास्तुकथनम् ।

ईश्वर उवाच—

नगरग्रामदुर्गादौ[16] गृहप्रासादवृद्धये । एकाशीतिपदैर्वास्तुं[17][18] पूजयेत्सिद्धये ध्रुवम् ॥ १
प्रागास्या दशधा नाड्यस्तासां नामानि च ब्रुवे । शान्ता यशोवती कान्ता विशाला प्राणवाहिनी
सती वसुमती नन्दा सुभद्राऽथ मनोरमा । उत्तरास्या[19] दशान्याश्च एकाशीत्यङ्घ्रिकारिका[20] ॥ ३
हरिणी सुप्रभा लक्ष्मीर्विभूतिर्विमला प्रिया । जया ज्वाला विशोका च स्मृतास्ताः[21] सूत्रपाततः ४
ईशाद्यष्टाष्टकं दिक्षु यजेदीशं धनंजयम् । शक्रमर्कं तथा सत्यं भृत्यं[22] व्योम च पूर्वतः ॥ ५
हव्यवाहं च पूषाणं वितथं भौममेव च । कृतान्तमथ गन्धर्वं भृशं मृगं च दक्षिणे ॥ ६
पितरं द्वारपालं च सुग्रीवं पुष्पदन्तकम् । वरुणं दैत्यशेषौ च यक्ष्माणं पश्चिमे सदा ॥ ७
रोगाहिमुख्यो भल्लाटः सौभाग्यमदितिर्दितिः । नवान्तैः[23][24]पदगो ब्रह्मा पूज्योऽर्धे च षडङ्घ्रिगाः ८
ब्रह्मेशान्तरकोष्ठस्थमार्याख्यं[25] तु पदद्वये । तदधश्चापवत्साख्यं केन्द्रान्तरेषु षट्पदे ॥ ९

---

१ ख. ग. तदण्डकम् । २ ख. महती । ३ घ. उच्छ्राया । ४ क. ङ. च. कलशान्य° । ख. ग. कल्यशान्य° । ५ घ. °च्छ्रायोऽभ्यधि° । ६ ख. ग. °कस्तथा । च° । ७ क. ङ. च. °ङ्गुलैस्ततः । उ° । ८ घ. °स्तीर्णा विशा° । ९ घ. °स्तदुदुम्बरे । वि° । १० घ. °म् । द्विप° । ११ क. ङ. च. °ष्टहम् । १२ ख. ग. °र्गवेधैश्च ब° । १३ ख. ग. °भावेधेन । १४ ख. ग. °द्र्यं चुल्लीवि° । १५ क. ङ. च. °विद्धेऽश्ममूत्रता । ख. °विद्धेऽन्यमूत्रता । १६ क. घ. ङ. च. °र्गाद्या गृ° । १७ घ. °दैर्वस्तुं । १८ क. ङ. च °र्वास्तु पू° । १९ क. घ. ङ. च. °रा द्वाद° । २० क. ङ. च. °शीत्यक्षिकाऽधिका । २१ घ. °तास्ततसूत्र° । २२ घ. भृशं । २३ क. ङ. च. °वान्तप° । २४ ख. ग. °न्त.पाद° । २५ घ. °याख्यां तु ।

मरीचिकाऽग्निमध्ये तु सविता द्विपदास्थितः । सावित्री तदधो ह्यंशे विवस्वान्षट्पदे त्वधः ॥१०
पितृब्रह्मान्तरे विष्णुमिन्दुमिन्द्रं त्वधो जयम् । वरुणब्रह्मणोर्मध्ये मित्राख्यं षट्पदे यजेत् ॥ ११
रोगब्रह्मान्तरे नि[1]त्यं विष्णुं च रुद्रदासकम् । तदधो ह्यङ्घ्रिगं [2]येक्ष्म षट्सौम्येषु [3]धैराधरम् ॥१२
(*चरकीं स्कन्दविकटं विदारीं पूतनां क्रमात् । [4]जैम्भं पापं पिलिपिच्छं यजेदीशादिबाह्यतः)१३
एकाशीतिपदं वेश्म मण्डपश्च शताङ्घ्रिकः । [5]पूर्ववद्देवताः पूज्या ब्रह्मा तु षोडशांशके ॥ १४
मरीचिश्च विवस्वांश्च मित्रं पृथ्वीधरस्तथा । दशकोष्ठस्थिता दिक्षु त्वन्ये चेशादिकोणगाः ॥ १५
[6]दैत्यमार्ता तथेशाग्नी मृगाख्यौ पितरौ तथा । +पापयक्ष्मानिलौ देवाः सर्वे सां[7]धाङ्घ्रिके स्थिता[8]ः
[9]यें(प?)[10]त्यांद्योकः प्रवक्ष्यामि संक्षेपेण क्रमाद्गु[11]हं । सदिग्विशत्करैर्दैर्घ्यादष्टाविंशतिविस्तरात् ॥ १७
[12]शिवाश्र[13]यः शिवाख्य[14]यश्च रुद्रहीनः सदोभयोः । रुद्रद्विगुणितानाहाः पृथुष्णोभिर्विना(?) त्रिभिः १८
स्याद्गृहद्विगुणं दै[15]र्घ्यात्तिथिभिश्चैव विस्तरात् । सावित्रः सालयः कुड्या अन्येषां पृथक्त्रिशांशतः ॥
[16]कुड्यपृथूपजङ्घोच्चात्कुड्यं तु त्रिगुणोच्छ्रयम् । कुड्यसूत्रसमा पृ[17]थ्वी वीथीभेदादनेकधा ॥ २०
भद्रं तुल्यं च वीथीभिद्वारवीथी विनाऽग्रतः । श्रीजयं पृष्ठतो हीनं भद्रोऽयं पार्श्वयोर्विना ॥ २१
गर्भपृथुसमा वीथी तदर्धार्धेन वा क्वचित् । वीथ्यर्धेनोपवीथ्याद्यमेकाद्वित्रिपुरान्वितम् ॥ २२
सामान्[18]यान्यगृहं वक्ष्ये सर्वेषां सर्वकामदम् । एकाद्वित्रिचतुःशालमष्टशालं यथाक्रमम् ॥ २३
एकं याम्ये च सौम्यास्यं द्वे चेत्पश्चात्पुरोमुखम् । चतुःशालं तु सांमुख्यात्तयोरिन्द्रेन्द्रमुक्त[19]योः ॥
शिवास्यमम्बुपास्यैष(?)इन्द्रास्ये यमसूर्यकम् । प्राक्सौम्यस्थे च दण्डाख्यं प्राग्[20]याम्ये वातसंज्ञकम्
*[21]आप्येन्दौ गृहवलयाख्यं त्रिशूलं [22]तद्विनार्द्धिकृत् । पूर्वशालाविहीनं स्यात्सुक्षेत्रं वृद्धिदायकम्२६
याम्ये हीने भ[23]वेच्छूली त्रिशा[24]लं वित्तकृत्परम् । [25]पक्षघ्नं जलहीनाकः सुतघ्नं बहुशत्रुकृत् ॥ २६
इन्द्रादिक्रमतो वच्मि ध्वजाद्यष्टौ गृहाण्य[26]हम् । +प्रक्षालानुस्र[27]गावासम[28]ग्नौ तस्य महानसम् ॥ २८
याम्ये रसक्रिया शय्या धनुः शस्त्राणि रक्षसि । धनभुक्त्यम्बुपे[29]शौख्ये सम्यगन्धौ (?)च मारुते॥
सौम्ये धनपशू कुर्यादीशे [30]दीक्षावरालयम् । स्वामिहस्तामितं वेश्म विस्तारायामिपिण्डकम् ॥३०
त्रिगुणं हस्तसंयुक्तं कृत्वाऽष्टांशैर्हृतं तथा । तच्छेषोऽयं स्थितस्तेन वायसान्तं ध्वजादिकम् ॥ ३१
त्रयः पक्षाग्निवेदेषु रसर्षिवसुतो भवेत् । सर्वनाशकरं वेश्म मध्ये चान्ते च संस्थितम् ॥ ३२

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च पुस्तकेषु । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । * इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. घ. ङ. च. °त्यं द्विपञ्च रु° । २ क. ङ. च. यस्मात्पट्° । ३ क. ङ. च. चराचरम् । ४ ख. जृम्भं । ५ ख. ग. °ह्मान्ताः पो° । ६ क. ङ. च. °ता हरेखार्श्रीमृ° । ख. ग. °ता हरो खड्गी मृ° । ७ घ. सार्धांशके । ८ क. ङ. च. °ताः । प्रत्याद्येकः । ९ ग यत्पाद्याकः । घ. यत्पाद्यो° । १० ख. °त्याद्याकः । ११ क. ङ. च. °ह । दिग्विंशत्कुरवो दैर्घ्या° । १२ घ. शिशिराश्रयः । १३ क. ङ. च. °श्रमः शि° । १४ क. ङ. च. °ख्यस्य रुद्रद्विगुणभावहाः । स्याद्गृ° । ख. ग. °ख्यस्य रु° । १५ क. ङ. च. °र्घ्यानृषिभिश्चैव विस्तरात् । कुड्यसू° । १६ ख. ग. °ड्यापिष्टप° । १७ क. ङ. च. वीथी । १८ घ. °न्यानाथगृ° । १९. क. ङ. च. °योः । सिद्धार्थसंख्ययाम्येव इन्द्राप्येपसमूहकम् । ख. ग. °योः । सिद्धार्थमभ्युपासे च इन्द्रा° । २० ख. ग. °ग्याम्योर्वात° । २१ ख. ग. आर्दो च मूलं च वृन्दाख्यं । २२ ख. तद्वन° । २३ क. ङ. च. °वेच्चुल्ली त्रि° । ख. °वेच्छन्दी त्रि° । २४ क. ङ. च. °लं क्षतिकृ° । घ. °लं वृद्धिकृ° । २५ घ. यक्षघ्नं । २६ ख. °म् । प्राक्षा° । २७ ख. °गावोस° । २८ ख. °ग्नौ भस्मस्य मक्षये । या° । २९ ख. °शाख्यं स° । ३० ख. ग. दीर्घाम्बरा° ।

तस्माच्च नवमे भागे शुभकृन्निलयो मतः । तन्मध्ये मण्डपः शस्तः समो वा द्विगुणायतः ॥ ३३
प्रत्यगाप्ये चेन्दुयमे हट्ट एव गृहावली । एकैकभुवनाख्यानि दिक्ष्वष्टाष्टकसंख्यया ॥ ३४
ईशाद्यदितिकान्तानि फलान्येषां यथाक्रमम् । भयं नारीचलत्वं च जयो वृद्धिः प्रतापकः ॥३५
*धर्मः कलिश्च नैस्व्यं च प्राग्द्वारेष्वष्टसु ध्रुवम् । दाहोऽसुखं सुहृन्नाशो धननाशो मृतिर्धनम् ॥
शिल्पित्वं तनयः स्याच्च याम्यद्वारफलाष्टकम् । आयुष्प्राव्राज्यसस्यानि धनशान्त्यर्थसंक्षयः॥३६
शोषं(ष)भोगं चापत्यं च जलद्वारफलानि च । रोगो मदार्तिमुख्यत्वं चार्थायुःकृशता मतिः॥३७
मानश्च द्वारतः पूर्वं उत्तरस्यां दिशि क्रमात् ॥ ३८

इत्याग्नेये महापुराणे नगरगृहादिवास्तुप्रतिष्ठाविधिकथनं नाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३९४

अथ षडधिकशततमोऽध्यायः ।

## नगरादिकवास्तुकथनम् ।

ईश्वर उवाच—

नगरादिकवास्तुं च वक्ष्ये राज्यादिवृद्धये । योजनं योजनार्धं वा तदर्थं स्थानमाश्रयेत् ॥ १
अभ्यर्च्य वास्तुनगरं प्राकाराढ्यं तु कारयेत् । ईशादि त्रिंशत्पदके पूर्वद्वारं च सूर्यके ॥ २
गन्धर्वाभ्यां दक्षिणे स्याद्वारुण्ये पश्चिमे तथा । सौम्यद्वारं सौम्यपदे कार्या हट्टास्तु विस्तरैः ॥
येनेभादि सुखं गच्छेत्कुर्याद्वारं तु षट्करम् । +छिन्नकर्णं विभिन्नं च चन्द्रार्धाभं पुरं न हि ॥४
वज्रसूचीमुखं नेष्टं सकृद्द्वित्रिसमागमम् । चापाभं वज्रनागाभं पुरारम्भे हि शान्तिकृत् ॥ ५
प्राच्यं विष्णुहरार्कादीन्नत्वा दद्याद्बलिं बली । आग्नेये स्वर्णकर्मारान्पुरस्य विनिवेशयेत् ॥ ६
दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च । नटानां चैक्रिकादीनां कैवर्तादेश्च नैर्ऋते ॥ ७
रथानामायुधानां च कृपाणानां च वारुणे । शौण्डिकाः कर्माधिकृता वायव्ये परिकर्मिणः ॥ ८
ब्राह्मणा यतयः सिद्धाः पुण्यवन्तश्च चोत्तरे । फलाद्यादिविक्रयिण ईशाने च वणिग्जनाः ॥ ९
पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम् । स्त्रीणामादेशिनो दक्षे काण्डारान्नैर्ऋते न्यसेत् ॥१०
पश्चिमे च महामात्यान्कोषपालांश्च कारुकान् । उत्तरे दण्डनाथांश्च नायकद्विजसंकुलान् ॥ ११
पूर्वतः क्षत्रियान्दक्षे वैश्याञ्शूद्रांश्च पश्चिमे । दिक्षु वैद्यान्वाजिनश्च बलानि च चतुर्दिशम् ॥ १२
पूर्वेण चरलिङ्ग्यादीञ्श्मशानादीनि दक्षिणे । *पश्चिमे गोधनाद्यं च कृषिकर्तॄंस्तथोत्तरे ॥ १३

* अयं श्लोको नास्ति क. ङ. च. पुस्तकेषु । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । * इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

१ क. ख. ग. ङ. च. °तः । प्राग° । २ क. ङ. च. °प्ये चन्द्रयामे वा हृद ए° । ३ ख. ग. °न्दुयामे वा हृद ए° । ४ क. ङ. च. हस्त । ५ ख. ग. दिश्यष्टा° । ६ क. ङ. च. प्रजायकः । ख. प्रपातकः । ७ ख. चाऽऽऽत्मयुः° । ८ क. च. °वास्तव्यं व° । ९ क. ङ. च. °न्धर्वौ द° । १० क. ङ. च. °णे पश्चाद्वा° । ११ क. ङ. च. °राः । पतितापिमुखं । १२ क. ङ. च. °दीन्हुत्वा । १३ क. ङ. च. व(वा)ह्निकादीनां । १४ क. ङ. च. °वर्णास्तथोत्त° । १५ क. ङ. च. °हाभागान्को° । १६ क. ङ. च. कारका° । १७ क. ङ. च. °जसद्गणान् । १८ क. ङ. च. °लिङ्गादी° ।

न्यसेन्म्लेच्छांश्च कोणेषु ग्रामादिषु तथा स्थितिम् । श्रियं वैश्रवणं द्वारि पूर्वे तौ पश्यतां श्रियम्
देवादीनां पश्चिमतः (*पूर्वास्यानि गृहाणि हि । पूर्वतः पश्चिमास्यानि दक्षिणे चोत्तराननान्(?)
नाकेशविष्ण्वादिधामानि रक्षार्थं नगरस्य च ।) निर्दैवतं तु नगरग्रामदुर्गगृहादिकम् ॥ १६
भुज्यते तत्पिशाचाद्यै रोगाद्यैः परिभूयते । नगरादि सदैवं हि जयदं भुक्तिमुक्तिदम् ॥ १७
पूर्वायां(वेस्यां) श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसम् । शयनं दक्षिणस्यां तु नैर्ऋत्यामायुधाश्रयम्
भोजनं पश्चिमायां तु वायव्यां धान्यसंग्रहः । उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् ॥ १९
चतुःशालं त्रिशालं वा द्विशालं चैकशालकम् । चतुःशालगृहाणां तु शालालिन्दकभेदतः ॥ २०
शतद्वयं तु जायन्ते पञ्चाशत्पञ्च तेष्वपि । त्रिशालानि तु चत्वारि द्विशालानि तु पञ्चधा ॥ २१
एकशालानि चत्वारि एकालिन्दानि वच्मि च । अष्टाविंशदलिन्दानि गृहाणि नगराणि च ॥
चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु । षडलिन्दानि विंशैव अष्टाभिर्विंश(?) एव हि ॥ २३
अष्टालिन्दं भवेदेवं नगरादौ गृहाणि हि ॥ २४

इत्याग्निमहापुराण आग्नेये नगरादिवास्तुकथनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४३८

---

अथ सप्ताधिकशततमोऽध्यायः ।

---

स्वायंभुवसर्गकथनम् ।

अग्निरुवाच—

वक्ष्ये भुवनकोषं च पृथ्वीद्वीपादिलक्षणम् । अग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्युतिमांस्तथा ॥ १
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च । ज्योतिष्मान्दशमस्तेषां सत्यनामा सुतोऽभवत् ॥ २
प्रियव्रतसुताः ख्याताः सप्त द्वीपान्ददौ पिता । जम्बूद्वीपमथाग्नीध्रे प्लक्षं मेधातिथेर्ददौ ॥ ३
वपुष्मते शाल्मलं च ज्योतिष्मते कुशाह्वयम् । क्रौञ्चद्वीपं द्युतिमते शाकं भव्याय दत्तवान् ॥ ४
पुष्करं सवनायादादग्नीध्रोऽदात्सुते शतम् । जम्बूद्वीपं पिता लक्षं नाभेर्दत्तं हिमाह्वयम् ॥ ५
हेमकूटं किंपुरुषे हरिवर्षाय नैषधम् । इलावृते मेरुमध्यं रम्ये नीलाचलाश्रितम् ॥ ६
+हिरण्वते श्वेतवर्षं कुरूंस्तु कुरवे ददौ । भद्राश्वाय च भद्राश्वं केतुमालाय पश्चिमम् ॥ ६
मेरोः प्रियव्रतः पुत्रानभिषिच्य ययौ वनम् । शालग्रामे तपस्तप्त्वा ययौ विष्ण्वालयं नृपः ॥ ८
यानि किंपुरुषाद्यानि ह्यष्ट वर्षाणि सत्तम । तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥ ९
जरामृत्युभयं नास्ति धर्माधर्मौ युगादिकम् । नाधमं मध्यमं तुल्या हिमाद्देशात्तु नाभितः ॥ १०
ऋषभो मेरुदेव्यां च ऋषभाद्भरतोऽभवत् । ऋषभो दत्तश्रीः पुत्रे शालग्रामे हरिं गतः ॥ ११
भरताद्भारतं वर्षं भरतात्सुमतिस्त्वभूत् । भरतो दत्तलक्ष्मीकः शालग्रामे हरिं गतः ॥ १२
स योगी योगप्रस्थाने वक्ष्ये तच्चरितं पुनः । सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नो व्यजायत ॥ १३

---

* धनुश्चिह्नान्तर्गतं क. ङ. च. पुस्तकेषु त्रुटितम् । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. स्थितम् । २ ग. °त्तरेण वा । ना° । ३ क. ङ च. °लानिनवभे° । ४ घ. °ग्नीध्रेऽदा° । ५ क. ङ. च. नाभिदत्तं । ६ क. ङ. च. शालाग्रामे । ७ ख. ग. घ. विष्णोर्लयं । ८ क. ङ. च. °गविस्तारे व° । ९ घ. °प्रस्ताने व° ।

परमेष्ठी ततस्तस्मात्प्रतीहारस्तदन्वयः । ( *प्रतीहारात्प्रतीहर्ता प्रतिहर्तुर्भुवस्ततः ॥ १४
उद्गीतोऽथ च प्रस्तारो विभुः प्रस्तारतः सुतः । ) पृथुश्चैव ततो नक्तो नक्तस्यापि गयः[१] सुतः ॥
नरो गयस्य तनयस्तत्पुत्रोऽभूद्विराट्ततः । तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ॥ १६
महान्तस्तत्सुतश्चाभून्मनस्यस्तस्य[३] चाऽऽत्मजः । त्वष्टा त्वष्टुश्च विरजा रज(जा)स्तस्याप्यभूत्सुतः
सत्यजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने । विश्वज्योतिःप्रधानास्ते भारतं तैर्विवर्धितम् ॥ १८
कृतत्रेतादिसर्गेण सर्गः स्वायंभुवः स्मृतः ॥ १९

इत्यादिमहापुराण आग्नेये स्वायंभुवसर्गकथनं नाम सप्ताधिकशततमोऽध्याय ॥ १०७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४३७

---

अथाष्टाधिकशततमोऽध्यायः ।

---

भुवनकोशकथनम् ।

अग्निरुवाच—

जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान् । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः ॥ १
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ २
जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः । चतुरशीतिसाहस्रो भूयिष्ठः षोडशाद्रिराट् ॥ ३
द्वात्रिंशन्मूर्ध्नि विस्तारात्षोडशाधः सहस्रवान् । भूयस्तस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ४
हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ५
लक्षप्रमाणौ द्वौ मध्ये दश हीनास्तथाऽपरे । सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ६
भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं[४] तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ ७
(+ रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ८
नवसाहस्रमेकैकमेतेषां मुनिसत्तम । इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ ९
मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥ १०
*विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः । पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ ११
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः । कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥ १२
एकादशशतायामाः पादपा गिरिकेतवः । जम्बूद्वीपेति संज्ञा स्यात्फलं जम्ब्वा गजोपमम् ॥ १३
जम्बूनदी रसेनास्यास्त्विदं जाम्बूनदं परम् । सुपार्श्वः पूर्वतो मेरोः केतुमालस्तु पश्चिमे ॥ १४
वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनः । वैभ्राजं पश्चिमे सौम्ये नन्दनं च सरांस्यथ ॥ १५
अरुणोदं महाभद्रं[५] शीतोदं[६] मानसं तथा । सिताम्भश्चक्रमुञ्जाद्याः पूर्वतः केशराचलाः[७] ॥ १६
दक्षिणेऽद्रेस्त्रिकूटाद्याः शिखिवासमुखा[८][९] जले[१०] । शङ्खकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । * ख. ग. पुस्तकयोरिदमर्धमत्र नास्ति किं चोत्तरश्लोकपूर्वार्धोत्तर विद्यते ।

---

१ ङ. यशः । च. शयः । २ ङ. नगो । च. नवो । ३ क ङ. च. °न्मनः प्रास्तस्य । ४ क. ङ. च. हरिवंशं । ५ ख. ग. भद्राश्वः । ६ घ. °द्रं संशितोदं समानसम् । शिता° । ७ ख. शिशिराचलाः । ८ क. ग. घ. शिशिवा° । ९ ग. °वासुमु° । १० ग. °खानले ।

चतुर्दश सहस्राणि योजनानां च दिक्षु च । इन्द्रादिलोकपालानां समन्ताद्ब्रह्मणः पुरः ॥ १८
विष्णुपादात्प्लावयित्वा चन्द्रं स्वर्गात्पतत्यपि । पूर्वेण शीता भद्राश्वाच्छैलाच्छैलाद्गताऽर्णवम् १९
तथैवालकनन्दाऽपि दक्षिणेनैव भारतम् । प्रयाति सागरं कृत्वा सप्तभेदाऽथ पश्चिमम् ॥ २०
अब्धिं च चक्षुःसौम्याऽब्धिं भद्रोत्तरकुरूनपि । आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ २१
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः । भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ २२
पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः । जठरो देवकूटश्च मर्यादापर्वतावुभौ ॥ २३
तौ दक्षिणोत्तरायामावानीलनिषधायतौ । गन्धमादनकैलासौ पूर्वपश्चाऽऽयतावुभौ ॥ २४
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ । निषधः पारियात्रश्च मर्यादापर्वतावुभौ ॥ ) २५
मेरोः पश्चिमदिग्भागे यथा पूर्वे तथा स्थितौ । *त्रिशृङ्गो रुधिरश्चैव उत्तरौ वर्षपर्वतौ ॥ २६
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ । जाठराद्याश्च मर्यादाशैला मेरोश्चतुर्दिशम् ॥ २७
केशरादिषु याः श्रेण्यस्तासु सन्ति पुराणि हि । लक्ष्मीविष्ण्वग्निसूर्यादिदेवानां मुनिसत्तम ॥२८
भौमानां स्वर्गधर्माणां न पापास्तत्र यान्ति च । भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके ॥२९
भारते कूर्मरूपी च मत्स्यरूपः कुरुष्वपि । विश्वरूपेण सर्वत्र पूज्यते भगवान्हरिः ॥ ३०
(+ किंपुरुषाद्यष्टसु क्षुद्भीतिशोकादिकं न च । चतुर्विंशतिसाहस्रं प्रजा जीवन्त्यनामयाः) ॥ ३१
कृतादिकल्पना नास्ति भौमान्यम्भांसि नाम्बुदाः । सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः ॥ ३२
नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे । भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते ॥ ३३

इत्यादिमहापुराण आग्नेये भुवनकोशकथनं नामाष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४७०

---

अथ नवाधिकशततमोऽध्यायः ।

---

तीर्थमाहात्म्यम् ।

(* अग्निरुवाच—

माहात्म्यं सर्वतीर्थानां वक्ष्ये यद्भुक्तिमुक्तिदम् । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥१
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तो लघ्वाहारो जितेन्द्रियः ॥ २
निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत् । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥ ३
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते । तीर्थाभिगमने तत्स्याद्यद्यज्ञेनाऽऽप्यते फलम् ॥ ४
पुष्करं परमं तीर्थं सांनिध्यं हि त्रिसंध्यकम् । दशकोटिसहस्राणि तीर्थानां विप्र पुष्करे ॥ ५
ब्रह्मा सह सुरैरास्ते मुनयः सर्वमिच्छवः । देवाः प्राप्ताः सिद्धिमत्र स्नाताः पितृसुरार्चकाः ॥ ६
अश्वमेधफलं प्राप्य ब्रह्मलोकं प्रयान्ति ते । कार्तिक्यामन्नदानाच्च निर्मलो ब्रह्मलोकभाक् ॥ ७

---

* इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु । * धनुश्चिह्नान्तर्गतं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ घ. °तन्त्यपि । २ ग. °द्राश्वं शैला° । ३ ग. °र्वपश्चाय° । ४ ख. ग. °रिभद्रश्च । ५ ग. च. °तौ । जठ° । ६ घ. °षु या द्रोण्य° । ७ क. ङ. च. मुद्गधर्माणां । ८ ख. ग. °रिः । भूषु किंपुरुषाद्यासु क्षु° । ९ ख. ग. °द्भीशो° ।

पुष्करे दुष्करं गन्तुं पुष्करे दुष्करं तपः । दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ८
तत्र वासाज्जपाच्छ्राद्धात्कुलानां शतमुद्धरेत् । जम्बूमार्गं च तत्रैव तीर्थं[1] तण्डुलिकाश्रमम् ॥ ९
कैण्वाश्रमं[2] कोटितीर्थं नर्मदा चार्बुदं परम् । तीर्थं चर्मण्वती सिन्धुः सोमनाथः प्रभासकम् ॥ १०
सरस्वत्यब्धिसङ्गश्च सागरं तीर्थमुत्तमम् । पिण्डारकं द्वारका च गोमती सर्वसिद्धिदा ॥ ११
भूमितीर्थं[3] ब्रह्मतुङ्गं तीर्थं पञ्चनदं परम् । भीमतीर्थं गिरीन्द्रश्च[4] देविका पापनाशिनी ॥ १२
तीर्थं विनशनं[5] पुण्यं नागोद्भेदमघार्दनम् । तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥ १३
कुरुक्षेत्रं[6] गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवम् ॥ १४
तत्र विष्ण्वादयो देवास्तत्र[7] वासाद्धरिं व्रजेत् । सरस्वत्यां संनिहित्यां स्नानकृद्ब्रह्मलोकभाक् १५
पांशवोऽपि कुरुक्षेत्रे नयन्ति परमां गतिम् । धर्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमम् ॥ १६
तीर्थं कनखलं पुण्यं भद्रकर्णह्रदं तथा । गङ्गासरस्वतीसङ्गं ब्रह्मावर्तमघार्दनम् ॥ १७
भृगुतुङ्गं च कुब्जाम्रं गङ्गोद्भेदमघान्तकम् । वाराणसी वरं तीर्थमविमुक्तमनुत्तमम् ॥ १८
कपालमोचनं तीर्थं तीर्थराजं प्रयागकम् । गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥ १९
तीर्थं[8] राजगृहं पुण्यं शालग्राममघान्तकम् । वटेशं वामनं तीर्थं कालिकासङ्गमुत्तमम् ॥ २०
लौहित्यं करतोयाख्यं शोणं चार्षभं परम् । श्रीपर्वतं कोल्लगिरिः[9] सह्याद्रिर्मलयो गिरिः[10] ॥ २१
गोदावरी तुङ्गभद्रा कावेरी वरदा नदी । तापी पयोष्णी रेवा च दण्डकारण्यमुत्तमम् ॥ २२
कालंजरं मुञ्जवटं तीर्थं सूर्पारकं परम् । मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परम् ॥ २३
अवन्ती परमं तीर्थमयोध्या पापनाशनी । नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकम् ॥ ) २४

इत्यादिमहापुराणे आग्नेये तीर्थमाहात्म्यवर्णनं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४९४

---

अथ दशाधिकशततमोऽध्यायः ।

---

गङ्गामाहात्म्यम् ।

अग्निरुवाच—

गङ्गामाहात्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा । येषां मध्ये याति गङ्गा ते देशाः पावना वराः
गतिर्गङ्गा[11] तु भूतानां गतिमन्वेषतां सदा । गङ्गा तारयते[12] चोभौ वंशौ नित्यं हि सेविता ॥ २
चान्द्रायणसहस्राच्च गङ्गाम्भःपानमुत्तमम् । गङ्गां मासं तु संसेव्य सर्वयज्ञफलं[13] लभेत् ॥ ३
सकलाघहरी देवी स्वर्गलोकप्रदायिनी । यावदस्थि च गङ्गायां तावत्स्वर्गे स तिष्ठति ॥ ४
अन्धादयस्तु तां सेव्य देवैर्गच्छन्ति तुल्यताम् । गङ्गातीर्थसमुद्भूतमृद्धारी सोऽघहाऽर्कवत् ॥ ५
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेतिकीर्तनात् । पुनाति पुण्यपुरुषाञ्शतशोऽथ सहस्रशः ॥ ६

इत्यादिमहापुराणे आग्नेये गङ्गामाहात्म्यवर्णनं नाम दशाधिकशततमोऽध्यायः ॥ ११० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५००

---

१ ख. ग. °र्थं मण्डलि° । २ ख. ग. कण्टाश्रमं । घ. कर्णाश्रमं । ३ ख. ग. कृमितीर्थं । ४ घ. °रीन्द्रं च दे° । ५ ग. विनाश° । ६ ग. °क्षेत्रे ग° । ७ ख. ग. °त्रे ते यान्ति । ८ ख. तीर्थरा° । ९ घ. कोल्वागिरिं । १० क. ङ. च. °रिः सिंहाद्रि° । ११ क. ङ. च. °तिर्गतिमतां । १२ क. ङ. च. पावयते । १३ क. ङ. च. °र्वज्ञस्य फ° ।

अथैकादशाधिकशततमोऽध्यायः ।

प्रयागमाहात्म्यम् ।

अग्निरुवाच—

वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परम् । प्रयागे ब्रह्मविष्ण्वाद्या देवा मुनिवराः स्थिताः॥ १
सरितः सागराः सिद्धा गन्धर्वाप्सरसस्तथा । तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥ २
वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता । तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ॥ ३
गङ्गायमुनयोर्मध्यं[1] पृथिव्या जघनं स्मृतम् । प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः ॥ ४
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ । तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ५
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तः प्रयागके[2] । स्तवनादस्य तीर्थस्य नामसंकीर्तनादपि ॥ ६
मृत्तिकालम्भनाद्वाऽपि सर्वपापैः प्रमुच्यते । प्रयागे संगमे दानं श्राद्धं[3] जप्यादि चाक्षयम् ॥ ७
न वेदवचनाद्विप्र न लोकवचनादपि । मतिरुत्क्रमणीयाऽन्ते प्रयागे मरणं प्रति ॥ ८
दश तीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः । तेषां सांनिध्यमत्रैव प्रयागं परमं ततः ॥ ९
वासुकेर्भोगवत्यत्र[4] हंसप्रपतनं परम् । गवां कोटिप्रदानाद्यत्र्यहं स्नानस्य तत्फलम् ॥ १०
प्रयागे माघमासे तु एवमाहुर्मनीषिणः । सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥ ११
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे । अत्र दानाद्दिवं यान्ति राजेन्द्रो जायतेऽत्र च ॥ १२
वटमूले संगमादौ मृतो विष्णुपुरीं व्रजेत् । उर्वशीपुलिनं रम्यं तीर्थं संध्यावटस्तथा ॥ १३
कोटितीर्थं चाश्वमेधं गङ्गायमुनमुत्तमम् । मानसं रजसा हीनं तीर्थं वासरकं[5] परम् ॥ १४

इत्यादिमहापुराण आग्नेये प्रयागमाहात्म्यवर्णनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५१४

अथ द्वादशाधिकशततमोऽध्यायः ।

वाराणसीमाहात्म्यम् ।

अग्निरुवाच—

वाराणसी परं तीर्थं गौर्यै प्राह महेश्वरः । भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां[6] हरिम् ॥ १

रुद्र उवाच—

गौरि[7] क्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतम् । जप्तं तप्तं हुतं दत्तमविमुक्ते किलाक्षयम् ॥ २
अश्मना चरणौ हत्वा[8] वसेत्काशीं न हि त्यजेत् । हरिश्चन्द्रं परं गुह्यं गुह्यमाम्रातकेश्वरम् ॥ ३
जप्येश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा । महालयं परं गुह्यं भूमिचण्डेश्वरं तथा ॥ ४
केदारं परमं गुह्यमष्टौ सन्त्यविमुक्तके । गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५

---

१ क. ङ. च. °र्मध्ये पृ° । २ क. ङ. च. °के । श्रवणाद° । ३ क. ङ. च. श्राद्धव्रज्यादि । ४ क. ङ. °के भोग° । ५ क. ङ. च. वानर° । ६ क. ङ. च. शृण्वतां । ७ क. च. क्षेत्रेण मु° । ८ क. ग. हुत्वा ।

द्वियोजनं तु पूर्वं स्याद्योजनार्धं तदन्यथा। वरणा च नदी नासी मध्ये वाराणसी तयोः॥ ६
अत्र स्नानं जपो होमो मरणं देवपूजनम्। श्राद्धं दानं निवासश्च यद्यत्स्याद्भुक्तिमुक्तिदम्॥ ७

इत्यादिमहापुराण आग्नेये वाराणसीमाहात्म्यकथनं नाम द्वादशाधिकशततमोऽध्यायः॥ ११२॥

आदितः श्लोकानां समष्ट्यङ्काः—३५२१

---

अथ त्रयोदशाधिकशततमोऽध्यायः।

---

## नर्मदामाहात्म्यम्।

अग्निरुवाच—

नर्मदादिकमाहात्म्यं वक्ष्येऽहं नर्मदां पराम्। सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्मदम्॥ १
विस्ताराद्योजनशतं योजनद्वयमायतम्। षष्टिस्तीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः॥ २
पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके। कावेरीसंगमं पुण्यं श्रीपर्वतमतः शृणु॥ ३
गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः। अवाप्स्यसि त्वमध्यात्म नाम्ना श्रीपर्वतस्तव॥ ४
समन्ताद्योजनशतं महापुण्यं भविष्यति। अत्र दानं तपो जप्यं श्राद्धं सर्वमथाक्षयम्॥ ५
मरणं शिवलोकाय सर्वदं तीर्थमुत्तमम्। हरोऽत्र क्रीडते देव्या हिरण्यकशिपुस्तथा॥ ६
तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन्॥ ७

इत्यादिमहापुराण आग्नेये नर्मदामाहात्म्यवर्णनं नाम त्रयोदशाधिकशततमोऽध्यायः॥ ११३॥

आदितः श्लोकानां समष्ट्यङ्काः—३५२८

---

अथ चतुर्दशाधिकशततमोऽध्यायः।

---

## गयामाहात्म्यम्।

अग्निरुवाच—

गयामाहात्म्यमाख्यास्ये गया तीर्थोत्तमोत्तमम्। गयासुरस्तपस्तेपे तत्तपस्तापितैः सुरैः॥ १
उक्तः क्षीराब्धिगो विष्णुः पालयास्मान्गयासुरात्। तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्रवीत्
दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः। तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा नरा हरिम्॥ ३
गताः शून्या मही स्वर्गे देवा ब्रह्मादयः सुराः। गता ऊचुर्हरिं देव शून्या भूस्त्रिदिवं हरे॥ ४
दैत्यस्य दर्शनादेव ब्रह्माणं चाब्रवीद्धरिः। यागार्थं दैत्यदेहं त्वं प्रार्थय त्रिदशैः सह॥ ५
तच्छ्रुत्वा ससुरो ब्रह्मा गयासुरमथाब्रवीत्। अतिथिः प्रार्थयामि त्वां देहं यागाय पावनम्॥६
गयासुरस्तथेत्युक्त्वाऽपतत्तस्य शिरस्यथ। यागं चकार चलिते देहे पूर्णाहुतिं विभुः॥ ७
पुनर्ब्रह्माऽब्रवीद्विष्णुं पूर्णाकालेऽसुरोऽचलत्। विष्णुर्धर्ममथाऽऽहूय प्राह देवमयीं शिलाम्॥ ८

---

१ क. ख. ग. ङ. च. °सी तयोर्मध्ये वराणसी। अ°। २ क. ङ. च. यज्ञः स्याद्भुक्तिमुक्तिदः। इ°। ३ क. ङ. च. °द्धरः। अ°। ४ क. ङ. च. राज्ञा। ५ क. ङ. च. °पितैः सु°। ६ घ. नवा। ७ क. ङ. च. पुनः। ८ घ. देवाः। ९ क. घ. ङ. च. देहि। १० क. ङ. च. भुवि। ११ घ. पूर्णका°। १२ ग. °रोऽज्वल°।

धारयस्व सुराः सर्वे[2] तस्यामुपरि सन्तु ते । गदाधरो मदीयाऽथ मूर्तिः स्थास्यति[3] साऽमरैः ॥९
धर्मः शिलां देवमयीं तच्छ्रुत्वाऽधारयत्पराम् । या धर्माद्धर्मवत्यां च जाता धर्मव्रता सुता ॥१०
मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपोन्विताम् । यथा हरिः श्रिया रेमे गौर्या शंभुस्तथा तया ॥११
कुशपुष्पाद्यरण्याच्च आनीयातिश्रमान्वितः । भुक्त्वा धर्मव्रतां प्राह पादसंवाहनं कुरु ॥ १२
विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाऽकरोत् । एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते[4] समागतः ॥
धर्मव्रताऽचिन्तयच्च किं ब्रह्माणं समर्चये । पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः ॥ १४
विचिन्त्य पूजयामास ब्रह्माणं चार्हणादिभिः । मरीचिस्तामपश्यन्स शशापोक्तिव्यतिक्रमात् १५
शिला भविष्यसि क्रोधाद्धर्मव्रताऽब्रवीच्च तम् । पादाभ्यङ्गं परित्यज्य त्वद्गुरुः पूजितो मया१६
अदोषाऽहं यतस्त्वं हि शापं प्राप्स्यसि शंकरात् । धर्मव्रता पृथक्शापं धारयित्वाऽग्निमध्यगात् ॥
तपश्चचार वर्षाणां सहस्राण्ययुतानि च । ततो विष्ण्वादयो देवा वरं ब्रूहीति चाब्रुवन् ॥
धर्मव्रताऽब्रवीद्देवाञ्शापं निवर्तयन्तु मे ॥ १८

देवा ऊचुः—

दत्तो मरीचिना शापो भविष्यति न चान्यथा । शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं भविष्यसि
देवव्रता देवशिला सर्वदेवादिरूपिणी । सर्वदेवमयी[6] पुण्या निश्चला(नैश्चल्या)यासुरस्य हि ॥२०

देवव्रतोवाच—

यदि तुष्टाः स्थ मे सर्वे मयि तिष्ठन्तु सर्वदा । ब्रह्मा विष्णुश्च रुद्राद्या गौरीलक्ष्मीमुखाः सुराः२१

अग्निरुवाच—

देवव्रतावचः श्रुत्वा तथेत्युक्त्वा दिवं गताः । सा धर्मेणासुरस्यास्य धृता देवमयी शिला ॥२२
सशिलश्चलितो दैत्यः स्थिता रुद्रादयस्ततः । सदेवश्चलितो दैत्यस्ततो देवैः प्रसादितः ॥ २३
क्षीराब्धिगो हरिः प्रादात्स्वमूर्तिं श्रीगदाधरम् । *गच्छन्तु भोः स्वयं यास्ये मूर्त्या वै देवगम्यया
स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः।निश्चला(नैश्चल्या)र्थं स्वयं देवः स्थित आदिगदाधरः
गदो नामासुरो रौद्रः स हतो विष्णुना पुरा । तदस्थिनिर्मिता चाऽऽद्या गदा या विश्वकर्मणा
आद्यया गदया हेतिप्रमुखा राक्षसा हताः । गदाधरेण देवेन तस्मादादिगदाधरः ॥ २७
देवमय्यां शिलायां च स्थिते चाऽऽदिगदाधरे । गयासुरे निश्चलेऽथ ब्रह्मा पूर्णाहुतिं ददौ ॥२८
गयासुरोऽब्रवीद्देवान्किमर्थं वञ्चितो ह्यहम् । विष्णोर्वचनमात्रेण किं न स्यां निश्चलो ह्यहम् ॥२९
आक्रान्तो यद्यहं देवा दातुमर्हत मे वरम् ॥ ३०

देवा ऊचुः—

तीर्थस्य करणे यत्त्वमस्माभिर्निश्चलीकृतः । विष्णोः शंभोर्ब्रह्मणश्च क्षेत्रं तव भविष्यति ॥ ३१
प्रसिद्धं सर्वतीर्थेभ्यः पित्रादेर्ब्रह्मलोकदम् । इत्युक्त्वा ते स्थिता देवा देव्यस्तीर्थादयः स्थिताः
यागं कृत्वा ददौ ब्रह्मा ऋत्विग्भ्यो दक्षिणास्तदा । पञ्चक्रोशं गयाक्षेत्रं पञ्चाशत्पञ्च चार्पये-
(चाऽऽर्पय)त् ॥ ३३

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।

१ घ. धारयध्वं । २ घ. °र्वे यस्या° । ३ क. च. °ति संवरैः । ग. °ति सा सुरैः । ४ ख. ग. घ. °प्ते तथाऽऽग° ।
५ घ. °श्यत्स सशा° । ६ क. ङ. च. °र्वतीर्थम° । ७ घ. दैत्यः । ८ क. ङ. च. °दन्नाग्निर्मि° । ९ घ. °ण विधिवत्तस्मा° ।

ग्रामान्स्वर्णगिरीन्कृत्वा नदीर्दुग्धमधुस्रवाः । सरोवराणि दध्याज्यैर्बहूनन्नादिपर्वतान् ॥ ३४
कामधेनुं कल्पतरुं स्वर्णरूप्यगृहाणि च । न याचयन्तु विप्रेन्द्रा अल्पानुक्त्वा ददौ प्रभुः ॥ ३५
धर्मयागे प्रलोभात्तु प्रतिगृह्य धनादिकम् । स्थिता यदा गयायां ते शप्तास्ते ब्रह्मणा तदा ॥ ३६
विद्याविवर्जिता यूयं तृष्णायुक्ता भविष्यथ । दुग्धादिवर्जिता नद्यः शैलाः पाषाणरूपिणः॥३७
ब्रह्माणं ब्राह्मणाश्चोचुर्नष्टं शापेन चाखिलम् । जीवनाय प्रसादं नः कुरु विप्रांश्च सोऽब्रवीत्३८
तीर्थोपजीविका यूयं सचन्द्रार्कं भविष्यथ । ते युष्मान्पूजयिष्यन्ति गयायामागता नराः ॥ ३९
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् । नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम् ॥ ४०
गयोऽपि चाकरोद्यागं बह्वन्नं बहुदक्षिणम् । गया पुरी तेन नाम्ना पाण्डवा ईजिरे हरिम् ॥ ४१

इत्यादिमहापुराण आग्नेये गयामाहात्म्यवर्णनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५६९

---

अथ पञ्चदशाधिकशततमोऽध्यायः ।

---

## गयायात्राविधिः ।

अग्निरुवाच—

उद्यतश्चेद्गयां यातुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेशं(षं) ग्रामस्यापि प्रदक्षिणम् ॥१
कृत्वा प्रतिदिनं गच्छेत्संयतश्चाप्रतिग्रही । गृहाच्चलितमात्रस्य गयाया गमनं प्रति ॥ २
स्वर्गारोहणसोपानं पितॄणां तु पदे पदे । ब्रह्मज्ञानेन किं कार्यं गोगृहे मरणेन किम् ॥ ३
किं कुरुक्षेत्रवासेन यदा पुत्रो गयां व्रजेत् । गयां प्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ॥ ४
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किं न दास्यति । ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥ ५
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा । काङ्क्षन्ति पितरः पुत्रं नरकाद्भयभीरवः ॥ ६
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति । मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ ७
न कालादि गयातीर्थे दद्यात्पिण्डांश्च नित्यशः । पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ॥ ८
अष्टकासु च वृद्धौ च गयायां मृतवासरे । अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥ ९
पित्रादिनवदैवत्यं तथा द्वादशदैवतम् । प्रथमे दिवसे स्नायात्तीर्थे ह्युत्तरमानसे ॥ १०
उत्तरे मानसे पुण्य आयुरारोग्यवृद्धये । सर्वाघौघविघाताय स्नानं कुर्याद्विमुक्तये ॥ ११
संतर्प्य देवपित्रादीञ्श्राद्धकृत्पिण्डदो भवेत् । +दिव्यान्तरिक्षभौमस्था(भूमिष्ठा)न्देवान्संतर्पयाम्यहम् ॥ १२
दिव्यान्तरिक्षभौमादि पितृमात्रादि तर्पयेत् । पिता पितामहश्चैव तथैव प्रपितामहः ॥ १३
माता पितामही चैव तथैव प्रपितामही । मातामहः प्रमातामहो वृद्धप्रमातामहः ॥ १४
तेभ्योऽन्येभ्य इमान्पिण्डानुद्धाराय ददाम्यहम् । ॐ नमः सूर्यदेवाय सोमभौमज्ञरूपिणे ॥ १५
जीवशुक्रशनैश्चारिराहुकेतुस्वरूपिणे । उत्तरे मानसे स्नात उद्धरेत्सकलं कुलम् ॥ १६
सूर्यं नत्वा व्रजेन्मौनी नरो दक्षिणमानसम् । दक्षिणे मानसे स्नानं करोमि पितृतृप्तये ॥ १७

---

\+ इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. महत् । २ क. ङ. च. गन्तुं । ३ क. ङ. च °त् । पुत्रे मयि ज° । ४ क. ङ. च. अन्वष्टकासु वृ° । ५ क. ङ. च. °दिमेकदै° । ६ क. ङ. च. तेभ्यस्तेभ्य । ७ क. ङ. च. ततो । ८ क. ङ. च. °तृदैवते । ग° ।

गयायामागतः स्वर्गं यान्तु मे पितरोऽखिलाः। श्राद्धं पिण्डं ततः कृत्वा सूर्यं नत्वा वदेदिदम्
ॐ नमो भानवे भर्त्रे भवाय भव मे विभो। भुक्तिमुक्तिप्रदः सर्वपितॄणां भव भावितः॥ १९
कव्यवा[1]होऽनलः सोमो यमश्चैवार्यमा तथा। अग्निष्वात्ता बर्हिषद आज्यपाः पितृदेवताः॥ २०
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह। मदीयाः पितरो ये च मातृमातामहादयः॥२१
तेषां पिण्डप्रदाताऽहमागतोऽस्मि गयामिमाम्। उदीच्यां मुण्डपृष्ठस्य देव[3]र्षिगणपूजितम्॥ २२
नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम्। सिद्धानां प्रीतिजननैः पापानां च भयंकरैः॥२३
लेलिहानैर्महानागै रक्ष्यते चैव नित्यशः। तत्र स्नात्वा दिवं यान्ति क्रीडन्ते(न्ति) भुवि मानवाः
फल्गुतीर्थं ततो गच्छेन्महानद्यां स्थितं परम्। नागाज्जनार्दनात्कूपाद्वटाच्चोत्तरमानसात्॥ २५
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते। मुण्डपृ[4]ष्ठं नगा द्याश्च सारात्सारमथान्तरम्॥ २६
यस्मिन्फलति श्रीर्गौर्वा कामधेनुर्जलं मही। *दृष्टिरम्यादिकं यस्मात्फल्गुतीर्थं न फल्गुवत्॥२७
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्। एतेन किं न पर्याप्तं नृणां सुकृतकारिणाम्॥२८
पृथिव्यां यानि तीर्थानि आ समुद्रात्सरांसि च। फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने २९
फल्गुतीर्थे तीर्थराजे करोति स्नानमादृतः। पितॄणां ब्रह्मलोकाप्त्या आत्मनो भुक्तिमुक्तये॥३०
स्नात्वा श्राद्धी पिण्डदोऽथ नमेद्देवं पितामहम्। कलौ माहेश्वरा लोका अत्र देवो गदाधरः ३१
पितामहो लिङ्गरूपी तं नमामि महेश्वरम्। गदाधरं बलं काममनिरुद्धं नरायणम्॥ ३२
ब्रह्मविष्णुनृसिंहाख्यं वराहादीन्नमाम्यहम्। ततो गदाधरं दृष्ट्वा कुलानां शतमुद्धरेत्॥ ३३
धर्मारण्यं द्वितीयेऽह्नि मतङ्गस्याऽऽश्रमे वरे। मतङ्गवाप्यां संस्नाप्य श्राद्धकृत्पिण्डदो भवेत्॥ ३४
मतङ्गेशं सुसिद्धेशं नत्वा चेदमुदीरयेत्। प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः॥ ३५
मयाऽऽगत्य मतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता। स्नानतर्पणश्राद्धादि ब्राह्मतीर्थेऽथ कूपके॥३६
तत्कूपयूपयोर्मध्ये श्राद्धं कुलशतोद्धृतौ। महाबोधितरुं नत्वा धर्मवान्स्वर्गलोकभाक्॥ ३७
तृतीये ब्रह्मसरसि स्नानं कुर्याद्यतव्रतः। स्नानं ब्रह्मसरस्तीर्थे करोमि ब्रह्मभूतये॥ ३८
पितॄणां ब्रह्मलोकाय ब्रह्मर्षिगणसेविते। तर्पणं श्राद्धकृत्पिण्डं प्रदद्यात्तु प्रसेचनम्॥
कुर्याच्च वाजपेयार्थी ब्रह्मयूपप्रदक्षिणम्॥ ३९

एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददाति।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा॥ ४०

ब्रह्माणं च नमस्कृत्य कुलानां शतमुद्धरेत्। फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम्॥ ४१
कृत्वा श्राद्धं सपिण्डं च गयाशिरसि कारयेत्। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः॥ ४२
तत्र पिण्डप्रदानेन कुलानां शतमुद्धरेत्। मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता॥ ४३
मुण्डपृष्ठे शिरः साक्षाद्गयाशिर उदाहृतम्। साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रमं कृतम्॥ ४४
अमृतं तत्र वहति पितॄणां दत्तमक्षयम्। स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम्॥ ४५

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति।

१ घ. °वाहान° । २ क. ङ. च. °ण्डयुतानां च आग° । ३ क. ङ. च. °वतागणसेवित° । ४ ख. ग. घ. °पृष्ठनगाद्याश्च । ५ क. ङ. च. °पपृष्ठयो° । ६ क. ङ. च. °र्याश्च सद्व्रतः । ७ क. ङ. च. °ह्मपृष्ठप्र° । ८ क. ख. ग घ. पुरस्कृत्य । ९ क. ङ. च. °श्रयं कृ° ।

रुद्रपादं नरः स्पृष्ट्वा नेह भूयोऽभिजायते । शमीपत्रप्रमाणेन [1]पिण्डं दत्त्वा गयाशिरे ॥ ४६
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः । पायसेनाथ पिष्टेन सक्तुना चरुणा तथा ॥ ४७
पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः । पिण्डं दत्त्वा रुद्रपदे कुलानां शतमुद्धरेत् ॥ ४८
तथा विष्णुपदे श्राद्धपिण्डदो ह्यृणमुक्तिकृत् । पित्रादीनां शतकुलं [2]स्वात्मानं तारयेन्नरः ॥ ४९
तथा ब्रह्मपदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् । दक्षिणाग्निपदे तद्वद्गार्हपत्यपदे तथा ॥ ५०
[3]पदे चाऽऽहवनीयस्य श्राद्धी यज्ञफलं लभेत् । आवसथ्यस्य चन्द्रस्य सूर्यस्य च गणस्य च ५१
अगस्त्यकार्तिकेयस्य [4]श्राद्धी तारयते कुलम् । आदित्यस्य रथं नत्वा कर्णादित्यं नमेन्नरः ॥ ५२
कनकेश[5]पदं नत्वा गयाकेदारकं नमेत् । सर्वपापविनिर्मुक्तः पितॄन्ब्रह्मपुरं नयेत् ॥ ५३
विशालोऽपि गयाशीर्षे पिण्डदोऽभूच्च पुत्रवान् । विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद्द्विजान्
कथं पुत्रादयः स्युर्मे द्विजा ऊचुर्विशालकम् । गयायां पिण्डदानेन तव सर्वं भविष्यति ॥ ५५
विशालोऽपि गयाशीर्षे पितृपिण्डान्ददौ [6]ततः । दृष्ट्वाऽऽकाशे सितं रक्तं पुरुषांस्तांश्च पृष्टवान्५६
के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् । अहं सितस्ते जनक इन्द्रलोकं गतः शुभात् ॥५७
मम रक्तः पिता पुत्र[7] कृष्णश्चैव पितामहः[8] । अब्रवीन्नरकं [9]प्राप्तास्त्वया [10]मुक्तीकृता वयम् ॥ ५८
पिण्डदानाद्ब्रह्मलोकं व्रजाम इति ते गताः । विशालः प्राप्तपुत्रादी राज्यं कृत्वा हरिं ययौ ॥५९
प्रेतराजः स्वमुक्त्यै च वणिजं चेदमब्रवीत् । प्रेतैः सर्वैः सहाऽऽर्तः सन्सुकृतं भुज्यते फलम् ॥
श्रवणद्वादशीयोगे कुम्भः सान्नश्च सोदकः । [11]दत्तः पुरा स मध्याह्ने जीवनायोपतिष्ठते ॥ ६१
धनं गृहीत्वा मे गच्छ गयायां पिण्डदो भव । वणिग्धनं गृहीत्वा तु गयायां पिण्डदोऽभवत् ॥
प्रेतराजः सह प्रेतैर्मुक्तो नीतो हरेः पुरम् । गयाशीर्षे पिण्डदानादात्मानं स्वपितॄंस्तथा ॥ ६३
पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ६४
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ ६५
विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ६६
ये केचित्प्रेतरूपेण तिष्ठन्ति पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ ६७
पिण्डो देयस्तु सर्वेभ्यः सर्वैर्वै कुलतारकैः । आत्मनस्तु तथा देयो ह्यक्षयं लोकमिच्छता ॥ ६८
पञ्चमेऽह्नि गदालोले स्नायान्मन्त्रेण बुद्धिमान् । गदाप्रक्षालने तीर्थे गदालोलेऽतिपावने ॥ ६९
स्नानं करोमि संसारगदशान्त्यै जनार्दन । नमोऽक्षयवटायैव[12] [13]अक्षय्यस्वर्गदायिने ॥ ७०
पित्रादीनामक्षयाय सर्वपापक्षयाय च । श्राद्धं वटतले कुर्याद्ब्राह्मणानां च भोजनम् ॥ ७१
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता । किं पुनर्बहुभिर्भुक्तैः पितॄणां दत्तमक्षयम् ॥ ७२
गयायामन्नदाता यः पितरस्तेन पुत्रिणः । वटं वटेश्वरं नत्वा पूजयेत्प्रपितामहम् ॥ ७३
अक्षयाँल्लभते लोकान्कुलानां शतमुद्धरेत् । क्रमतोऽक्रमतो वाऽपि गयायात्रा महाफला ॥ ७४

इत्यादिमहापुराण आग्नेये गयायात्राविधिवर्णनं नाम पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६४३

---

१ क. ङ. च. शिलां । २ क. ङ. च. स्वात्मनोत्तार° । ३ ख. ग. घ. °दे वाऽऽह° । ४ क. ङ. च. श्राद्धं । ५ क. ङ. च. °पदान्यच्च ग° । ख. ग. °पदान्यत्र ग° । ६ क. ङ. च. गतः । ७ क. ङ. च. °त्र हृष्टश्चै° । ८ ख. ग. °हः । अबवीचिनरं° । ९ क. ङ. च. प्राप्तौ त्वया । १० ख. ग. मुक्ताः कृ° । ११ क. ङ. च. मोदः । १२ क. ङ. च. °व सर्वपापक्षयाय च । पि° । १३ घ. °क्षयस्व° ।

अथ षोडशाधिकशततमोऽध्यायः ।

गयायात्राविधिः ।

अग्निरुवाच—

गायत्र्यैव[3] महानद्यां स्नातः संध्यां[4] समाचरेत् । गायत्र्यो[5] अग्रतः प्रातः श्राद्धं पिण्डमथाक्षयम् ॥
मध्याह्ने चोद्यति स्नात्वा गीतवाद्यैर्ह्युपास्य च । सावित्रीं पुरतः संध्यां पिण्डदानं च तत्तटे ॥ २
अगस्त्यस्य पदे कुर्याद्योनिद्वारं प्रविश्य च । निर्गतो न पुनर्योनिं प्रविशेन्मुच्यते भवात् ॥ ३
बलिं काकशिलायां च कुमारं च नमेत्ततः । स्वर्गद्वार्यां सोमकुण्डे वायुतीर्थेऽथ पिण्डदः ॥ ४
भवेदाकाशगङ्गायां कपिलायां च पिण्डदः । कपिलेशं शिवं नत्वा रुक्मिकुण्डे च पिण्डदः ॥ ५
कोटितीर्थे च कोटीशं नत्वाऽमोघपदे नरः । गदालोले[7] वानरके गोप्रचारे च पिण्डदः ॥ ६
नत्वा गावं (गां वै) वैतरण्यामेकविंशकुलोद्धृतिः । श्राद्धपिण्डप्रदाता स्यात्क्रौञ्चपादे च पिण्डदः
तृतीयायां विशालायां निश्चिरायां च पिण्डदः । ऋणमोक्षे पापमोक्षे भस्मकुण्डेऽथ भस्मना ॥८
स्नानकृन्मुच्यते पापान्नमेद्देवं जनार्दनम् । एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ॥ ९
*परलोकगते मह्यमक्षय्यमुपतिष्ठताम् । गयायां पितृरूपेण स्वयमेव जनार्दनः ॥ १०
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात् । मार्कण्डेयेश्वरं नत्वा नमेद्गृध्रेश्वरं नरः ॥ ११
मूलक्षेत्रे महेशस्य धारायां पिण्डदो भवेत् । गृध्रकूटे गृध्रवटे धौतपादे च पिण्डदः ॥ १२
पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः । प्रभासेशं नमेत्प्रेतशिलायां पिण्डदो भवेत् ॥ १३
दिव्यान्तरिक्षभूमिष्ठाः पितरो बान्धवादयः । प्रेतादिरूपा मुक्ताः स्युः पिण्डैर्दत्तैर्मयाऽखिलाः ॥
स्थानत्रये प्रेतशिला गयाशिरसि पावनी । प्रभासे प्रेतकुण्डे च पिण्डदस्तारयेत्कुलम् ॥ १५
वसिष्ठेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् । (+गयानाभौ सुषुम्नायां महाकोष्ठ्यां च पिण्डदः ॥
गदाधराग्रतो मुण्डपृष्ठे देव्याश्च संनिधौ । मुण्डपृष्ठं नमेदादौ क्षेत्रपालादिसंयुतम् ॥ १७
पूजयित्वा भयं न स्याद्विषरोगादिनाशनम् । ब्रह्माणं च नमस्कृत्य ब्रह्मलोकं नयेत्कुलम् ॥ १८
सुभद्रां बलभद्रं च प्रपूज्य पुरुषोत्तमम् )। सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक्[11] ॥ १९
*हृषीकेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् । माधवं पूजयित्वा च देवो वैमानिको भवेत् ॥ २०
महालक्ष्मीं प्राच्य गौरीं[13] मङ्गलां[14] च सरस्वतीम् । पितॄनुद्धृत्य स्वर्गस्थो भुक्तभोगोऽत्र शास्त्रधीः ॥
द्वादशादित्यमभ्यर्च्य वह्निं रेवन्तमिन्द्रकम्[15] । +रोगादिमुक्तः स्वर्गी स्याच्छ्रीकपर्दिविनायकम् ॥
प्रपूज्य कार्तिकेयं[16] च निर्विघ्नः सिद्धिमाप्नुयात् । सोमनाथं च कालेशं केदारं प्रपितामहम् ॥ २३
सिद्धेश्वरं च रुद्रेशं रामेशं ब्रह्मकेश्वरम् । अष्ट लिङ्गानि गुह्यानि पूजयित्वा तु सर्वभाक् ॥ २४

* इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । + धनुश्चिह्नान्तर्गतं क. ङ. च. पुस्तकेषु नास्ति । * इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

१ क. ङ. च. प्रातः । २ क. ङ. च. °त्र्यामुग्र° । ३ क. ङ. च. वेद्यति । ४ क. ङ. च. °र्देर्ध्ययास्य । ५ क. ङ. च. °वित्रीप्लवतः । घ. छ. °वित्रीपु° । ६ क. ङ च. रुक्मदण्डे । ७ ङ. च. °ले च न° । ८ ख. गावो । ९ क. ङ. च. °यां ग्रीवायां च स पि° । १० क. ङ. च. नामतीर्थे । ११ क. ङ. च. लोकभाक् । १२ क. ङ. च. साधनं । १३ ङ. °रीं देवी च मुकुलां तथा । पि° । १४ क. च. मुकुलां । १५ क. ङ. च. °मिन्दुक° । १६ क. ङ. च. कर्णिकेयं ।

नारायणं वराहं च नारसिंहं[1] नमेच्छ्रिये । ब्रह्मविष्णुमहेशाख्यं[2] त्रिपुरघ्नमशेषदम् ॥ २५
सीतां रामं च गरुडं वामनं संप्रपूज्य च । सर्वकामानवाप्नोति ब्रह्मलोकं नयेत्पितॄन् ॥ २६
देवैः सार्धं संप्रपूज्य देवमादिगदाधरम् । ऋणत्रयविनिर्मुक्तस्तारयेत्सकलं कुलम् ॥ २७
देवरूपा शिला पुण्या तस्माद्देव[3]मयी शिला । गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥ २८
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्[4] । फल्ग्वीशं फल्गुचण्डीं च प्रणम्याङ्गारकेश्वरम् २९
मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् । हंसतीर्थे कोटितीर्थे यत्र पाण्डुशिलानदः[5] ॥ ३०
तत्र स्यादग्निधारायां मधुस्रवसि[6] पिण्डदः । इन्द्रेशं[7] किलिकिलेशं नमेद्वृद्धिविनायकम् ॥ ३१
पिण्डदो धेनुकारण्ये पदे धेनोर्नमेच्च गाम् । सर्वान्पितॄंस्तारयेच्च सरस्वत्यां च पिण्डदः ॥ ३२
संध्यामुपास्य सायाह्ने नमेद्देवीं सरस्वतीम् । त्रिसंध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ३३
गयां प्रदक्षिणीकृत्य गयाविप्रान्प्रपूज्य च । अन्नदानादिकं सर्वं कृतं तत्राक्षयं भवेत् ॥ ३४
स्तुत्वा संप्रार्थयेद्देव[8]मादिदेवं गदाधरम् । गदाधरं गयावासं पित्रादीनां गतिप्रदम् ॥ ३५
धर्मार्थकाममोक्षार्थं योगदं प्रणमाम्यहम् । देहेन्द्रियमनोबुद्धि[9]प्राणाहंकारवर्जितम् ॥ ३६
नित्यशुद्ध[10]बुद्ध[11]मुक्तसत्यं ब्रह्म नमाम्यहम् । आनन्दमद्वयं देवं देवदानववन्दितम् ॥ ३७
देवदेवीवृन्दयुक्तं सर्वदा प्रणमाम्यहम् । कलिकल्मषकालार्तिदमनं वनमालिनम् ॥ ३८
पालिताखिललोकेशं कुलोद्धरणमानसम् । *व्यक्ताव्यक्तविभक्तात्माविभक्तात्मानमात्मनि॥ ३९
[12]स्थितं स्थिरतरं सारं वन्दे घोराघमर्दनम् । आगतोऽस्मि गयां देव पितृकार्ये गदाधर ॥ ४०
त्वं मे साक्षी भवाद्येह अनृणोऽहमृणत्रयात् । साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ॥ ४१
मया गयां समासाद्य पितॄणां निष्कृतिः कृता । गयामाहात्म्यपठनाच्छ्राद्धादौ ब्रह्मलोकभाक् ॥
पितॄणामक्षयं श्राद्धमक्षयं ब्रह्मलोकदम् ॥ ४३

इत्यादिमहापुराण आग्नेये गयायात्राविधिकथनं नाम षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६८६

---

अथ सप्तदशाधिकशततमोऽध्यायः ।

---

## श्राद्धकल्पः ।

अग्निरुवाच—

कात्यायनो मुनीनाह यथा श्राद्धं तथा वदे । गयादौ श्राद्धं कुर्वीत संक्रान्त्यादौ विशेषतः ॥ १
काले[13] चापरपक्षे च चतुर्थ्यामूर्ध्वमेव वा । संपाद्य[14] च पदर्क्षे च पूर्वेद्युश्च निमन्त्रयेत् ॥ २
यतीन्गृहस्थसाधून्वा स्नातकाञ्श्रोत्रियान्द्विजान् । अनवद्यान्कर्मनिष्ठाञ्शिष्टानाचारसंयुतान् ॥ ३

---

* इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

---

१ क. ङ. च. नरसिंहं । २ क. ङ. च. °ख्यं त्रैपुरुषमथौषधम् । ३ क. ङ. च. तस्यां देव° । ४ क. च. °म् । कर्णीशं कर्णचण्डीं । ५ ख. ग. घ. छ. °लानदः । ६ क. ङ. च. मध्ये स्र° । ७ घ. छ. रुद्रेशं । ८ क. ङ. च. °येद्देव° । ९ क. ङ. च. °द्धिमनोहं° । १० घ. छ. °शुद्धं बुद्धियुक्तं स° । ११ ख. ग °बुद्धिमु° । १२ क. ङ. च. स्थिरं । १३ ख. ग. घ. छ. °ले वाऽप° । १४ क. ङ. च. संपद्ये च यदाज्ञा च ।

वर्जयेच्छ्वित्रिकुष्ठा(ष्ठ्या)दीन्न गृह्णीयान्निमन्त्रितान् । स्नाताञ्शुचींस्तथाऽऽचान्तान्प्राङ्मुखान्देव-
कर्मणि ॥ ४
उपवेशयेत्त्रीन्पित्र्यानेकैकमुभयत्र वा । एवं मातामहादेश्च शाकैरपि च कारयेत् ॥ ५
तदह्नि ब्रह्मचारी स्यादकोपोऽत्वरितो मृदुः । सत्योऽप्रमत्तोऽनध्वन्यो ह्यस्वाध्यायश्च वाग्यतः ६
सर्वांश्च पङ्क्तिमूर्धन्यान्पृच्छेत्प्रश्ने तथाऽऽसने । दर्भानास्तीर्य द्विगुणान्पित्र्ये दैवादिकं चरेत् ॥ ७
विश्वान्देवानावाहयिष्ये पृच्छेदावाहयेति च । विश्वे देवास आवाह्य विकीर्याथ यवाञ्जपेत् ॥ ८
विश्वे देवाः शृणुतेमं पितॄनावाहयिष्येति । पृच्छेदावाहयेत्युक्त उशन्तस्त्वा समाह्वयेत् ॥ ९
तिलान्विकीर्याथ जपेदोपस्त्वित्यादि पात्रके । सपवित्रे निषिञ्चेद्वा शं नो देवीरिति तृ(त्र्)चा ॥
यवोऽसीति यवान्दत्त्वा पित्रे सर्वत्र वै तिलान् । तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः ॥
प्रत्नवद्भिः प्रत्तः स्वधया पितॄ[निमा]ल्लोँकान्प्रीणया हि नः स्वधेति । श्रीश्च तेति ददेत्पुष्पं पात्रे
हैमेऽथ राजते ॥ १२
औदुम्बरे वा खड्गे वा पर्णपात्रे प्रदक्षिणम् । देवानामपसव्यं तु पितॄणां सव्यमाचरेत् ॥
(*एकैकस्य एकैकेन सपवित्रकरेषु च ॥ १३
या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा(क्ष्या)उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता
न आपः शꣳ स्योना भवन्तु ॥ १४
विश्वे देवा एष वोऽर्घः स्वाहा च पितरेष ते । स्वधैवं पितामहादेः संस्रवान्प्रथमे चरेत् ॥ ) १५
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः । अत्रगन्धपुष्पधूपदीपाच्छादनदानकम् ॥ १६
घृताक्तमन्नमुद्धृत्य पृच्छत्यग्नौ करिष्येति । कुरुष्वेत्यभ्यनुज्ञातो जुहुयात्साग्निकोऽनले ॥ १७
अनग्निकः पितृहस्ते सपवित्रे तु मन्त्रतः । अग्नये कव्यवाहनाय स्वाहेति प्रथमाऽऽहुतिः ॥ १८
सोमाय पितृमतेऽथ यमायाङ्गिरसेऽपरे । हुतशेषं चान्नं पात्रे दत्त्वा पात्रं समालभेत् ॥ १९
पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहेति ॥
जप्त्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २०
अपहतेति च तिलान्विकीर्यान्नं प्रदापयेत् । जुषध्वमिति चोक्त्वाऽथ गायत्र्यादि ततो जपेत् ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ २२
तृप्ताञ्ज्ञात्वाऽन्नं विकिरेदपो दद्यात्सकृत्सकृत् । गायत्रीं पूर्ववज्जप्त्वा मधु वातेति वै जपेत् ॥ २३
तृप्ताः स्थ इति संपृच्छेत्तृप्ताः स्म इति वै वदेत् । शेषमन्नमनुज्ञाप्य सर्वमन्नमथैकतः ॥ २४
उद्धृत्योच्छिष्टपार्श्वे तु कृत्वा चैवावनेजनम् । दद्यात्कुशेषु त्रीन्पिण्डानाचान्तेषु परे जगुः ॥ २५

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. च. पुस्तकेषु ।

---

१ ख. ग. घ. छ. °स्तथा दान्ता° । २ क. ङ. च. °न्पित्र्य एकै° । घ. छ. °न्पित्र्यादीनै° । ३ क. ङ. च. °यिष्यति । ४ घ. छ. °ष्ये च । पृ° । ५ ख. ग. °दाहन्त्विला° । घ. छ. °दायान्त्वित्यादि पित्र° । ६ क. ङ. च. समये ऽथ नि° । ७ घ. छ. °वीरभित्° । ८ क. °तिद्वृचा । ९ क. ङ. च. °सि पितृदे° । १० क. ङ. च. गोसवो । ११ घ. छ. °पः शिवाः संश्योना सुहवा भ° । १२ क. ङ. च. अन्नं ग° । १३ क. ङ. च °शेषमथो ह्यन्नं कर्ता सर्वं स° । १४ घ. छ. °त्र द्यौः पि° । १५ छ. °मः स्वधायै स्वाहायै नित्यमेव भवन्तु ते । तृ° । १६ ख. ग. °त्वाऽथ विकिरे दर्भे द° । १७ घ. ङ. च. °न्नं प्रकि° । १८ ख. ग. घ. छ. °धु माध्विति ।

आचान्तेषूदकं पुष्पाण्यक्षतानि प्रदापयेत् । अक्षय्योदकमेवाथ आशिषः प्रार्थये[1]न्नरः ॥ २६
अघोराः पितरः सन्तु गोत्रं नो वर्धतां सदा । दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ॥२७
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विवति । अन्नं च नो बहु भवेदतिथींश्च लभेमहि॥२८
याचितारश्च नः सन्तु मा च याचिष्म कंचन । स्वधावाचनीयान्कुशानास्तीर्य सपवित्रकान् २९
स्वधां वाचयिष्ये पृच्छेदनुज्ञातश्च वाच्यताम् । पितृभ्यः पितामहेभ्यः प्रपितामहमुख्यके ॥ ३०
स्वधोच्यतामस्तु स्वधा[2] उच्यमानस्तथैव च । अपो निषिञ्चेदुत्तानं पात्रं कृत्वाऽथ दक्षिणाम् ३१
यथाशक्ति प्रदद्याच्च दैवे[3] पित्रेऽ(त्र्येऽ)थ वाचयेत् । विश्वे देवाः प्रीयन्तां च वाजे वाजे विसर्जयेत्
आ मा वाजस्येत्यनुव्रज्य कृत्वा विप्रान्प्रदक्षिणम् । गृहे[4] विशेदमावास्यां मासि मासि चरेत्तथा
एकोद्दिष्टं प्रवक्ष्यामि श्राद्धं पूर्ववदाचरेत् । एकं पवित्रमेकार्घमेकं पिण्डं प्रदापयेत् ॥ ३४
नावाहनाग्नौकरणं विश्वे देवा न चात्र हि । तृप्तिप्रश्ने स्वदितमिति वदेत्सुस्वदितं द्विजः ॥ ३५
उपतिष्ठतामित्यक्षय्ये विसर्गे चाभिरम्यताम् । अभिरताः स्म इत्यपरे शेषं पूर्ववदाचरेत् ॥ ३६
सपिण्डीकरणं वक्ष्ये अब्दान्ते मध्यतोऽपि वा । पितॄणां त्रीणि पात्राणि एकं प्रेतस्य पात्रकम् ॥
सपवित्राणि चत्वारि तिलपुष्पयुतानि च । गन्धोदकेन युक्तानि पूरयित्वाऽभिषिञ्चति ॥ ३८
प्रेतपात्रं पितृपात्रे ये समा(मा)ना इतिद्वयात् । पूर्ववत्पिण्डदानादि प्रेतानां पितृता भवेत् ॥ ३९
अथाऽऽभ्युदयिकं श्राद्धं वक्ष्ये सर्वं तु पूर्ववत् । जपेत्पितृमन्त्रवर्जं[5] पूर्वाह्णे तत्प्रदक्षिणम् ॥ ४०
उपचारा ऋजुकुशास्तिलार्थैश्च यवैरिह । तृप्तिप्रश्नस्तु संपन्नं सुसंपन्नं वदेद्द्विजः ॥ ४१
दध्यक्षतबदराद्याः पिण्डा नान्दीमुखान्पितॄन् । आवाहयिष्ये पृच्छेच्च प्रीयतामिति चाक्षये ॥४२
नान्दीमुखाश्च पितरो वाचयिष्येऽथ पृच्छति । नान्दीमुखान्पितृगणान्प्रीयन्तामित्यथो वदेत् ४३
नान्दीमुखाश्च पितरस्तत्पिता प्रपितामहः । मातामहः प्रमातामहो वृद्धप्रमातृकामहः ॥ ४४
स्वधाकारा[6]न्न युञ्जीत युग्मान्विप्रांश्च भोजयेत् । तृप्तिं वक्ष्ये पितॄणां च ग्राम्यैरोषधिभिस्तथा ४५
मासं[7] तृप्तिस्तथाऽऽरण्यैः कन्दमूलफलादिभिः । मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च ॥ ४६
चतुरो रौरवेणाथ पञ्च षट्छागलेन तु । कूर्मेण सप्त चाष्टौ च वाराहेण नवैव तु ॥ ४७
मेषमांसेन दश च माहिषैः पार्षतैः[8] शिवैः । संवत्सरं तु गव्येन पयसा पायसेन वा ॥ ४८
वार्ध्रीनसस्य[9] मांसेन तृप्तिर्द्वादशवार्षिकी । खड्गमांसं कालशाकं लोहितच्छागलो मधु ॥ ४९
महाशल्काश्च वर्षासु मघाश्राद्धमथाक्षयम् । मन्त्राध्याय्यग्निहोत्री च शाखाध्यायी षडङ्गवित् ॥५०
तृणाचिकेतस्त्रिमधुर्धर्मद्रोणस्य[10] पाठकः । त्रिषु(सु)पर्णज्येष्ठसामज्ञानी स्युः पङ्क्तिपावनाः ॥ ५१
काम्यानां कल्पमाख्यास्ये प्रतिपत्सु धनं बहु । स्त्रियः परा द्वितीयायां चतुर्थ्यां धर्मकामदः[11] ५२
पञ्चम्यां पुत्रकामस्तु षष्ठ्यां च श्रैष्ठ्यभागपि । कृषिभागी च सप्तम्यामष्टम्यामर्थलाभकः ५३
नवम्यां च एकशफा दशम्यां गोगणो भवेत् । एकादश्यां परीवारो द्वादश्यां धनधान्यकम् ५४
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां च शस्त्रतः । मृतानां श्राद्धं सर्वाप्तममावास्यां समीरितम् ५५
सप्त व्याधा दशारण्ये[12] मृगाः कालंजरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ५६

१ क. ङ. च. °येत्ततः । अ° । २ ख. ग. °धा तस्य चानन्तरेषु च । अ° । च. °धा स्तव्यमा° । ३ क. ख. ग. °वे विप्रेऽथ । च. °वे पित्रे तथाऽर्चये° । ४ क. ङ. च. गृहं । ५ च. °र्जं कृतद° । ६ च. °कारं नियु° । ७ क. ङ. च. मासत्रयं । ८ च. पार्वतैः । ९ घ. छ. वार्धीनसस्य । १० क. च. °धुर्बलद्रो° । ११ क. कर्मकादयः । १२ घ. छ. दशार्णेषु ।

ते<sup></sup>ऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ ५७
श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदम् । श्राद्धं कुर्याच्च पुत्रादिः पितुर्जीवति तत्पितुः ५८
तत्पितुस्तत्पितुः कुर्याज्जीवति प्रपितामहे । पितुः पितामहस्याथ परस्य प्रपितामहात् ॥ ५९
एवं मात्रादिकस्यापि तथा मातामहादिके । श्राद्धकल्पं पठेद्यस्तु स लभेच्छ्राद्धकृत्फलम् ॥ ६०
तीर्थे युगादौ मन्वादौ श्राद्धं दत्तमथाक्षयम् । अश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा ॥ ६१
तृतीया चैव माघस्य तथा भाद्रपदस्य च । फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा ॥ ६२
आषाढस्यापि दशमी माघमासस्य सप्तमी । श्रावणे चाष्टमी कृष्णा तथाऽऽषाढे च पूर्णिमा ॥
कार्तिकी फाल्गुनी तद्वज्ज्येष्ठे पञ्चदशी सिता[2] । स्वायंभुवाद्या मनवस्तेषामाद्याः किलाक्षयाः ॥
गया प्रयागो गङ्गा च कुरुक्षेत्रं च नर्मदा । श्रीपर्वतः प्रभासश्च शालग्रामो वराणसी ॥ ६५
गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु ॥ ६६

इत्यादिमहापुराण आग्नेये श्राद्धकल्पवर्णनं नाम सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७५२

---

अथाष्टादशाधिकशततमोऽध्यायः ।

---

## भारतवर्षवर्णनम् ।

अग्निरुवाच—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम नवसाहस्रविस्तृतम् ॥ १
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् । महेन्द्रो मलयः सह्यः शुक्तिमान्हे(न्हि?)मपर्वतः[3] ॥ २
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः । इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ॥ ३
नागद्वीपस्तथा सौम्यो[4] गान्धर्वस्त्वथ वारुणः । अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ४
योजनानां सहस्राणि द्वीपोऽयं दक्षिणोत्तरात् । नव भेदा भारतस्य मध्यभेदेऽथ पूर्वतः ॥ ५
किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः । वेदस्मृतिमुखा नद्यः पारियात्रोद्भवास्तथा ॥ ६
विन्ध्याच्च नर्मदाद्याः स्युः सह्यात्तापी पयोष्णिका । गोदावरी भीमरथी कृष्णवेणादिकास्तथा ॥
मलयात्कृतमालाद्यास्त्रिसामाद्या महेन्द्रजाः । कुमाराद्याः शुक्तिमतो हिमाद्रेश्चन्द्रभागका ॥
पश्चिमे कुरुपाञ्चालमध्यदेशादयः स्थिताः ॥ ८

इत्यादिमहापुराण आग्नेये भारतवर्षवर्णन नामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७६०

---

अथैकोनविंशत्यधिकशततमोऽध्यायः ।

---

## महाद्वीपादिवर्णनम् ।

अग्निरुवाच—

लक्षयोजनविस्तारं जम्बूद्वीपं समावृतम् । लक्षयोजनमानेन क्षैरोदेन[5] समन्ततः ॥ १

---

१ घ. छ. तेऽभिजा° । २ च. तथा । ३ क. ङ. च. °मानृक्षप° । ४ क. च. °म्यो गन्ध° । ५ घ. छ. क्षीरोदेन ।

( महाद्वीपादिवर्णनम् )

संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः । सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरास्तथा ॥ २
स्याच्छान्तभयः शिशिरः[1] सुखोदय इतः परः । आनन्दश्च शिवः क्षेमो ध्रुवस्तन्नाम वर्षकम् ॥३
मर्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी । सोमकः सुमना: शैलो वैभ्राजास्तज्जनाः[2] शुभाः ॥ ४
नद्यः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च । जीवनं पञ्चसाहस्रं धर्मो वर्णाश्रमात्मकः ॥ ५
आर्यकाः कुरवश्चैव विविंशा[3] भाविनश्च[4] ते । विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चैव[5] प्लक्षकः ॥ ६
मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः । वपुष्मतः सप्त पुत्राः शाल्मलेशास्तथाऽभवन् ॥ ७
श्वेतोऽथ हरितश्चैव जीमूतो लोहितः क्रमात् । वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८
द्विगुणो द्विगुणेनैव सुरोदेन समावृतः । कुमुदश्चानलश्चैव तृतीयस्तु बलाहकः ॥ ९
द्रोणः कङ्कोऽथ महिषः ककुद्मान्सप्त निम्नगाः । कपिलाश्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः
वायुरूपं यजन्ति[6] स्म सुरोदेनायमावृतः[7] । ज्योतिष्मतः कुशेशाः स्युरुद्भिदो वेणुमान्सुतः[8] ॥ ११
द्वैरथी[9] लम्बनी धैर्यः कपिलश्च प्रभाकरः । विप्राद्या दधिमुख्यास्तु[10] ब्रह्मरूपं यजन्ति ते ॥ १२
विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा । कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥ १३
वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ । क्रौञ्चेश्वरा द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४
(*कुशलो[11] मनोनुगश्चोष्णः[12] प्रधानोऽथान्धकारकः । मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः)
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो[13] मिथः ॥ १६
द्वीपा द्वीपेषु ये शैला यथा द्वीपानि ते तथा । पुष्करा: पुष्कला[14] धन्यास्तिथ्यां[15][16] विप्राद्यो हरिम्
यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः । संवृतः शाकद्वीपेन[17] भव्याच्छाकेश्वराः सुताः ॥ १८
जलदश्च[18] कुमारश्च सुकुमारो मणीचकः[19] । कुशोत्तरथो (रोऽथ) मोदाकी द्रुमस्तन्नामवर्षकाः[20] ॥१९
उदयाख्यो जलधरो रैवतः श्यामकोद्रकौ[21][22] । आम्बिकेयस्तथा रम्यः केशरी सप्त निम्नगाः ॥२०
मगा मगधमानस्यामन्दगाश्च द्विजातयः । यजन्ति सूर्यरूपं तु शाकः क्षीराब्धिनाऽऽवृतः ॥ २१
पुष्करेणाऽऽवृतः सोऽपि द्वौ पुत्रौ सवनस्य च । महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥ २२
एकोऽद्रिर्मानसाख्योऽत्र मध्यतो वलयाकृतिः । योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥
जीवनं दशसाहस्रं सुरैर्ब्रह्माऽत्र पूज्यते । स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः २४
ऊनातिरिक्तता चापां समुद्रेषु न जायते । उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ २५
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै । अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥ २६

---

* क. ङ. पुस्तकयोर्नास्ति धनुश्चिह्नान्तर्गतो ग्रन्थः ।

---

१ क. ग. °मेरुश्च° । २ घ. °स्तज्जनाः । ३ क. निर्विशा । च. विदिशो । ४ च. भापिनिश्चिते । ५ घ. छ. °क्षश्चा-ब्धिलक्ष° । ६ च. भजन्ति । ७ च. °देन समा° । ८ घ. छ. °रुद्भिजो धेनुमा° । ९ क. द्वैरथो । १० घ. छ. दधिमु° । ११ ख. ग. °लो मुन्नटश्चो° । च. °लोमानु° । १२ ख. ग. च. °ष्णः पीवरोऽप्यन्ध° । १३ क. ङ. °गुणा मि° । १४ क. ङ. °ष्करावश्यां तिथ्यां । च. °ष्करावत्यां तिथ्यां । १५ घ. छ. °न्यास्तीर्था वि° । १६ ख. ग. °स्तिथ्या वि° । १७ घ. छ. °न हव्या° । १८ च. °लजश्च । १९ घ. छ. °णीवकः । २० क. ङ. कुसुमोत्तरः ससोदाकिर्द्रुम° । ख. ग. कुसुमोत्तरः समोदाकिर्द्रुम° । २१ क. °मकेदकौ । २२ ख. ग. °कोद्रकौ ।

स्वादूदकात्तु[1] द्विगुणा[2] भूर्हैमी जन्तुवर्जिता । लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥ २७
लोकालोकस्तु तमसाऽऽवृतोऽथाण्डकटाहतः । भूमिः साऽण्डकटाहेन पञ्चाशत्कोटिविस्तरा ॥२८

इत्याग्नेये महापुराणे महाद्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७८८

---

अथ विंशत्यधिकशततमोऽध्यायः ।

---

भुवनकोशवर्णनम् ।

अग्निरुवाच—

विस्तारस्तु स्मृतो[3] भूमेः सहस्राणि च सप्ततिः । उच्छ्रायो दशसाहस्रं पातालं चैकमेककम् ॥ १
अतलं वितलं चैव नितलं च गभस्तिमत् । महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् ॥ २
कृष्णपीतारुणाः शुक्लशर्कराः शैलकाञ्चनाः । भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम् ॥ ३
पातालानामधश्चाऽऽस्ते शेषो विष्णुश्च तामसः । गुणानन्त्यात्स चानन्तः शिरसा धारयन्महीम्
*भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः । रविणा भासिता पृथ्वी यावत्तावन्नभो मतम् ॥ ५
भूमेर्योजनलक्षं तु वसिष्ठ रविमण्डलम् । रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः ॥ ६
द्विलक्षाद्भाद्बुधश्चाऽऽस्ते बुधाच्छुक्रो द्विलक्षतः । द्विलक्षेण कुजः शुक्राद्भौमाद्द्विलक्षतो गुरुः॥७
गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः । लक्षाद्ध्रुवो ह्यृषिभ्यस्तु त्रैलोक्यं[4] चोच्छ्रयेण च ॥ ८
ध्रुवात्कोट्या महर्लोको यत्र ते कल्पवासिनः । जनो द्विकोटितस्तस्माद्यत्राऽऽसन्सनकादयः ॥९
जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः । षण्णवत्या तु कोटीनां तपसः सत्यलोककः ॥ १०
अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः । पादगम्यस्तु भूर्लोको भुवः सूर्यान्तरः स्मृतः ॥११
स्वर्गलोको ध्रुवान्तस्तु निर्युतानि[5] चतुर्दश । एतदण्डकटाहेन वृतो ब्रह्माण्डविस्तरः ॥ १२
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः । वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥ १३
दशोत्तराणि शेषाणि एकैकस्मान्महामुने । महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ १४
अनन्तस्य न तस्यान्तः संख्यानं[6] नापि विद्यते । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥ १५
असंख्यातानि चाण्डानि तत्र जातानि चेदृशाम्[7] । दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानिति॥१६
प्रधाने च स्थितो व्यापी[8] चेतनात्माऽऽत्मवेदनः[9] । प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥ १७
विष्णुशक्त्या महाप्राज्ञ वृतौ संश्रयधर्मिणौ । तयोः सैव पृथग्भावे कारणं संश्रयस्य च ॥ १८
क्षोभकारणभूतश्च सर्गकाले महामुने । यथा शैत्यं जले वातो बिभर्ति कणिकागतम् ॥ १९
जगच्छक्तिस्तथा विष्णोः प्रधानप्रतिपादिकाम्[10] । विष्णुशक्तिं समासाद्य देवाद्याः संभवन्ति हि
स च विष्णुः स्वयं ब्रह्म[11] यतः सर्वमिदं जगत् । योजनानां सहस्राणि भास्करस्य रथो नव २१

---

* इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ घ. छ. °दका बहुगु° । २ ख. ग. त्रिगुणा । ३ क. ङ. च. श्रुतो । ४ घ. छ. °लोक्याच्चोच्छ्° । ५ च. अयुतानि । ६ क. ङ. च. °नं नैव वि° । ७ क. ङ. च. °दृशाः । दा° । ८ क. °पी तन्मामा सुप्रवे° । ९ ख. ग. °नात्माऽऽत्म° । १० क. ख. ग. ङ. च. °पादकम् । ११ क. ङ. च. ब्रह्मा ।

ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम । सार्धकोटिस्तथा सप्त नियुतान्यधिकानि वै ॥ २२
योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् । त्रिनाभिमतिपञ्चारं(?) षण्नेमि ह्ययनात्मकम् २३
संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् । चत्वारिंशत्सहस्राणि द्वितीयाक्षो विवस्वतः ॥ २४
पञ्चान्यानि तु सार्धानि स्यन्दनस्य महामते । अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्धयोः ॥ २५
ह्रस्वोऽक्षस्तद्युगार्धं च ध्रुवाधारं रथस्य वै । हयाश्च सप्त च्छन्दांसि गायत्र्यादीनि सुव्रत ॥ २६
उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः । यावन्मात्रप्रदेशे तु वसिष्ठावस्थितो ध्रुवः ॥ २७
स्वयमायाति तावत्तु भूमेराभूतसंप्लवम् । ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ २८
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् । निर्धूतदोषपङ्कानां(णां) यतीनां स्थानमुत्तमम् ॥
ततो गङ्गा प्रभवति स्मरणात्पापनाशनी । दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभोः ॥ ३०
स्थितः पुच्छे ध्रुवस्तत्र भ्रमन्भ्रामयति ग्रहान् । (*स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिर्वरैः ३१
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः । ) हिमोष्णवारिवर्षाणां कारणं भगवान्रविः ॥ ३२
ऋग्वेदादिमयो विष्णुः स शुभाशुभकारणम् । रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ३३
वामदक्षिणतो युक्ता दश तेन चरत्यसौ । त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ ३४
त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकरम् । एकां कलां च पितर एकामारश्मिसंस्थिताः ॥ ३५
वाय्वग्निद्रव्यसंभूतो रथश्चन्द्रसुतस्य च । अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि ॥ ३६
शुक्रस्यापि रथोऽष्टाश्वो भौमस्यापि रथस्तथा । बृहस्पते रथोऽष्टाश्वः शनेश्चाष्टाश्वको रथः ॥ ३७
स्वर्भानोश्च रथोऽष्टाश्वः केतोश्चाष्टाश्वको रथः । यदद्य वैष्णवः कायस्ततो विप्र वसुंधरा ॥ ३८
पद्माकारा समुद्भूता पर्वताद्यादिसंयुता । ज्योतिर्भुवननद्यद्रिसमुद्रवनकं हरिः ॥ ३९
यदस्ति नास्ति तद्विष्णुर्विष्णुज्ञानविजृम्भितम् । न विज्ञानमृते किंचिज्ज्ञानं विष्णुः परं पदम् ॥
तत्कुर्याद्येन विष्णुः स्यात्सत्यं ज्ञानमनन्तकम् । पठेद्भुवनकोशं हि यः सोऽवाप्तसुखात्मभाक् ४०
ज्योतिःशास्त्रादिविद्याश्च शुभाशुभाधिपो हरिः ॥ ४२

इत्यादिमहापुराण आग्नेये भुवनकोशवर्णनं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८३०

---

अथैकविंशत्यधिकशततमोऽध्यायः ।

---

## ज्योतिःशास्त्रकथनम् ।

अग्निरुवाच—

ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम् । चातुर्लक्षस्य सारं यत्तज्ज्ञात्वा सर्वविद्भवेत् ॥ १
षट्काष्टके विवाहो न न च द्विर्द्वादशे स्त्रियाः । न त्रिकोणे ह्यथ प्रीतिः शेषे च समसप्तके ॥ २

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. पुस्तकयोः ।

१ क. ङ. °मिन्यक्षयार्थके । सं° । ख. ग. °मिथ्यक्षयात्मके । सं° । २ क. ङ. च. °तो बुधः । क्षय° । ३ ख. ग. घ. छ. °प्लवे । ऊ° । ४ च. °ति सर्वपापप्रणाश° । ५ ख. ग. घ. छ. प्रभो । ६ च. °तो दैत्यैरा° । ७ च. °भिर्भटैः । ग° । ८ घ. °दाचर° । ९ ख. ग. °धः । एताद्धि वै° । १० ख. °शुभधियां ह° । ११ घ. छ. षडष्टके । १२ घ. छ. द्विद्वाद° ।

द्विर्द्वादशे त्रिकोणे च मैत्री क्षेत्रपयोर्यदि । भवेदेकाधिपत्यं च ताराप्रीतिरथापि वा ॥ ३
तथाऽपि कार्यः संयोगो न तु षट्काष्टके पुनः । जीवे भृगौ चास्तमिते म्रियते च पुमान्स्त्रियाः[1] ॥
गुरुक्षेत्रगते सूर्ये सूर्यक्षेत्रगते गुरौ । विवाहं न प्रशंसन्ति कन्यावैधव्यकृद्भवेत् ॥ ५
अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम् । व्रतोद्वाहौ न कुर्वीत गुरोर्वक्रा(र्वाऽग्र्या)तिचारयोः ॥६
चैत्रे पौषे[2] न[4] रिक्तासु[3] हरौ सुप्ते कुजे रवौ । चन्द्रक्षये चाशुभं स्यात्संध्याकालः शुभावहः ॥ ७
रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती । तुले चैव मिथुने शस्तो विवाहः परिकीर्तितः ॥ ८
विवाहे कर्णवेधे च व्रते पुंसवने तथा । प्राशने चाऽऽद्यचूडायां विरुद्धर्क्षे[5] च विवर्जयेत् ॥ ९
श्रवणे मूलपुष्ये च सूर्यमङ्गलजीवके । कुम्भे सिंहे च मिथुने कर्म पुंसवनं स्मृतम् ॥ १०
हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः । अर्केन्दुजीवभृगुजे मूले ताम्बूलभक्षणम् ॥ ११
अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके । हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा ॥ १२
अश्विन्यामथ रेवत्यां नवान्नफलभक्षणम् । पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनी ॥ १३
स्वातिसौम्ये च भैषज्यं कुर्यादन्यत्र वर्जयेत् । पूर्वात्रयं मघा याम्यं पावनं श्रवणत्रयम् ॥ १४
भौमादित्यशनेर्वारे स्नातव्यं रोगमुक्तितः[6] । पार्थिवे चाष्टह्रींकारं मध्ये नाम च दिक्षु च ॥ १५
ह्रींपुटं[7] पार्थिवे दिर्क्षु[8] ह्रीं विदिक्षु लिखेद्वसून् । गोरोचनाकुङ्कुमेन भूर्जे वस्त्रे गले[9] धृतम् ॥ १६
शत्रवो वशमायान्ति मन्त्रेणानेन निश्चितम् । श्रीं ह्रीं संपुटं नाम श्रीं ह्रीं[च] पत्राष्टके क्रमात् ॥
गोरोचनाकुङ्कुमेन(*भूर्जे[10]ऽथ सुभगावृते । गोमध्ये[11]वागमः पत्रे हरिद्राया रसेन च[12] ॥ १८
शिलापट्टेऽरीन्स्तम्भयति भूमावधोमुखीकृतम्[13] । ॐ[14] हूं सः संपुटं नाम[15] ओं हूं[16] सः पत्राष्टके क्रमात्
गोरोचनाकुङ्कुमेन) भूर्जे मृत्युनिवारणम् । एकपञ्चनव प्रीत्यै द्विषड्द्वादश योगकाः[17] ॥ २०
त्रिसप्तैकादशे लाभो वेदाष्टद्वादशे रिपुः । तनुर्धनं च सहजः सुहृत्सुतौ रिपुस्तथा ॥ २१
जाया निधनधर्मौ च कर्माऽऽयव्ययकं क्रमात् । स्फुटं मेषादिलग्नेषु नवताराबलं वदेत् ॥ २२
जन्म संपद्विपत्क्षेमं प्रत्यरिः साधकः क्रमात् । निधनं मित्रपरममित्रं ताराबलं विदुः ॥ २३
वारे ज्ञगुरुशुक्राणां सूर्याचन्द्रमसोस्तथा । माघादिमासषट्के तु क्षौरमाद्यं प्रशस्यते ॥ २४
कर्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः । पञ्चमेऽब्दे[18] चाध्ययनं षष्ठीप्रतिपदं त्यजेत् ॥ २५
रिक्तां पञ्चदशीं भौमं प्राच्यं वाणीं हरिं श्रियम् । माघादिमासषट्के तु मेखलाबन्धनं शुभम् २६
चूडाकरण[19]माद्यं च श्रावणादौ न शस्यते । अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने ॥ २७
उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्दिशेत् । क्षौरर्क्षे शुभवारे च समावर्तनमिष्यते ॥ २८
शुभक्षेत्रे विलग्नेषु शुभयुक्तेक्षितेषु च । अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च ॥ २९

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति च. पुस्तके ।

---

१ घ. छ. °न्स्त्रिया । गु° । २ ख. ग. तु । ३ घ. छ. रक्तासु । ४ ख. ग. तु । घ. छ. न । ५ क. ङ. च. °द्धमृक्षं विव° । ६ क. ङ. च. °क्तिदः । पा° । ७ क. ङ. च. °पुटे पा° । ८ क. ख. ग. ङ. °क्षु विदिक्षु ह्रीं लि° । ९ क. ङ. च. गर्णवृत° । १० क. ङ. °र्जेऽथाक्षतगोघृते । ११ क. ङ. °ध्यरामगः प° । १२ क. ङ. च । ॐ । १३ क. °म् । ओमों शः सं । १४ ख. ग. ॐ भूं सः । १५ क. °म श्रीम्, ॐ सं जुसः । ङ. °म श्रीम्, ॐ जुसः । १६ ख. ग. भूः । १७ क. योक्यकाः । ङ. योस्वकाः । च. दोषकः । १८ क. °ब्दे भावप(फ)लं ष° । ङ. °ब्दे भाव्यफलं ष° । १९ क. घ. छ. °णकायं ।

( ज्योतिःशास्त्रकथनम् )

पुनर्वसौ तथा पुष्ये धनुर्वेदः प्रशस्यते । भरण्यार्द्रा मघाऽश्लेषा वह्निभगर्क्षयोस्तथा ॥ ३०
जिजीविषुर्न कुर्वीत वस्त्रप्रावरणं नरः । गुरौ शुक्रे बुधे वस्त्रं विवाहादौ न भादिकम् ॥ ३१
रेवत्यश्वि[1]धनिष्ठासु हस्तादिषु च पञ्चसु । शङ्खविद्रुमरत्नानां परिधानं प्रशस्यते ॥ ३२
याम्यसार्पधनिष्ठासु त्रिषु पूर्वेषु[2] वाँनने[3](चानले) । क्रीतं हानिकरं द्रव्यं विक्रीतं लाभकृद्भवेत् ३३
अश्विनीस्वातिचित्रासु रेवत्यां वारुणे हरौ । क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवेत् ॥ ३४
भरणी त्रीणि पूर्वाणि आर्द्राश्लेषामघानिलाः । वह्निज्येष्ठाविशाखासु स्वामिनो नोपतिष्ठते[4]॥३५
द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम्[5] । उत्तराश्रवणे शाके कुर्याद्राजाभिषेचनम् ॥ ३६
चैत्रं ज्येष्ठं तथा भाद्रमाश्विनं पौषमेव च । माघं चैव परित्यज्य शेषमासे गृहं शुभम् ॥ ३७
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् । स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥ ३८
आदित्यभौमवर्जं तु वापीप्रासादके तथा । सिंहराशिगते[6] जीवे गुर्वादित्ये मलिम्लुचे ॥ ३९
बाले वृद्धेऽस्तगे शुक्रे गृहकर्म विवर्जयेत् । अग्निदाहो भयं रोगो राजपीडा धनक्षतिः ॥ ४०
संग्रहे तृणकाष्ठानां कृते श्रवणपञ्चके । गृहप्रवेशनं कुर्याद्धनिष्ठोत्तरवारुणे ॥ ४१
नौकाया घटने द्वित्रिपञ्चसप्तत्रयोदशी । नृपदर्शो धनिष्ठासु हस्तपौष्णा[7]श्विनीषु च ॥ ४२
पूर्वात्रयं धनिष्ठाऽऽर्द्रा वह्निः सौम्यविशाखयोः । आश्लेषा चाश्विनी चैव यात्रासिद्धिस्तु संपदा[8]
त्रिषूत्तरेषु[9] रोहिण्यां सिनीवाली चतुर्दशी । श्रवणा चैव हस्ता च चित्रा चैवाष्टमी तथा ॥ ४४
गोषु[10] यात्रां न कुर्वीत प्रवेशं नैव कारयेत् । *अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ ॥ ४५
पुष्यश्रवणहस्तेषु कृषिकर्म समाचरेत् । पुनर्वसूत्तरास्वातीभगमूलेन्द्रवारुणे ॥ ४६
गुरोः शुक्रस्य वारे वा वारे[11] च सोमभास्वतोः । वृषलग्ने च[12] कर्तव्यं कन्यायां मिथुने तथा[13]॥४७
द्विपञ्चदशमी सप्ततृतीया च त्रयोदशी । रेवती रोहिणीन्द्राग्नि[14]हस्तमैत्रोत्तरेषु च[15] ॥ ४८
मन्दारवर्जं बीजानि वापयेत्संपदर्थ्यपि । रेवतीहस्तमूलेषु श्रवणे भगमैत्रयोः ॥ ४९
पितृदैवे तथा सौम्ये +धान्यच्छेदं मृगोदये । हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये ॥ ५०
स्थिरे लग्ने गुरोर्वारे[16]ऽथ वा भार्गवसौम्ययोः । याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत् ॥ ५१
ॐ[17] धनदाय सर्वधनेशाय देहि मे धनं स्वाहा । ॐ नवे हर्षे[18], इलादेवि लोकसंवर्धिनि कामरू[19]-
पिणि देहि मे धनं स्वाहा ॥ ५२
पत्रस्थं[20] लिखितं धान्यराशिस्थं धान्यवर्धनम् । त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च ५३
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः । देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ॥ ५४
मिथुनस्थे रवौ दर्शाद्यदि स्याद्द्वादशी तिथिः । सदा तत्रैव कर्तव्यं शयनं चक्रपाणिनः(?)॥५५
सिंहतौलिगते चार्के दर्शाद्यद्द्वादशीद्वयम् । आदाविन्द्रसमुत्थानं प्रबोधश्च हरेः क्रमात् ॥ ५६

---

* एतदाद्यर्धद्वयं च. पुस्तक एतस्मात्पूर्वमेव संपदेत्यस्याग्रे वर्तते । + यथायथं क्रियापदयोजनं कार्यम् ।

---

१ क. ङ. च. °पविशाखासु । २ क. ख. ग. ङ. च. पूर्वासु । ३ घ. छ. वारुणे । ४ क. ख. ग. ङ. च. °ष्ठति । द्र° । ५ च. फलम् । ६ च. °ते चैव गु° । ७ ग. घ. च. छ. हस्तापौ° । ८ ख. °द्विश्चतुष्पदे । त्रि° । ९ क. ख. ग. ङ. च. °त्तरासु रो° । १० घ. छ. गोष्ठया° । ११ च. °रे सोमसुतस्य च । वृ° । १२ च. न । १३ च. °था । त्रिप° । १४ च. °न्द्राश्विह° । १५ ख. ङ. च । मैत्रं च व° । १६ ख. ग. घ. छ. °वारे अथ भा° । १७ ख. ॐ श्रीध° । १८ घ. छ. वर्षे । १९ क. ङ. कामरूपिणो । २० क. ख. ग. ङ. यत्रस्थं । च. यन्त्रस्थं ।

तथा कन्यागते भानौ दुर्गोत्थाने तथाऽष्टमी । त्रिपादेषु च ऋक्षेषु यदा भद्रा तिथिर्भवेत् ॥ ५७
भौमादित्यशनैश्चारी(?)[1] विज्ञेयं तत्त्रिपुष्करम् । सर्वकर्मण्युपादेया विशुद्धिश्चन्द्रतारयोः[2] ॥ ५८
जन्माश्रितस्त्रिषष्ठश्च सप्तमो दशमस्तथा । एकादशः शशी येषां तेषामेव शुभं वदेत् ॥ ५९
शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः । मित्रातिमित्रसाधकसंपत्क्षेमादितारकाः ॥ ६०
जन्मना मृत्युमाप्नोति विपदा धनसंक्षयम् । प्रत्यरौ मरणं विद्यान्निधने याति पञ्चताम् ॥ ६१
कृष्णाष्टमीदिनादूर्ध्वं यावच्छुक्लाष्टमीदिनम् । तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः ॥ ६२
वृषे च मिथुने भानौ जीवे चन्द्रेन्द्रदैवते । पौर्णमासी गुरोर्वारे महाज्यैष्ठी[3] प्रकीर्तिता ॥ ६३
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा ज्येष्ठमासस्य महाज्यैष्ठी[4] प्रकीर्तिता ॥ ६४
स्वात्यन्तरे यन्त्रनिष्ठे[5] शक्रस्योत्थापयेद्ध्वजम् । हर्यृक्षपादे[6] चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥ ६५
सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः[7] । सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥ ६६
ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी तिला । राक्षसी च क्रमेणार्कात्संक्रान्तिर्नामभिः स्मृता
बालवे कौलवे नागे तैतिले करणे यदि । उत्तिष्ठन्संक्रमत्यर्कस्तदा लोकः सुखी भवेत् ॥ ६८
*गरे बवे वणिग्विष्टौ किंस्तुघ्ने शकुनौ व्रजेत् । राज्ञो दोषेण लोकोऽयं पीड्यते संपदा[8] समम् ॥
चतुष्पाद्विष्टिवाणिज्ये शयितः संक्रमेद्रविः । दुर्भिक्षं राजसङ्ग्रामो दंपत्योः संशयो भवेत् ॥ ७०
कृत्तिकायां नवदिनं त्रिरात्रं[9] रोहिणीषु च । +मृगशिरः पञ्चरात्रमार्द्रासु प्राणनाशनम् ॥ ७१
पुनर्वसौ च पुष्ये च सप्तरात्रं विधीयते । नवरात्रं तथाऽश्लेषा श्मशानान्तं मघासु च ॥ ७२
द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम् । हस्ते तु दृश्यते चित्रास्त्वर्धमासं[10] तु पीडनम् ॥ ७३
मासद्वयं तथा स्वातिविशाखा विंशतिर्दिनम्[11](?) । मैत्रे चैव दशाहानि ज्येष्ठास्वेवार्धमासकम् ७४
मूलेन जायते मोक्षः पूर्वाषाढा त्रिपञ्चकम् । उत्तरा दिनविंशत्या द्वौ मासौ श्रवणेन[12] च ॥ ७५
धनिष्ठा चार्धमासं च वारुणे च दशाहकम् । नव[13] भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् ॥ ७६
रेवती दशरात्रं च अहोरात्रं तथाऽश्विनी । भरण्यां प्राणहानिः स्याद्गायत्रीहोमतः शुभम् ॥ ७७
पञ्चधान्यतिलाज्याद्यैर्धेनुदानं[14] द्विजे[15] शमम् । दशा सूर्यस्य[16] चाष्टाब्दा इन्दोः पञ्चदशैव तु ॥ ७८
अष्टौ वर्षाणि भौमस्य दश सप्त दशा बुधे । दशाब्दानि दशा पङ्गोरूनविंशद्गुरोर्दशा ॥
राहोर्द्वादश वर्षाणि भार्गवस्यैकविंशतिः ॥ ७९

इत्यादिमहापुराण आग्नेये ज्योतिःशास्त्रकथनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०९

---

* इदमर्धं क. ङ. च. पुस्तकेषु नास्ति । + यत्तच्छब्दाध्याहारेण योजना कर्तव्या । एवमेव पूर्वत्राग्रे च तत्र तत्र द्रष्टव्यम् ।

१ घ. छ. °श्चारिवि° । २ च. °न्द्रसूर्ययोः । ३ ख. ग. च. महाज्येष्ठी । ४ ख. ग. च. महाज्येष्ठी । ५ क. ङ °निधि पश्चादुत्था° । ६ क. ङ. च. हर्यश्वपादे । ख. ग. हर्याश्वपादे । ७ घ. छ. °नीद्विजाः । रा° । ८ क. ख. ग. ङ. च °ते सपदा समः । च° । ९ च. द्विरात्रं । १० घ. छ. °त्रा अर्धं° । ११ घ. छ. °तिर्विंशा° । १२ च. श्रवणस्य । १३ घ. ङ. छ. न च भा° । १४ क. ङ. च. °नं निजैः सम° । १५ ख. ग. °जेशयः । द° । १६ घ. छ. °स्य षष्टाब्दा ।

अथ द्वाविंशत्यधिकशततमोऽध्यायः ।

## कालगणनम् ।

अग्निरुवाच—

कालः समागणो वक्ष्ये गणितं कालबुद्धये[1] । कालः समागणोऽर्कघ्नो मासैश्चैत्रादिभिर्युतः[2] ॥ १
द्विघ्नो द्विष्ठः सवेदः स्यात्पञ्चाङ्गाष्ट्युतो[3] गुणः । त्रिष्ठो[4] मध्यो वसुगणः पुनर्वेदगुणश्च सः ॥ २
अष्टरन्ध्राग्निहीनः स्यादधः सैकरसाष्टकैः । मध्यो हीनः षष्टिहतो[5] लब्धयुक्तस्तथोपरि ॥ ३
न्यूनः सप्तकृतो वारस्तदधस्तिथिनाडयः[6] । सगुणो[7] द्विगुणश्चोर्ध्वे[8] त्रिभिरूनो गुणः पुनः ॥ ४
अधः खरामसंयुक्तो[9] रसार्काष्टपलैर्युतः । अष्टाविंशच्छेषपिण्डस्तिथिर्नाड्या[11] अधः स्थितेः[12] ॥ ५
गुणस्त्रिसप्तभिरूनोऽर्ध्वे[13] द्वाभ्यां च[14] गुणयेत्पुनः । मध्ये रुद्रैर्गुणः[15] कार्यो ह्यधः सैको नवाग्निभिः[16] ॥ ६
लब्धहीनो भवेन्मध्यो[17] द्वाविंशतिविवर्जितः । षष्टिशेष[18] ऋणं ज्ञेयं लब्धमूर्ध(र्ध्वे(?)) विनिक्षिपेत्[19] ॥ ७
सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः । मासि मासि क्षिपेद्वारं[20] द्वात्रिंशद्घटिकास्तिथौ ॥ ८
द्वे पिण्डे द्वे च नक्षत्रे नाड्य एकादश ह्यृणे । वारस्थाने तिथिं दद्यात्सप्तभिर्भागमाहरेत् ॥ ९
शेषवाराश्च सूर्याद्या घटिकासु च पातयेत्[23] । पिण्डकेषु तिथिं दद्याद्द्वैरश्चैव[21] चतुर्दशे[22] ॥ १०
*ऋणं धनं धनमृणं क्रमाज्ज्ञेयं चतुर्दश । प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश ॥ ११
पञ्चदश तृतीये च तथा चैकादशे स्मृतम् । चतुर्थे दशमे चैव भवेदेकोनविंशतिः ॥ १२
पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः[24] । +षष्ठाष्टमे त्वखण्डाः स्युश्चतुर्विंशतिरेव च ॥ १३
सप्तमे पञ्चविंशः स्यात्खण्डशः[25] पिण्डकाद्भवेत् । कर्कटादौ हरेद्राशिमृतुवेदत्रयैः क्रमात् ॥ १४
तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । मकरादौ दीयते(न्ते(?)) च रसवेदत्रयः क्रमात्
मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् । खपवः[26] खयुगा मैत्रे मेषादौ विकला धनम् ॥ १६
कर्कटे प्रातिलोम्यं स्यादृणमेतत्तुलादिके । चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा ॥ १७
हन्याल्लिप्तां गतागामिपिण्डसंख्याफलान्तरैः । षष्ट्याऽऽप्तं[28] प्रथमोचार्ये[29] हानौ देयं धने धनम् ॥ १८
द्वितीयोच्चरिते वर्गे[30] वैपरीत्यमिति स्थितिः । तिथिर्द्विगुणिता कार्या षड्भागपरिवर्जिता[31] ॥ १९
रविकर्मविपरीता तिथिनाडीसमायुता । ऋणे शुद्धे तु नाड्यः स्युर्ऋणं शुध्येत नो यदा ॥ २०
सषष्टिकं प्रदेयं तत्षष्ट्याधिक्ये च तत्त्यजेत् । नक्षत्रं तिथिमिश्रं स्याच्चतुर्भिर्गुणिता तिथिः ॥ २१

---

* इदमर्धं क. ग. ङ. पुस्तकेषु नास्ति । + क ङ. च. पुस्तकेष्विदमर्धं नास्ति ।

---

१ क. ङ. कालयुद्धये । ख. ग. कालवृद्धये । च. कालसिद्धये । २ ख. ङ. मासश्चै° । ३ क. ङ. च. °ङ्गास्तयु° । ४ क. ङ. त्रिष्वे म° । ५ क. च. °ष्टिकृतो । ६ क. ङ. °थिवाहनः । स° । ७ च. °गुणैः सार्धं त्रिभिर्गुणकगणः । ८ क. ङ. °णश्चार्धं त्रि° । ९ क. °क्तो वसर्कोऽष्ट° । १० क. ङ. °विंशः शेष° । ११ क. ङ. °नाथादधः । १२ क. ख. ग. ङ. °तः । गण° । १३ क. ङ. गुणः श्रेष्ठस्त्रिरूर्ध्वेऽथ द्वा° । १४ क. ख. ग. ङ. च गण° । १५ क. ख. ग. ङ. रुद्रगणः । १६ ख. ग. नराग्नि° । १७ क. ङ. °न्मध्ये द्वा° । १८ क. ङ. °शेषो ह्यृणं । १९ क. ङ. लब्धः पूर्वं वि° । २० ख. °याद्वारे दैव । २१ क. ङ. °द्वरश्चैव । २२ ख. °श । धनमृणं ध° । २३ घ. छ. °दशे । प्र° । २४ क. ख. ग. ङ. च. द्वात्रिंश° । २५ क. ङ. °स्यात्पण्डकः पि° । २६ ख. मेघतः । २७ घ च. छ. °ता मता° । २८ ख. ग. °ष्ट्यात्सप्रथमोच्चार्ये हा° । २९ क. °थमे द्वार्ये (हार्ये) हा° । ३० क. वर्ह्वैप° । ३१ च. °ता । परिक° ।

तिथिस्त्रिभागसंयुक्ता ऋणेन च तथाऽन्विता । तिथिरत्र[1] चिता कार्या[3] तैद्वेदाद्योगशोधनम् ॥२२
रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः । एकोना तिथिर्द्विगुणा सप्तभिन्नाकृतिर्द्विधा ॥२३
तिथिश्च द्विगुणैकोना कृताङ्कैः करणं निशि । कृष्णचतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदम् ॥
प्रथमे तिथ्यर्धतो हि किंस्तुघ्नं प्रतिपन्मुखे ॥ २४

इत्याग्निमहापुराण आग्नेये कालगणनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९३३

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

## युद्धजयार्णवीयनानायोगाभिधानम् ।

अग्निरुवाच—

वक्ष्ये जयशुभाद्यर्थं सारं युद्धजयार्णवे । अ इ उ ए ओ स्वराः स्युः क्रमान्नन्दादिका तिथिः १
कादिहान्ता[7] भौमरवी ज्ञसोमौ गुरुर्भार्गवौ । शनिर्दक्षिणनाड्यां[9] तु भौमार्कशनयः परे[10] ॥ २
खार्णवः खरसैर्गुण्यो रुद्रैर्भागं समाहरेत्[11] । रसोहतं[12] तु तत्कृत्वा पूर्वभागेन(ण) भाजयेत् ॥ ३
वह्निभिश्चाऽऽहतं कृत्वा रूपं तत्रैव निक्षिपेत् । स्पन्दनं नाड्याः पलानि सप्राणस्पन्दनं पुनः॥४
अनेनैव तु मानेन उदयन्ति दिने दिने । स्फुरणैस्त्रिभिरुच्छ्वास उच्छ्वासैस्तु पलं स्मृतम् ॥ ५
षष्टिभिश्च पलैर्लिप्ता लिप्ताषष्टिस्त्वहर्निशम् । पञ्चमार्धोदये बालकुमारयुववृद्धकाः ॥ ६
मृत्युर्येनोदयस्तेन[13][14] चास्तमेकादशांशकैः । कुलागमे भवेद्भङ्गः समृत्युः पञ्चमोऽपि वा ॥ ७

स्वरोदयचक्रम् ।

---

शनिचक्रे चार्धमासं ग्रहाणामुदयः क्रमात् । विभागैः पञ्चदशभिः शनिभागस्तु मृत्युदः ॥ ८

शनिचक्रम् ।

---

दशकोटिसहस्राणि अर्बुदं[15] न्यर्वुदं हरेत्[16] । त्रयोदश[17] च लक्षाणि प्रमाणं कूर्मरूपिणः ॥ ९
मघादौ कृत्तिकाद्यन्तस्तद्देशान्तः शनिस्थितौ ॥

कूर्मचक्रम् ।

---

राहुचक्रे च सप्तोर्ध्वमधः सप्त च संलिखेत् । वाय्वग्न्योश्चैव नैर्ऋत्ये पूर्णिमाऽऽग्नेयभागतः ॥१०
अमावास्यां वायवे च राहुर्वै तिथिरूपकः । रकारं[18] दक्षभागे तु हकारं वायवे लिखेत् ॥ ११

---

१ क. ङ. °थिवद्रजिता । ख. °थिवद्रुटिता । २ ग. °रत्रोचि° । ३ क. ङ. °र्या भवेदा° । ४ ख. तच्छेदा° । ५ क. ङ. च. °सच्छिन्ना° । ६ क. ङ. ए तु स्व° । ख. ग. ए ओमों स्व° । च. ए उ उं स्व° । ७ क. ङ. °दितास्ता भौ° ८ च. °भास्करौ । श° । ९ क. ङ. °कैमनयोः प° । १० क. च. °रे । खतुरः षरसौम्येन रु° । ११ क. ङ. °त् । जय ॐ र° । ख. ग. °त् । जयद ओन र° । १२ क. °सायनं तु । १३ च. °दयास्ते° । १४ क. ङ. °स्तेषां वास्तुमे° । १५ ख. ग. घ. छ. °र्बुदान्य° । १६ च. क्रमात् । १७ ख. ग. छ. °दशे च । १८ क पकारं । ख. ग. दकारं । च. एकारं ।

प्रतिपदादौ ककारादीन्सकारं नैर्ऋते पुनः । राहोर्मुखे तु भङ्गः स्यादिति[1] राहुरुदाहृतः ॥ १२
विष्टिरग्नौ पौर्णमास्यां करालीन्द्रे[2] तृतीयकम्[3] । घोरा याम्यां तु सप्तम्यां दशम्यां रौद्रसौम्यगा ॥
चतुर्दश्यां तु वायव्ये चतुर्थ्यां वरुणाश्रये[4] । शुक्लाष्टम्यां दक्षिणे च एकादश्यां भृशं त्यजेत् ॥ १४
रौद्रश्चैव तथा श्वेतो मैत्रः सारभटस्तथा । सावित्रो[5] विरोचनश्च जयदेवोऽभिजित्तथा ॥ १५
रावणो[6] विजयश्चैव नन्दी वरुण एव च । यमसौम्यौ भवश्चान्ते दश पञ्च मुहूर्तकाः ॥ १६
रौद्रे रौद्राणि कुर्वीत श्वेते स्नानादिकं चरेत् । मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् ॥ १७
सावित्रे स्थापनाद्यं वा विरोचने नृपक्रिया । जयदेवे जयं कुर्याद्रावणे[7] रणकर्म च ॥ १८
विजये कृषिवाणिज्यं पटबन्धं च नन्दिनि । वरुणे च तडागादि नाशकर्म यमे चरेत् ॥ १९
सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्दिवा । योगा नाम्नाऽविरुद्धाः स्युर्योगा नाम्नैव शोभनाः ॥
राहुरिन्द्रात्समीरं च वायोर्दक्षं यमाच्छिवम् । शिवादाप्यं जलादग्निरग्नेः सौम्यं ततस्त्रयम्[8] ॥२१
ततश्च संक्रमं हन्ति चतस्रो घटिका भ्रमन् ॥ २२

राहुचक्रम् ।

---

चण्डीन्द्राणी वाराही[9] च मुशली गिरिकर्णिका । बला चातिबला क्षीरी[10] मल्लिकाजातियूथिकाः
यथालाभं धारयेत्ताः श्वेतार्कश्च शतावरी । गुडूची वागुरी दिव्या ओषध्यो धारिता जये[11] ॥२४
ॐ नमो भैरवाय खड्गपरशुहस्ताय[12] ॐ ह्रूं[13] विघ्नविनाशाय ॐ ह्रूं[14] फट् ॥ २५
अनेनैव तु मन्त्रेण शिखाबन्धादिकृज्जये[15] । तिलकं[16] चाञ्जनं चैव धूपलेपनमेव च ॥ २६
स्नानपानानि तैलानि योगधूलिमतः[17] शृणु । सुभगा मनःशिला तालं लाक्षारससमन्वितम् ॥ २७
तरुणीक्षीरसंयुक्तो ललाटे तिलको वशे । विष्णुक्रान्ता च सर्पाक्षी सहदेवी[18] च रोचना ॥ २८
अजादुग्धेन[19] संपिष्टं तिलको वश्यकारकः । प्रियंगुकुङ्कुमं कुष्ठं मोहनी तगरं घृतम् ॥ २९
तिलको वश्यकृच्चैव रोचना रक्तचन्दनम् । निशा मनःशिला तालं प्रियंगुः सर्षपास्तथा ॥ ३०
मोहनी हरिता कान्ता सहदेवी शिखा तथा । मातुलुङ्गरसैः पिष्टं[20] ललाटे तिलको वशे ॥ ३१
सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः । मञ्जिष्ठा चन्दनं रक्तं कटुकन्दा विलासिनी३२
पुनर्नवासमायुक्तो लेपोऽयं भास्करो[21] वशे । चन्दनं नागपुष्पं च मञ्जिष्ठा तगरं वचा[22] ॥ ३३
लोध्रं प्रियंगुरजनी मांसीतैलं वशंकरम् ॥ ३४

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयनानायोगाभिधानं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९६७

---

१ क. स्यात्तिथीनां तु उदा° । २ ख. ग. छ. °राणीन्द्रे । ३ क. ङ. च. °यकाः । घो° । ४ च. श्रवणात्रये । ५ च. सरितो । ६ ङ. च. वारुणो । ७ च. °र्याद्वारणे । ८ क. ङ. च. ततः श्रिय° । ९ च. वराही । १० च. क्षीरा । ११ ख. च. जपेत् । १२ घ. छ. खण्डप° । १३ क. ङ. च. हूं । १४ क. ङ. च. हूं । १५ क. ङ. च. °जपेत् । ति° । १६ क. °कं वा जलं चै° । १७ क. °गव्रत्तिम° । १८ क. ङ. च. महादेवी । घ. छ. सहदेवं । १९ क. ङ. च. अञ्जलिहरसैः पि° । २० ख. ग. च. पिण्डं । २१ क. ङ. च. भास्करा । २२ क. ङ. च. तथा ।

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

युद्धजयार्णवीयज्योतिःशास्त्रसारः ।

अग्निरुवाच—

ज्योतिःशास्त्रादिसारं च वक्ष्ये युद्धजयार्णवे[1] । वेलामन्त्रौपधाद्यं च यथोमामीश्वरोऽब्रवीत्[2] ॥ १

देव्युवाच—

देवैर्जिता दानवाश्च येनोपायेन तद्वद । शुभाशुभविवेकाद्यं ज्ञानं[3] [4] युद्धजयार्णवम् ॥ २

ईश्वर उवाच—

मूलदेवेच्छया जाता शक्तिः पञ्चदशाक्षरा । चराचरं ततो जातं यामाराध्याखिलार्थवित् ॥ ३

मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवम् । ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः ॥ ४

ऋग्यजुःसामाथर्वाख्यवेदमन्त्राः क्रमेण ते । सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः[5] ॥ ५

ईशः सप्तशिखा देवाः शब्दाद्याः[6] पञ्च च स्वराः । अ इ उ ए ओं[7] कलाश्च मूलं ब्रह्मेति कीर्तितम्

काष्ठमध्ये यथा वह्निरप्रवृद्धो[8] न दृश्यते । विद्यमाना तथा देहे शिवशक्तिर्न[9] दृश्यते ॥ ७

आदौ शक्तिः समुत्पन्ना ओंकारस्वरभूषिता । ततो बिन्दुर्महादेवि एकारेण व्यवस्थितः ॥ ८

जातो नाद उकारस्तु नदते हृदि संस्थितः । अर्धचन्द्र इकारस्तु मोक्षमार्गस्य बोधकः ॥ ९

अकारोऽव्यक्त उत्पन्नो भोगमोक्षप्रदः परः । अकार ऐश्वरे भूमिर्निवृत्तिश्च कला स्मृता ॥ १०

गन्धो[10] न बीजः प्राणाख्य इडा शक्तिः स्थिरा स्मृता । इकारश्च प्रतिष्ठाख्यो रसोयानश्च[11] पिङ्गला[12]

क्रूरा शक्तिरीबीजः[13] स्याद्रवीजोऽग्निरूपवान्[14] । विद्या समाना गान्धारी शक्तिश्च[15] दहनी स्मृता

ए शान्तिर्वायुपस्पर्शो यश्चोदानश्चला क्रिया । ओंकारः शान्त्यतीताख्यः[16] खशब्दयूथपालिनः[17] १३

पञ्च[18] वर्गाः स्वरो[19] जाताः[20] कुजज्ञगुरुभार्गवाः । शनिः क्रमादकाराद्याः ककाराद्यास्त्वधः स्थिताः

एतन्मूलमतः सर्वं ज्ञायते सचराचरम् । विद्यापीठं प्रवक्ष्यामि प्रणवः शिव[21] ईरितः ॥ १५

उमा सोमः स्वयं शक्तिर्वामा ज्येष्ठा च रौद्र्यपि । ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः[22] सर्गादयस्त्रयः

रत्ननाडीत्रयं चैव स्थूलः सूक्ष्मः परोऽपरः । चिन्तयच्छ्वेतवर्णं[23] तं मुच्यमानं परामृतम्[24] ॥ १७

प्लाव्यमानं यथाऽऽत्मानं चिन्तयेत्तं दिवानिशम् । अजरत्वं भवेद्देवि[25] शिवत्वमुपगच्छति[26] ॥ १८

अङ्गुष्ठादौ न्यसेदङ्गान्नेत्रमध्येऽथ[27] देहके । मृत्युंजयं ततः प्रार्च्य रणादौ विजयी भवेत् ॥ १९

शून्यो निरालयः शब्दः स्पर्शस्तिर्यङ्गतं[28] [29] स्पृशेत् । रूपस्योर्ध्वगतिः प्रोक्ता जलस्याधः समाश्रिता

---

१ घ. छ. °ये । विना म° । २ क. ङ. च. °त् । उमोवा° । ३ क. ङ. च. ज्ञानयुद्धं ज° । ४ ख. ग. °नं सुदुर्जयं तु वै । ई° । ५ क. ङ. ब्रह्मविष्णुमहेश्वराः । ई° । ६ घ. छ. शकाद्याः । ७ घ. छ. ओ । ८ क. ङ. °र्द्विर्दुग्धमध्ये यथा घृतम् । वि° । ९ क. ङ. शिवे भक्ति° । १० ख. °न्धो वीचजः प्रा° । ११ क. ङ. रम्ये पालश्च । घ. छ. रसोपालश्च । १२ ख. °ला । कुर्याच्छक्तिर्हि बी° । १३ क. ङ. शक्तोऽथ बी° । १४ क. ङ. स्याधर° । १५ क. ङ. शक्तीश्वरमही स्मृ° । १६ क. ख. ङ. °ख्यः स्वंश° । ग. °ख्यः सश° । १७ घ. छ. °पाणिनः । १८ क ङ. °क्षरक्षाः स्व° । १९ क. ङ. °राजाताः । २० ख. ग. ज्ञाताः । २१ क. ङ. सित । च. स्थिर । २२ क. ख. ङ. च. °णाः स्वर्गा° । २३ च. °येच्छुभव° । २४ ङ. °म् । पृच्छ्यमानं यदाऽऽत्मा° । च. °म् । प्रार्च्यमानं तथाऽऽ° । २५ च. °वेद्वाऽपि शि° । २६ च. °त्वमाधिग° । २७ ख. ग. घ. छ. °त्रेत्रं म° । २८ ख. घ. स्पर्श तिर्य° । २९ ख. ग. च. °र्यग्गतं ।

सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकम् । नाभिमूले स्थितं कन्दं शिवरूपं तु मण्डितम् २१
शक्तिव्यूहेन सोमोऽर्को हरिस्तत्र व्यवस्थितः । दशवायुसमोपेतं पञ्चतन्मात्रमण्डितम् ॥ २२
कालानलसमाकारं प्रस्फुरन्तं शिवात्मकम् । तज्जीवं जीवलोकस्य स्थावरस्य चरस्य च ॥
तस्मिन्नष्टे मृतं मन्ये मन्त्रपीठेऽनिलात्मकम् ॥ २३

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयज्योतिःशास्त्रसारवर्णनं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९९०

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

## युद्धजयार्णवीयनानाचक्राणि ।

ईश्वर उवाच—

ॐ ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे ह्रूं फट्, ॐ हः, ॐ ग्रस ग्रस कृन्त कृन्त च्छक च्छक ह्रूं फट्, नमः ॥ १
पठ्यमानो ह्ययं मन्त्रः क्रुद्धः संरक्तलोचनः । मारणे पातने वाऽपि मोहनोच्चाटने भवेत् ॥
कर्णमोटी महाविद्या सर्ववर्णेषु रक्षिका ॥ २

[इति] नानाविद्या(द्याः) ।

---

पञ्चोदयं प्रवक्ष्यामि स्वरोदयसमाश्रितम् । नाभिहृदन्तरं यावत्तावच्चरति मारुतः ॥ ३
उच्चाटयेद्रणादौ तु कर्णाक्षीणि प्रभेदयेत् । करोति साधकः क्रुद्धो जपहोमपरायणः ॥ ४
हृदयात्पार्युकं कण्ठं ज्वरदाहारिमारणे । कण्ठोद्भवो रसो वायुः शान्तिकं पौष्टिकं रसम् ॥ ५
दिव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको ध्रुवः । गन्धलीनं मनः कृत्वा स्तम्भयेन्नात्र संशयः
स्तम्भनं कीलनाद्यं च करोत्येव हि साधकः । चण्डघण्टा कराली च सुमुखी दुर्मुखी तथा ॥ ७
रेवती प्रथमा घोरा वायुचक्रे तु ता यजेत् । उच्चाटकारिका देव्यः स्थितास्तेजसि संस्थिताः॥८
सौम्या च भीषणी देवी जया च विजया तथा । अजिता चापराजिता महाकोटी च रौद्रया ९
शुष्ककाया प्राणहरा रसचक्रे स्थिता अमूः । विरूपाक्षी परा दिव्यास्तथा चाऽऽकाशमातरः ॥
संहारी जातहारी च दंष्ट्राला शुष्करेवती । पिपीलिका पुष्टिहरा महापुष्टिप्रवर्धना ॥ ११
भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका ।* स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा
द्वात्रिंशन्मातरश्चक्रे अष्टाष्टक्रमशः स्थिताः । एक एव रविश्चन्द्र एकश्चैकैकशक्तिका ॥ १३

---

* इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ क. ङ. °पंकालवि° । च. °वज्ञान° । २ क. ङ. गन्धं । ३ च. अग्निरुवाच । ४ च. हूं । ५ ख. ग. °र्णघाटै-नवेदरूपे दष्ट्रे हूरुं फट्, अ हः, असकृत्कृतच्छकतहु फट्, नमः । ६ क. °मोटे लङ्के करूपे दष्ट्रे हु फट्, फट्, हां हां प्र° । ७ क. ङ °हृयन्त° । घ. छ. हृदान्त° । ८ ख. ग. °त्पादुकं । ९ क. ङ. रसः । ख. वशम् । १० ख. नाशान्ति° । ११ क. ङ. भवः । ख. च. ध्रुवः । १२ ख. घ. छ. °क्रेषु ता । १३ क. ङ. °हारा जिनहा° । १४ क. ख. ग. ङ. दंष्ट्राणी १५ क. ख. ग. ङ. शुकरे° । १६ क. ङ. पिलि° । १७ क. °ष्टिहारा च म° । १८ क. ख. ङ. °श्चैके सशक्तिकाः । भू° ।

भूतभेदेन तीर्थानि[1] यथा तोयं महीतले । प्राण एको मण्डलैश्च भिद्यते भूतपञ्जरे ॥ १४
वामदक्षिणयोगेन दशधा संप्रवर्तते । वि(बि)[3]न्दुमुण्डविचित्रं च तत्त्ववस्त्रेण वेष्टितम् ॥ १५
ब्रह्माण्डेन कपालेन पिबेत[4] परमामृतम् । पञ्चवर्गबलाद्युद्धे जयो भवति तच्छृणु ॥ १६
अआकचटतपयाः श आद्यो वर्ग ईरितः । इईखछठथफराः षो वर्गश्च द्वितीयकः ॥ १७
उऊगजडदबलाः सो वर्गश्च तृतीयकः । एऐघझढधभवा हो वर्गश्च चतुर्थकः ॥ १८
ओऔअंअः,ङञणनमा मो वर्गः पञ्चमो भवेत् । वर्णाश्चाभ्युदये नृणां चत्वारिंशच्च पञ्च च॥१९
बालः कुमारो युवा स्याद्वृद्धो मृत्युश्च नामतः । आत्मपीडाशोषकः स्यादुदासीनश्च कालकः २०
कृ[5]त्तिका प्रतिपद्भौम[6] आत्मनो लाभदः स्मृतः । षष्ठी भौमो मघा पीडा आर्द्रा चैकादशी कुजः
मृत्युर्मघा द्वितीया ज्ञो[7] लाभश्चाऽऽर्द्रा च सप्तमी । बु[8]धोऽहनि भरणी ज्ञः श्रवणं काल ईदृशः ॥
जीवो लाभाय च भवेत्तृतीया पूर्वफल्गुनी । जीवोऽष्टमी धनिष्ठाऽऽर्द्रा जीवोऽश्लेषा त्रयोदशी ॥
मृत्यौ शुक्रश्चतुर्थी स्यात्पूर्वभाद्रपदा[9] श्रिये । पूर्वाषाढा च नवमी शुक्रः पीडाकरो भवेत् ॥ २४
भरणी भू[10]तजा शुक्रो यमदण्डो हि हा[11]निकृत् । कृत्तिका पञ्चमी मन्दो लाभाय तिथिरीरिता २५
आ(अ)श्लेषा दशमी म[12]न्दो योगः पीडाकरो भवेत् । मघा शनिः पूर्णिमा च योगो मृत्युकरः स्मृतः

[इति] तिथियोगः(गाः) ।

---

पूर्वोत्तराग्निनै[13]र्ऋत्यदक्षिणानिलचन्[14]द्रगाः । ब्रह्मा[15]द्याः स्यु[16]र्दृष्टयः स्युः प्रतिपन्नवमीमुखाः ॥ २७
राशिभिः सहिता दृष्टा ग्रहाद्याः सिद्धये स्मृताः । मेषाद्याश्चतुरः कुम्भा[17] ज[18]यः पूर्णेऽन्यथा मृतिः
सूर्यादि रिक्ता पूर्णा च क्रमादेवं प्रदापयेत् । रणे सूर्ये फलं[19] नास्ति सोमे भङ्गः प्रशाम्यति॥२९
कुजेन कलहं विद्याद्बुधः कामाय वै गुरुः । जयाय म[20]नसे शुक्रो मन्दे भङ्गो रणे भवेत् ॥ ३०
देयानि पिङ्गलाचक्रे सूर्यगानि(णि) च भानि हि । मुखे नेत्रे ललाटेऽथ शिरोहस्तो[...]दे ॥३१
*पादे मृतिस्त्रिऋक्षे स्यात्रीणि पक्षेऽर्थनाशनम् । मुखस्थे च भवेत्पीडा शिरःस्थे क[...]शनम्॥
कुक्षिस्थिते फलं स्याच्च राहुचक्रं वदाम्यहम् । इन्द्राच्च नैर्ऋतं गच्छेन्नैर्ऋतात्सोममेव च ॥ ३३
सोमाद्धुताशनं वह्नेराप्यमाप्याच्छिवालयम् । रुद्राद्यमं यमाद्वायुं वायोश्चन्द्रं व्रजेत्पुनः ॥ ३४
भु[21]ङ्क्ते चतस्रो नाड्य(डी)स्तु रा[22]हुः पृ[23]ष्ठे जयो रणे । +अग्रतो मृत्युमाप्नोति तिथिराहुं वदामि ते॥
आ[24]ग्नेयादि शिवान्तं च पूर्णिमामादितः प्रिये । पूर्वे कृष्णाष्टमीं यावद्रा[25]हुर्दृष्टौ ज[26]यो भवेत् ॥ ३६
ऐशान्याग्नेयनैर्ऋत्यवायव्ये फणिराहुकः । मेषाद्या दिशि पूर्वादौ यत्राऽऽदि[27]त्योऽग्रतो मृतिः ३७

---

* इदमर्धं नास्ति क. ङ पुस्तकयोः । + इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ङ. भिन्नानि । २ क. ङ. °पञ्च च । वा° । ३ क. ङ. विष्णुमण्डविचित्रं च तत्त्वे व° । ४ क. ङ. °बेत्परमयाऽमृ° । ५ क. ङ. कार्तिका । ६ क ङ. °म अश्वारोहादयः स्मृताः । ष° । ७ क. ङ. °ज्ञो भवार्द्रातिथिस° । ८ घ. छ. बुधे हानिर्भ° । ९ क. ङ. °दाश्च ये । १० क. ङ. मृतजा । ११ घ. छ. हानिकम् । १२ क. ङ. मन्त्रो । १३ क. ङ. °ऋत्ये द° । १४ क. घ. छ. °न्द्रमाः । ब्र° । १५ ख. °ह्मा[द्या]स्त्रिपु पृष्टे स्युः । १६ क. ङ. °स्युस्त्रिदण्डी स्युः । १७ क. ङ. °म्भा यजेत्पूर्णोऽन्य° । १८ ख. जयपू° । १९ क. ङ. °लं भाति सो° । २० क. ङ. शनये । २१ ख. भुजे । २२ ख. राहुपृ° । २३ ख. °पृष्टे ज° । २४ क. ङ. °मैन्द्यां दिशि वाऽन्ते च । २५ क. ङ. °हुपृष्टे ज° । २६ ख. ग. घ. छ. भयो । २७ ख. ग. °त्यो गतो ।

तृतीया कृष्णपक्षे तु सप्तमी दशमी तथा । चतुर्दशी तथा शुक्ले चतुर्थ्येकादशी तिथिः ॥ ३८
पञ्चदशी विष्टयः स्युः पूर्णिमाऽऽग्नेयवायवे । अकचटतपयशा वर्गाः सूर्यादयो ग्रहाः ॥ ३९
गृध्रोलूकश्येनकाश्च पिङ्गलः कौशिकः क्रमात् । सारसश्च मयूरश्च गो[1]वत्सः पक्षिणः स्मृताः॥४०
आदौ साध्यो हु[2]तो मन्त्र उच्चाटे पल्लवः स्मृतः । वश्ये ज्वरे तथाऽऽकर्षे प्रयोगः सिद्धिकारकः
शान्तौ प्रीतौ नमस्कारो वौ[3]षट्पुष्टौ वशादिषु । हुं[4] मृत्यौ प्रीतिसंनाशे विद्वेषोच्चाटने च फट् ॥
व[5]षट्सुते च दी[6]प्त्यादौ मन्त्राणां जातयश्च षट् । ओषधीः संप्रवक्ष्यामि महारक्षाविधायिनीः ४३
महाकाली तथा च[7]ण्डी वाराही चेश्वरी तथा । सुदर्शना तथेन्द्राणी गात्रस्था रक्षयन्ति तम् ॥
बला चातिबला भीरु[8]र्मुसली सहदेव्यपि । जाती च मल्लिका यूथी गारुडी भृङ्गराजकः ॥ ४५
चक्ररूपा महौषध्यो धारिता विजयादिदाः । ग्रहणे च महादेवि उद्धृताः शुभदायिकाः ॥ ४६
मृदा च कुञ्जरं कृत्वा सर्वलक्षणलक्षितम् । त[9]स्य पादतले कृत्वा स्तम्भयेच्छत्रुमात्मनः ॥ ४७
न[10]गाग्रे चैकवृक्षे च वज्राहतप्रदेशके । वल्मीकमृदमाहृत्य मातरौ योजयेत्ततः ॥ ४८
ॐ नमो महाभै[11]रवाय विकृतदंष्ट्रोग्ररूपाय पि[12]ङ्गलाक्षाय[13] त्रिशूलखड्गधराय वौषट् ॥ ४९
पूजयेत्क[14]र्दमां देवीं स्तम्भयेच्छस्त्रजालकम् । अग्निकार्यं प्रवक्ष्यामि रणादौ जयवर्धनम् ॥ ५०
श्मशाने निशि काष्ठाग्नौ नग्नो मुक्तशिखो नरः । दक्षिणास्यस्तु जुहुयान्नृमांसं रुधिरं विषम् ॥
*तुषास्थिखण्डमिश्रं तु शत्रुनाम्ना शताष्टकम् ॥ ५१
ॐ नमो भगवति कौमारि लल ल[15]ले लालय लालय घण्टादेवि, अमु[16]कं मारय मारय सहसा
नमोऽस्तु ते भ[17]गवति वि[18]द्ये स्वाहा ॥ ५२
अनया विद्यया हो[19]माद[20]न्धत्वं जायते रिपो[21]ः ॥ ५३
ॐ वज्रकाय वज्रतुण्ड कपिल पिङ्गल करालवदनोर्ध्वकेश महाबल रक्तमुख तडिज्जिह्व महारौद्र
दंष्ट्रोत्कट कह[22]ह क[23]राल[24]िन्महा[25]दृढप्र[26]हार लङ्केश्वर से[27]तु[28]बन्ध शैलप्रवाह गगनचर, एह्येहि भगवन्महा-
बलपराक्रम भैरवो ज्ञापयति, एह्येहि महारौद्र दीर्घलाङ्गूलेन, अमुकं वेष्ट[29]य वेष्टय जम्भय
जम्भ[30]य खन खन वैते हूं फट् ॥ ५४
अष्ट(ष्टा)त्रिंशच्छतं देवि हनुमान्सर्वकर्मकृ[31]त् । प[32]ठेह(द्ध)नुमत्सं[33]देशाद्भङ्गमायान्ति शत्रवः ॥ ५५

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयनानाचक्रप्रतिपादनं नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०४५

---

* इदमर्धं नास्ति क. ङ. च. पुस्तकेषु ।

१ घ. छ. गोरङ्कुः । २ क. ङ. भृतो । ३ क. ङ. °षडष्टौ । ४ ख. हूरू । ५ क. ङ. °षट्, लाभे च ग्रीष्मादौ । ६ ख. दिष्टयादौ । ७ क. ङ. च. दण्डी । ८ क ङ. °मुशली । ९ क. ङ. भस्म । १० क. ङ. नागाग्रे । ११ क. ङ. च. भैरवाय । १२ क. ङ. च. पिङ्गाक्षाय । १३ क. ङ. च. °य खड्गखट्वाङ्गबन्धाय । १४ ख. ग. घ. छ. °र्दमं देवि स्त° । १५ क. °ल प्रेतुक प्रेतुक ला° । ङ. °ल प्रेलुक प्रेलुक ला° । १६ क. ङ. °कं तारय तारय स° । १७ क. ङ. भवति । १८ क. ङ. वेद्ये । १९ क ङ. होमोद्दत्तत्वं । २० ख. ग. °दधत्वं । २१ क. ङ. क्षणात् । २२ ख. ग. °हत्करा° । २३ क. ङ. कहकरा° । २४ क. ख. ग. ङ. °लिनि महा° । २५ क. ङ. °हादंष्ट्रप्र° । २६ ख. ग. °प्रकार । २७ ख ग. केतुबन्ध । २८ क. ङ. °तुरथशै° । २९ घ. छ. °य ज° । ३० क. ङ. °य षङ्गय षङ्गय रोभ हूं हूं फ° । ३१ क. ङ. °त् । फट्, ह° । ३२ घ. छ. पटे हनुमत्संदर्शनाद्भ° । ३३ ख. ग. °त्संदर्शनाद्भ° ।

अथ षड्विंशत्यधिकशततमोऽध्यायः ।

नक्षत्रनिर्णयः ।

ईश्वर उवाच—

वक्ष्याम्यृक्षात्मकं पिण्डं शुभाशुभविवृद्धये । यस्मिन्नृक्षे भवेत्सूर्यस्तदादौ त्रीणि मूर्धनि ॥ १
एकं मुखे द्वयं नेत्रे हस्तपादे चतुष्टयम् । हृदि पञ्च[1] सुते जानौ[2] आयुर्वृद्धिं विचिन्तयेत् ॥ २
शिरःस्थे तु भवेद्राज्यं पिण्डतो वक्त्रयोगतः । नेत्रयोः कान्तिसौभाग्यं हृदये द्रव्यसंग्रहः ॥ ३
हस्ते धृतं तस्करत्वं गता[3]सुरध्वगः पदे । कुम्भाष्टके भानि लिख्य[4] सूर्यकुम्भस्तु रिक्तकः ॥ ४
अशुभः सूर्यकुम्भः[5] स्याच्छुभः पूर्वादिसंस्थितः । फणिराहुं[6] प्रवक्ष्यामि जयाजयविवेकदम् ॥ ५
अष्टाविंशाल्लिखे(?)द्भिन्दूनपुनर्भांज्यास्त्रिभिस्त्रिभिः[7] । अथ ऋक्षाणि चत्वारि रेखास्तत्रैव दापयेत् ॥
यस्मिन्नृक्षे स्थितो राहुस्तदृक्षं फणिमूर्धनि । *तदादि विन्यसेद्भानि सप्तविंशत्क्रमेण (?) तु[8] ॥७
वक्त्रे सप्तगत ऋक्षे म्रियते सर्व आहवे । स्कन्धे भङ्गं वियानीयात्[9]संसमे[10]षु च मध्यतः ॥ ८
उ[11]दरस्थेन पूजा च जयश्चैवाऽऽत्मनस्तथा । कटिदेशे स्थिते योध आहवे हरते परान् ॥ ९
पु[12]च्छस्थितेन कीर्तिः स्याद्राहुदृष्टे च भे मृतिः । पुनरन्यं प्र(न्यत्प्र)वक्ष्यामि रविराहुबलं तत्र ॥
रविः शुक्रो बुधश्चैव सोमः सौरिर्गुरुस्तथा । लोहितः सैंहिकश्चैव एते यामार्धभागिनः ॥ ११
सौरिं रविं च राहुं च कृत्वा यत्नेन पृष्ठतः । स जयेत्सैन्यसंघातं द्यूतमध्वानमाहवम् ॥ १२
रोहिणी चोत्तरास्तिस्रो मृगः पञ्च स्थिराणि हि । अश्विनी रेवतीस्वाती धनिष्ठा शततारका ॥
क्षिप्राणि पञ्च भान्यत्र यात्रार्थी चैव योजयेत् । अनुराधा हस्तमूलं मृगः पुष्यं पुनर्वसुः ॥ १४
सर्वकार्येषु चैतानि ज्येष्ठा चित्रा विशाखया । +पूर्वास्तिस्रोऽग्निर्भरणी मघार्द्राश्लेषा दारुणाः ॥
स्थावरेषु स्थिरं ह्यृक्षं यात्रायां क्षिप्रमुत्तमम् । ※सौभाग्यार्थे मृदून्येव उग्रेषूग्रं तु कारयेत् ॥ १६
दारुणे दारुणं कुर्याद्दृश्ये चाधोमुखादिकम् । कृत्तिका भरण्या(ण्य)श्लेषा विशा[13]खा पितृनैर्ऋतम् ॥
पूर्वात्रयमधोवक्त्रं कर्म चाधोमुखं चरेत् । एषु कूपतडागादि विद्याकर्म भिषक्क्रिया ॥ १८
स्थापनं नौकाकूपादिविधानं खननं तथा । रेवती चाश्विनी चित्रा हस्तः स्वा(स्तस्वा)ती पुनर्वसुः
अनुराधा मृगो ज्येष्ठा नव वै पार्श्वतोमुखाः । एषु राज्याभिषेकं च पट्टबन्धं गजाश्वयोः ॥ २०
आरामगृहप्रासादं प्राकारं क्षेत्रतोरणम् । ध्वजचिह्नपताकाश्च सर्वानेतांश्च कारयेत् ॥ २१
द्वादशी सूर्यदग्धा तु चन्द्रेणैकादशी तथा । भौमेन दशमी दग्धा तृतीया वै बुधेन च ॥ २२
षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा । सप्तमी सूर्यपुत्रेण त्रिपुष्करमथो वदे ॥ २३
[15]द्वितीया द्वादशी चैव सप्तमी वै तृतीयया । रविर्भौमस्तथा सौरिः षडेतास्तु(ते तु) त्रिपुष्कराः ॥
विशाखा कृत्तिका चैव उत्तरे द्वे पुनर्वसुः । पूर्वभाद्रपदा चैव षडेते तु त्रिपुष्कराः ॥ २५

* इदमर्धं नास्ति क. ङ. पुस्तकयोः । + इदमर्धं क. ङ. पुस्तकयोर्नास्ति । ※ इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

१ क. ङ. °श्रयुते भानौ ह्यायु° । २ ख. ग. च. जातौ । ३ क. ङ. °तायुर° । ४ क. ङ. °ख्य पूर्वकु° । ५ क. ङ. पूर्वकुम्भः । ६ क. ङ. पाणिनास्तं । ख. ग. फलिराहुं । ७ घ. छ. °नभांज्यस्त्रि° । ८ क. ङ. तु । चक्रे सप्तगते राहुः क्रिय° । ९ क. ङ. °त्सप्ताहेषु । १० ख. °समेषु । ग. °समेषु च मध्यमः । उ° । ११ क. ङ. °दयस्थे° । १२ क. ङ. प्रत्युत्थितेन । १३ क. ङ. °शाखाऽपि च नै° । १४ क. ङ. प्रोक्ता । १५ क. ङ. तृतीया ।

लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च । नष्टं[1] भ्रष्टं विनष्टं वा तत्सर्वं त्रिगुणं भवेत् ॥ २६
अश्विनी भरणी चैव अश्लेषा पुष्यमेव च । स्वातिश्चैव विशाखा च श्रवणं सप्तमं पुनः ॥ २७
एतानि दृढचक्षूंषि पश्यन्ति च दिशो दश । यात्रासु दूरगस्यापि आगमः पुण्यगोचरे ॥ २८
[3]आषाढे रेवती चित्रा केकराणि पुनर्वसुः । एषु पञ्चसु ऋक्षेषु निर्गतस्याऽऽगमो भवेत् ॥ २९
कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा । मूलं ज्येष्ठाऽनुराधा च धनिष्ठा शततारकाः ॥
पूर्वभाद्रपदा चैव चिपिटानि च तानि हि । अध्वानं व्रजमानस्य पुनरेवाऽऽगमो भवेत् ॥ ३१
हस्त उत्तरभाद्रश्च आर्द्राऽऽषाढा तथैव च । नष्टार्थाश्चैव दृश्यन्ते सङ्ग्रामो नैव विद्यते ॥ ३२
पुनर्वक्ष्यामि गण्डान्तमृक्षमध्ये यथा स्थितम् । रेवत्यन्ते(न्तं) चतुष्कं तु अश्विन्यादिचतुष्टयम् ॥
उभयोर्याममात्रं तु वर्जयेत्तत्प्रयत्नतः । अश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम् ॥ ३४
द्वितीयं गण्डमाख्यातं तृतीयं भैरवि शृणु । ज्येष्ठामूलभयोर्मध्य उग्ररूपं तु यामकम् ॥ ३५
न कुर्याच्छुभकर्माणि यदीच्छेदात्मजीवितम् । दारके जातकाले च म्रियेते *पितृमातरौ ॥ ३६

इत्यादिमहापुराण आग्नेये नक्षत्रनिर्णयप्रतिपादनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०८१

---

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

---

## नानाबलानि ।

ईश्वर उवाच—

विष्कम्भे घटिकास्तिस्रः शूले पञ्च विवर्जयेत् । षट्षड्गण्डेऽतिगण्डे च नव व्याघातवज्रयोः ॥ १
परिघे च व्यतीपात उभयोरपि तद्दिनम् । वैधृते(तौ) तद्दिनं चैव यात्रायुद्धादिकं त्यजेत् ॥ २
ग्रहैः शुभाशुभं वक्ष्ये देवि मेषादिराशितः । चन्द्रशुक्रौ च जन्मस्थौ वर्जितौ शुभदायकौ ॥ ३
द्वितीयो मङ्गलोऽथार्कः सौरिश्चैव तु सैंहिकः । द्रव्यनाशमलाभं च आहवे भङ्गमादिशेत् ॥ ४
सोमो बुधो भृगुर्जीवो[10] द्वितीयस्थाः शुभावहाः । तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ५
बुधश्चैवेन्दू राहुश्च[11] सर्वे ते फलदा ग्रहाः । बुधशुक्रौ चतुर्थौ च शेषाश्चैव भयावहाः ॥ ६
पञ्चमस्थो यदा जीवः शुक्रः सौम्यश्च चन्द्रमाः । ददेत चेप्सितं लाभं पष्ठे स्थाने शुभो[12] रविः ७
चन्द्रः सौरिर्मङ्गलश्च ग्रहा देवि स्वराशितः । बुधश्च शुभदः षष्ठे त्यजे[13]त्पष्ठं गुरुं भृगुम् ॥ ८
सप्तमोऽर्कः शनिर्भौमो राहुर्हान्यै सुखाय च । जीवो भृगुश्च सौम्यश्च ज्ञशुक्रौ चाष्टमौ शुभौ[14] ॥ ९
+शेषा ग्रहास्तथा हान्यै ज्ञभृगू नवमौ शुभौ । शेषा हान्यै च लाभाय दशमौ भृगुभास्करौ १०
शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः । शुभाश्चैकादशे सर्वे वर्जयेद्द[15]शमं गुरुम् ॥ ११

---

* मध्यमपदलोपी समासः । + इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ङ. दृष्टं । २ क. ङ. °ण्यचोत्तरे । ३ क. ङ. आषाढा । ४ घ. छ. °तुर्नाडो अ° ५ क. ङ. °र्योनमा° । ६ घ. छ. °ष्ठाभमूलयो° ७ । क. च निपाते पितृमातृके । इ° । ८ क. ङ. षट्व गण्डातिगण्डेति न° । ९ क. ङ. तत्क्षणम् । १० च. °वो भानुश्चैव शनिस्तथा । द्वितीयस्थो यदा राहुः सर्वे । ११ क. ङ. °श्च ग्रहादेव स्वराशितः । बु° । १२ क. ङ. शुभे । १३ क. ङ. °जेयुश्च गु° । १४ क. ङ. °रौ । गतिर्भौ° । १५ घ. छ. °शमे गु° ।

बुधशुक्रौ द्वादशस्थौ शेषान्द्वादशगांस्त्यजेत् । अहोरात्रे द्वादश स्यू राशयस्तान्वदाम्यहम् ॥ १२
मीनो मेषोऽथ मिथुनं चतस्रो नाडयो(?) वृषः । +षट्कषट्कर्कसिंहकन्याश्च तुला पञ्च च वृश्चिकः
धनुर्नक्रो घटश्चैव सूर्यगो राशिरायकः । चरस्थिरद्विस्वभावा मेषाद्याः स्युर्यथाक्रमम् ॥ १४
कुलीरो मकरश्चैव तुलामेषादयश्चराः । चरकार्यं जयं काममाचरेच्च शुभाशुभम् ॥ १५
स्थिरो वृषो हरिः कुम्भो वृश्चिकः स्थिरकार्यके । शीघ्रः समागमो नास्ति रोगार्तो नैव मुच्यते॥
मिथुनं कन्यका मीनो धनुश्च द्विस्वभावकः । द्विस्वभावाः शुभाश्चैते सर्वकार्येषु नित्यशः ॥ १७
यात्रावाणिज्यसङ्ग्रामे विवाहे राजदर्शने । वृद्धिं जयं तथा लाभं युद्धे जयमवाप्नुयात् ॥ १८
अश्विनीं त्रिंशत्ताराश्च (रा च) तुरगस्याऽऽकृतिर्यथा । यद्यत्र कुरुते वृष्टिमेकरात्रं प्रवर्षति ॥
यमभे तु यदा वृष्टिः पक्षमेकं तु वर्षति ॥ १९

इत्यादिमहापुराण आग्नेये नानाबलवर्णनं नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१००

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

## कोटचक्रम् ।

ईश्वर उवाच—

कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् । चतुरस्रं पुनर्मध्ये तन्मध्ये चतुरस्रकम् ॥ १
नाडीत्रितयचिह्नाढ्यं मेषाद्याः पूर्वदिङ्मुखाः । कृत्तिका पूर्वभागे तु अश्लेषाऽऽग्नेयगोचरे ॥ २
भरणी दक्षिणे देया विशाखां नैर्ऋते न्यसेत् । अनुराधां पश्चिमे च श्रवणं वायुगोचरे ॥ ३
धनिष्ठां चोत्तरे न्यस्य ऐशान्यां रेवतीं तथा । बाह्यनाड्यां स्थितान्येव अष्टौ ह्यृक्षाणि यत्नतः
रोहिणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु । अभिजिच्छततारा तु अश्विनी मध्यनाडिका ५
कोटमध्ये तु या नाडी कथयामि प्रयत्नतः । मृगश्चाभ्यन्तरे पूर्वे तस्याऽऽग्नेये पुनर्वसुः ॥ ६
उत्तरा फल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता । मूलं तु पश्चिमे न्यस्योत्तराषाढां तु वायवे ॥ ७
पूर्वभाद्रपदा सौम्ये रेवती ईशगोचरे । कोटस्याभ्यन्तरे नाडी ह्यृक्षाष्टकसमन्विता ॥ ८
आर्द्रा हस्तस्तथाऽऽषाढाचतुष्कं चोत्तरात्रिकम् । ( *मध्ये स्तम्भचतुष्कं तु दद्यात्कोटस्य कोटरे
एवं दुर्गस्य विन्यासं बाह्ये स्थानं दिशाधिपात् ।) आगन्तुको यदा योद्धा ऋक्षवान्स्यात्फलान्वितः
कोटमध्ये ग्रहाः सौम्या यदा ऋक्षान्विताः पुनः । जयं मध्यस्थितानां तु भङ्गमागामिनो विदुः
प्रवेशभे प्रवेष्टव्यं निर्गमभे च निर्गमे(च्छे)त् । भृगुः सौम्यस्तथा भौम ऋक्षान्तं सकलं यदा १२

---

+ "षट्षट्कर्कसिंहकन्यास्तुला" इति पाठो युक्तः । * धनुश्चिह्नान्तर्गतं नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ङ. °दशोऽमौ शे° । २ क. ङ. रात्रिरायकम् । च° । ३ क. ङ. शीघ्रागमो यमो । ४ ख. ग. घ. छ. °नी विंशतारा° । ५ क. ङ. वृष्टिः पक्ष° । ६ क. ङ. पादतः । ७ क. ङ. °तः । मूलाश्चा° । ८ क. ख. ग. ङ. च. न्यस्य उत्तराषाढां वा° । ९ क. ङ. °ढा मूलाद्यं चोत्तरान्तिक° । १० ख. ग. बाह्याटालदि° । ११ ख. ग. °पान् । आ° ।

तदा भङ्गं विजानीयाज्जयमागन्तुकस्य च । प्रवेशर्क्षचतुष्के तु सङ्ग्रामं[1] चाऽऽरभेद्यदा ॥
तदा सिध्यति तद्दुर्गं न कुर्यात्तत्र विस्मयम् ॥ १३

इत्यादिमहापुराण आग्नेये कोटचक्रवर्णनं नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४११३

---

अथैकोनत्रिंशदधिकशततमोऽध्यायः ।

---

अर्घकाण्डम् ।

ईश्वर उवाच—

( * अर्घमानं प्रवक्ष्यामि उल्कापातोऽथ भूश्चला[2] । निर्घातो ग्रहणं वेशो[3] दिशां दाहो भवेद्यदा
लक्षयेन्मासि मास्येवं यद्येते स्युश्च चैत्रके । अलंकारादि संगृह्य षड्भिर्मासैश्चतुर्गुणम् ॥ २
वैशाखे चाष्टमे मासि षड्गुणं सर्वसंग्रहम् । ज्येष्ठे मासि तथाऽऽषाढे यवगोधूमधान्यकैः ॥ ३
श्रावणे घृततैलाद्यैराश्विने वस्त्रधान्यकैः । कार्तिके धान्यकैः क्रीतैर्मासे स्यान्मार्गशीर्षके ॥ ४
पुष्ये(पौषे) कुङ्कुमगन्धाद्यैर्लाभो धान्यैश्च माघके । गन्धाद्यैः फाल्गुने क्रीतैरर्घकाण्डमुदाहृतम् ॥५

इत्यादिमहापुराण आग्नेयेऽर्घकाण्डप्रतिपादनं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४११८

---

अथ त्रिंशदधिकशततमोऽध्यायः ।

---

मण्डलादिकथनम् ।

ईश्वर उवाच—)

मण्डलानि[4] प्रवक्ष्यामि चतुर्धा विजयाय हि । कृत्तिका च मघा पुष्यं पूर्वा चैत्र तु फल्गुनी ॥ १
विशाखा भरणी चैव पूर्वभाद्रपदा तथा । आग्नेयं मण्डलं भद्रे तस्य वक्ष्यामि लक्षणम् ॥ २
यद्यत्र चलते वायुर्वेष्टनं शशिसूर्ययोः । + भूमिकम्पोऽथ निर्घातो ग्रहणं चन्द्रसूर्ययोः ॥ ३
धूमज्वाला दिशां दाहः केतोश्चैव प्रदर्शनम् । रक्तवृष्टिश्चोपतापः पाषाणपतनं तथा ॥ ४
नेत्ररोगोऽतिसारश्च अग्निश्च प्रबलो भवेत् । स्वल्पक्षीरास्तथा गावः स्वल्पपुष्पफला द्रुमाः ॥ ५
विनाशश्चैव शस्यानां स्वल्पवृष्टिं विनिर्दिशेत् । चतुर्विधाः[5] प्रपीड्यन्ते क्षुधार्ता अखिला नराः ६
सैन्धवा यामुनाश्चैव गुर्जरा भोजबाह्लिकाः । जालंधरं च काश्मीरं सप्तमं चोत्तरापथम् ॥ ७
देशाश्चैते विनश्यन्ति तस्मिन्नुत्पातदर्शने । हस्तचित्रा मघा स्वाती मृगो वाऽथ पुनर्वसुः ॥ ८
उत्तरा फल्गुनी चैव अश्विनी च तथैव च । यदाऽत्र[6] भवते किंचिद्वायव्यं तं वि(तद्वि)निर्दिशेत्
नष्टभूताः[7] प्रजाः सर्वा हाहाभूता विचेतसः । (*डाहलः[8] कामरूपं च(पश्च) कलिङ्गः कोशलस्तथा

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. पुस्तके । + इदमर्धं नास्ति क. ङ. च. पुस्तकेषु । * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. पुस्तकयोः ।

१ क. ङ. °मं कारयेद्य° । २ क. ङ. भूतलम् । नि° । ३ क. ङ. वेगो । ४ च. नक्षत्राणि । ५ ख. ग. घ. छ. चातुर्वर्णाः । ६ क. ङ. यद्यत्र । ७ ख. ग. घ. छ. नष्टधर्माः । ८ ख. इहालं । ग. डाहालं । ९ च. कोकणं तथा ।

अयोध्या च अवन्ती च नश्यन्ते(न्ति) कोङ्कणान्ध्रकाः।)अश्लेषा चैव मूलं तु पूर्वाषाढा तथैव च
रेवती [1]वारुणं ह्यृक्षं तथा भाद्रपदोत्तरा। यदाऽत्र चलते [2]किंचिद्वारुणं तं वि(तद्वि)र्निर्दिशेत् ॥१२
बहुक्षीरघृता गावो बहुपुष्पफला द्रुमाः। आरोग्यं तत्र जायेत बहुशस्या च मेदिनी ॥ १३
धान्यानि च समर्घाणि सुभिक्षं पार्थिवं भवेत्। परस्परं नरेन्द्राणां सङ्ग्रामो दारुणो भवेत् ॥१४
ज्येष्ठा च रोहिणी चैव अनुराधा च वैष्णवम्। धनिष्ठा चोत्तराषाढा अभिजित्सप्तमं तथा॥१५
यदाऽत्र चलते किंचिन्माहेन्द्रं तं वि(तद्वि)र्निर्दिशेत्। प्रजाः समुदितास्तस्मिन्सर्वरोगविवर्जिताः
संधिं कुर्वन्ति राजानः सुभिक्षं पार्थिवं शुभम्। ग्रासस्तु [3]विविधो ज्ञेयो मुखपुच्छकरो महान् १७
चन्द्रो राहुस्तथाऽऽदित्य एकराशौ यदि स्थितः। [4]मुखग्रासस्तु विज्ञेयो जामित्रे पुच्छ उच्यते ॥
भानोः पञ्चदशे ह्यृक्षे यदा चरति चन्द्रमाः। ति[5]थिच्छेदे तु संप्राप्ते [6]सोमग्रासं विनिर्दिशेत् ॥१९

इत्यादिमहापुराण आग्नेये मण्डलादिकथनं नाम त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१३७

---

अथैकत्रिंशदधिकशततमोऽध्यायः।

---

घातचक्रादि।

ईश्वर उवाच—

प्रदक्षिणमकारादीन्स्वरान्पूर्वादितो लिखेत्। चैत्राद्यं भ्रमणाच्चक्रं प्रतिपत्पूर्णिमा तिथिः ॥ १
त्रयोदशी चतुर्दशी अष्टम्येका च सप्तमी। प्रतिपत्त्रयोदश्यन्तास्तिथयो द्वादश स्मृताः ॥ २
चैत्रचक्रे तु संस्पर्शाज्जयलाभादिकं विदुः। विषमे तु शुभं ज्ञेयं समे चाशुभमीरितम् ॥ ३
युँद्धकाले समुत्पन्ने यस्य नाम ह्युदाहृतम्। मात्रारूढं तु यन्नाम आदित्यो गुरुरेव च ॥ ४
जयस्तस्यं सदाकालं सङ्ग्रामे चैव भी[9]षणे। [10]ह्रस्वनाम(मा) यदा योधो म्रियते [11]ह्यनिवारितः ५
प्रथमो दीर्घ आदिस्थो द्वितीयो [12]मध्ये अन्तकः(?)। द्वौ मध्ये न प्रथमान्तौ [13]जायेते (?)नात्र संशयः
पुनश्चान्ते यदा चाऽऽदौ स्वरारूढं तु दृश्यते। ह्रस्वस्य मरणं विद्याद्दीर्घस्यैव जयो भवेत् ॥ ७
नरचक्रं प्रवक्ष्यामि ह्यृक्षपिण्डात्मकं यथा। प्रतिमामालिखेत्पूर्वं पश्चादृक्षाणि विन्यसेत् ॥ ८
शीर्षे त्रीणि मुखे चैकं द्वे ऋक्षे नेत्रयोर्न्यसेत्। वेदसंख्यानि हस्ताभ्यां कर्णे ऋक्षद्वयं पुनः ॥ ९
हृदये भूतसंख्यानि षड्ऋक्षाणि तु पादयोः। ना[14]मर्क्षं स्फुटं कृत्वा चक्रमध्ये तु विन्यसेत् १०
नेत्रे शिरोदक्षकर्णे याम्यहस्ते च पादयोः। हृद्ग्रीवावामहस्ते तु पुनर्गुह्ये तु पादयोः ॥ ११
यस्मिन्नृक्षे स्थितः सूर्यः सौरिर्भौमस्तु सैंहिकः। तस्मिन्स्थाने [15]स्थिते विद्याद्घातमेव न संशयः ॥
[16]जयचक्रं प्रवक्ष्यामि आदिहान्तांश्च वै लिखेत्। रेखास्त्रयोदशाऽऽलिख्य [17]षड्रेखास्तिर्यगालिखेत्

---

१ क. ङ. °णं स्कन्द त°। २ क. ङ. °चिच्चारु(रु)शत(तं) वि°। ३ घ. छ. द्विविधो। ४ घ. छ. °ग्रामस्तु। ५ क. ङ. °थिभेदे। ६ घ. छ. °ग्रामं वि°। ७ क. ङ. गन्धर्वाणि। ८ क. ङ. °स्य तदा°। ९ क. ङ. भाषणे। १० क. ङ. कुध्यमानो। ११ क. ङ. ह्यविचारतः। १२ क. ख. ग. ङ. च. मध्य अ°। १३ क. ग. ङ. जायते। ख. जयते। १४ घ. छ. °म ह्यृक्षं। १५ क. ङ. हतं। १६ क. ङ. उपचक्रं। १७ छ. षड्लेखा°।

ग्रहा मुनयः सूर्या ऋत्विग्रुद्रस्तिथिः क्रमात् । मूर्छनास्मृतिवेदर्क्षजिना अर्कडमा ह्यधः ॥ १५
ादित्याद्याः सहैकृते नामान्ते बलिनो ग्रहाः । आदित्यसौरिभौमाख्या जये सौम्याश्च संधये॥
खा द्वादश चोद्धृत्य षट्च याम्यास्तथोत्तराः । भैनुश्चैव तु ऋक्षाणि नेत्रे च रविमण्डलम् ॥१६
तथयश्च रसा वेदा अग्निः सप्तदशाथ वा । वसुरन्ध्राः समाख्याता अर्कैटपानधो न्यसेत् ॥१७
कैकमक्षरं न्यस्त्वा(स्य) शेषाण्येवं क्रमान्न्यसेत् । नामाक्षरकृतं पिण्डं वसुभिर्भाजयेत्ततः ॥ १८
ायसान्मण्डलोऽत्युग्रो मण्डलाद्रासभो वरः । रासभाद्वृषभः श्रेष्ठो वृषभात्कुञ्जरो वरः ॥ १९
ञ्जराच्च पुनः सिंहः सिंहाचैवं खरुर्वरः । खरोश्चैव बली धूम्र एवमादि बलाबलम्*॥ २०

इत्यादिमहापुराण आग्नेये घातचक्रादिवर्णनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१५७

---

अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

---

सेवाचक्रादि ।

ईश्वर उवाच—

वाचक्रं प्रवक्ष्यामि लाभालाभार्थसूचकम् । पिता माता तथा भ्राता दंपती च विशेषतः ॥ १
स्मिश्चक्रे तु विज्ञेयं यो यस्माल्लभते फलम् । पड्डूर्ध्वाः स्थापयेद्रेखा भिन्नाश्चाष्टौ तु तिर्यगाः(ग्गाः)
ोष्ठकाः पञ्चत्रिंशच्च तेषु वर्णान्समालिखेत् । स्वरान्पञ्च समुद्धृत्य स्पर्शान्पश्चात्समालिखेत् ॥३
कारादिहकारान्तान्हीनाङ्गांस्त्रीन्विवर्जयेत् । सिद्धः साध्यः सुसिद्धश्च अरिर्मृत्युश्च नामतः ॥ ४
अरिर्मृत्युश्च द्वावेतौ वर्जयेत्सर्वकर्मसु । (*एषां मध्ये यदा नाम लक्षयेत्तु प्रयत्नतः ॥ ५
ात्मपक्षे स्थिताः सत्त्वाः सर्वे ते शुभदायकाः । द्वितीयः पोषकश्चैव तृतीयश्चार्थदायकः ॥ ६
आत्मनाशश्चतुर्थस्तु पञ्चमो मृत्युदायकः । स्थानमेवार्थलाभाय मित्रभृत्यादिबान्धवाः ॥ ७
द्धः साध्यः सुसिद्धश्च सर्वे ते फलदायकाः । अरिर्मृत्युश्च द्वावेतौ वर्जयेत्सर्वकर्मसु ॥ ) ८
कारान्तं यथा प्रोक्तम इ उ एं विंदुस्तथा । पुनश्चैवांशकान्वक्ष्ये वर्गाष्टकसुसंस्कृतान् ॥ ९
वा अकारवर्गे तु दैत्याः कवर्गमाश्रिताः । नागाश्चैव चवर्गाः(र्गे) स्युर्गन्धर्वाश्च टवर्गजाः ॥१०
वर्गे ऋषयः प्रोक्ताः पवर्गे राक्षसाः स्मृताः । पिशाचाश्च यवर्गे च शवर्गे मानुषाः स्मृताः ११
वेभ्यो बलिनो दैत्या दैत्येभ्यः पन्नगास्तथा । पन्नगेभ्यश्च गन्धर्वा गन्धर्वादृषयो वराः ॥ १२
षिभ्यो राक्षसाः शूरा राक्षसेभ्यः पिशाचकाः । पिशाचेभ्यो मानुषाः स्युर्दुर्बलं वर्जयेद्बली॥

---

* क. ख. ग. ङ. च पुस्तकेष्वत्राध्यायसमाप्तिर्नास्ति । + इदमर्धं नास्ति क. ङ. पुस्तकयोः । अत्राप्यधिक-दनुपदमस्यैव पठिष्यमाणत्वात् । * धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ख. पुस्तके । + एतदादिसार्धश्लोको नास्ति क. ङ. तकयोः ।

---

१ क. ङ. °स्तिथिर्क° । २ क. ङ. °कद्दमाज्यवः । आ° । ३ घ. छ. °सहृते । ४ क. ङ. मन्त्रश्च वसतुर्माणि । . ग. मरुतश्चैव ऋ° । ५ क. ङ. °करयान° । ६ क. ख. ग. ङ. °व तरु° । च. °व रुरु° । ७ क. ख. ग. ङ. च. °रः । ो° । ८ क. ङ. °तः । यस्मिं° । ९ क. ङ. तेष्ववं° । १० क. ख. ग. ङ. च. °स्त्रीणि व° । ११ क. ङ. ए ओ वि° । . ग. ए ऐ वि° । १२ ख. ग. °दुत्तमाः । पु° । १३ क ङ. °श्चैवाष्टका° ।

पुनर्मैत्रविभागं तु ताराचक्रं क्रमाच्छृणु । नामाद्यक्षरमृक्षं तु स्फुटं कृत्वा तु पूर्वतः ॥ १४
ऋक्षे तु संस्थितास्तारा नवत्रिका यथाक्रमात् । जन्मसंपद्विपत्क्षेमं नामर्क्षात्तारका इमाः ॥ १५
प्रत्यरा धनदा षष्ठी नैधनामैत्रके परे । परमै(मि)त्राऽन्तिमा तारा जन्मतारा तु शोभना ॥ १६
संपत्तारा महाश्रेष्ठा विपत्तारा तु निष्फला । क्षेमतारा सर्वकार्ये प्रत्यरा अर्थनाशिनी ॥ १७
धनदा राज्यलाभादि(य) नैधना कार्यनाशिनी । मैत्रतारा च मित्राय परमित्रा हितावहा ॥१८

ताराचक्रम् ।

---

*मात्रा वै स्वरसंज्ञा स्यान्नाममध्ये क्षिपेत्प्रिये । त्रिंशत्या च हरेद्भागं यच्छेषं तत्फलं भवेत् १९
उभयोर्नाममध्ये तु लक्षयेच्च धनं ह्यृणम् । हीनमात्रा ह्यृणं ज्ञेयं धनं मात्राधिकं पुनः ॥ २०
धनेन मित्रता नॄणामृणेनैव ह्युदास(सि)ता । सेवाचक्रमिदं प्रोक्तं लाभालाभादिदर्शकम् ॥ २१
मेषमिथुनयोः प्रीतिर्मैत्री मिथुनसिंहयोः । तुलासिंहौ महामैत्री एवं धनुर्घटे पुनः ॥ २२
मित्रसेवां न कुर्वीत मित्रौ(त्रे) मीनवृषौ मतौ । वृषकर्कटयोर्मैत्री कुलीरघटयोस्तथा ॥ २३
कन्यावृश्चिकयोरेवं तथा मकरकीटयोः । मीनमकरयोर्मैत्री तृतीयैकादशे स्थिता ॥ २४
तुलामेषौ महामैत्री विद्विष्टौ वृषवृश्चिकौ । मिथुनधनुषोः प्रीतिः (+कर्कटमकरयोस्तथा ॥
मृगकुम्भकयोः प्रीतिः) कन्यामीनौ तथैव च ॥ २५

इत्यादिमहापुराण आग्नेये सेवाचक्रादिवर्णनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१८२

---

अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

---

नानाबलानि ।

ईश्वर उवाच—

गर्भजातस्य वक्ष्यामि क्षेत्राधिपस्वरूपकम् । नातिदीर्घः कृशः स्थूलः समाङ्गो गौरपैत्तिकः ॥ १
रक्ताक्षो गुणवाञ्शूरो गृहे सूर्यस्य जायते । सौभाग्यो(सुभगो) मृदुसारश्च जातश्चन्द्रगृहोदये ॥ २
*वाताधिकोऽतिलुब्धादिर्जातो भूमिभुवो गृहे । बुद्धिमान्सुभगो मानी जातः सौम्यगृहोदये ॥३
बृहत्क्रोधश्च सुभगो जातो गुरुगृहे नरः । त्यागी भोगी च सुभगो जातो भृगुगृहोदये ॥ ४
बुद्धिमान्सुभगो मानी जातश्चाऽऽर्किगृहे नरः । सौम्यलग्ने तु सौम्यः स्यात्क्रूरः स्यात्क्रूरलग्नके॥
दशाफलं गौरि वक्ष्ये नामराशौ तु संस्थितम् । गजाश्वधनधान्यानि राज्यश्रीर्विपुला भवेत् ॥६
पुनर्धनागमश्चापि दशायां भास्करस्य तु । द्रव्यस्त्रीदा चन्द्रदशा भूमिलाभः सुखं कुजे ॥ ७

---

* एतदाद्यध्यायसमाप्तिपर्यन्तं नास्ति च. पुस्तके । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ङ. पुस्तकयोः ।
* इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ख. ग. घ. छ. °नर्मित्र° । २ क. ङ. °तः । स्वर्गेषु सं° । ३ क. ङ. बलदा । ४ घ. छ. °रा त्वशो° । ५ ख. ग. निधना । ६ क. ङ. °त्रा चेश्वर° । ७ ख. ग. वै सुर° । ८ क. ङ. लभेत् । ९ क. ङ. मित्राशिवां । १० घ. छ. तु । दिव्य° ।

( नानाबलानि )

भूमिर्धान्यं धनं बौधे गजाश्वादिधनं गुरौ[1] । खाद्यपानधनं शुक्रे शनौ व्याध्यादिसंयुतः ॥ ८
स्थानसेवा दिवाध्यानं वाणिज्यं राहुदर्शने । वामनाडीप्रवाहे स्यान्नाम चेद्विषमाक्षरम् ॥ ९
तदा जयति सङ्ग्रामे शनिभौमस(सु?)सैंहिकाः । दक्षनाडीप्रवाहेऽर्के वाणिज्ये(ज्यं) चैव निष्फलम्
सङ्ग्रामे जयमाप्नोति समनामा नरो ध्रुवम् । अधश्चारे जयं विद्यादूर्ध्वचारे रणे मृतिम् ॥ ११
ॐ हूम्[4], ॐ हूम्, ॐ स्फेम्[5], अस्त्रं[6] मोटय, ॐ चूर्णय[7] चूर्णय, ॐ सर्वशत्रुं मर्दय मर्दय, ॐ
ह्रूम्, ॐ ह्रः फट्[8] ॥ १२
सप्तवारं न्यसेन्मन्त्रं ध्यात्वाऽऽत्मानं तु भैरवम् । चतुर्भुजं दशभुजं विंशद्बाह्वात्मकं[9] शुभम् ॥ १३
शूलखट्वाङ्गहस्तं तु खड्गकट्टारिकोद्यतम् । भक्षणं(कं) परसैन्यानामात्मसैन्यपराङ्मुखम् ॥ १४
संमुखं शत्रुसैन्यस्य शतमष्टोत्तरं जपेत् । जंपाड्डमरुकाच्छब्दाच्छत्रं[10] त्यक्त्वा पलायते ॥ १५
परसैन्यं(न्ये) शृणु भङ्गं प्रयोगेण पुनर्वदे । श्मशानाङ्गारमादाय विष्ठां चोलूककाकयोः ॥ १६
कर्पटे प्रतिमां लिख्य[11] साध्यस्यैवाक्षरं यथा । नामाथ नवधाऽऽलिख्य रिपोश्चैव यथाक्रमम् ॥१७
मूर्ध्नि वक्त्रे ललाटे च हृदये गुह्यपादयोः । पृष्ठे तु बाहुमध्ये तु नाम वै नवधा लिखेत् ॥ १८
मोटयेद्[12]युद्धकाले तु उच्चरित्वा(समुच्चार्य) तु विद्यया । तार्क्ष्यचक्रं प्रवक्ष्यामि जयार्थं त्रिमुखाक्षरम्
क्षिप ॐ स्वाहा तार्क्ष्यात्मा शत्रुरोगविषादिनुत्[13] । दुष्टभूतग्रहार्तस्य व्याधितस्याऽऽतुरस्य च २०
करोति यादृशं कर्म तादृशं सिध्यते खगात् । स्थावरं जङ्गमं चैव लूताश्च कृत्रिमं विषम् ॥ २१
तत्सर्वं नाशमायाति साधकस्यावलोकनात् । पुनर्ध्यायेन्महातार्क्ष्यं द्विपक्षं मानुषाकृतिम् ॥ २२
द्विभुजं वक्रचञ्चुं[14] च गजकूर्मधरं[15] प्रभुम् । असंख्योरगपादस्थमागच्छन्तं खमध्यतः ॥ २३
ग्रसन्तं चैव खादन्तं तुदन्तं चाऽऽहवे रिपून् । चञ्च्वा हताश्च दृष्ट्व्याः केचित्पादैश्च चूर्णिताः॥
पक्षपातैश्चूर्णिताश्च केचिन्नष्टा दिशो दश । तार्क्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत् ॥२५
पिच्छिकां तु प्रवक्ष्यामि मन्त्रसाधनजां क्रियाम् ॥ २६
ॐ ह्रूं पक्षिन्क्षिप, ॐ हूं सः, महाबलपराक्रम सर्वसैन्यं भक्षय भक्षय, ॐ मर्दय मर्दय, ॐ चूर्णय
चूर्णय, ॐ विद्रावय विद्रावय, ॐ हूं खः, ॐ भैरवो ज्ञापयति स्वाहा ॥ २७
अमुं(स्य) चन्द्रग्रहणे तु जपं कृत्वा तु पिच्छिकाम् । मन्त्रयेद्भ्रामयेत्सैन्यं संमुखं गजसिंहयोः॥२८
ध्यानाद्द्रवान्मर्दयेच्च सिंहारूढो मृगादिकान्[16] । शब्दाद्भङ्गं प्रवक्ष्यामि दूरं[17] मन्त्रेण बोधयेत् ॥ २९
मातॄणां चरुकं दद्यात्कालरात्र्या विशेषतः । श्मशानभस्मसंयुक्तं मालती चामरी तथा ॥
कार्पासमूल[18]मात्रं तु तेन दूरं तु बोधयेत् ॥ ३०
ओम्, अहे हे महेन्द्रि, अहे महेन्द्रि भञ्ज हि । ॐ जहि मसानं हि खाहि खाहि किलि किलि,
ॐ हुं फट् ॥ ३१
अरेर्नाशं[19] दूरशब्दाज्जप्तया भङ्गविद्यया । अपराजिता च धत्तूरस्ताभ्यां तु तिलकेन हि ॥ ३२

---

१ ख. ग. °रौ । स्थानयानं ध° । २ घ. छ. °तः । स्नानसेवा दिनाध्या° । ३ क. घ. ङ. छ. °ष्फला । स° । ४ ख. ग. ॐ हूरूम्, ॐ ह्रूम्, ॐ स्फे° । ५ क. ङ. च. °म्, स्फे° । ६ क. ङ. च. °स्त्रं कोटय चू° । ७ क. ङ. च. °य स° । ८ क. ङ. ॐ ह्रूः फ° । ख. ग. च ॐ हः फ° । ९ क. ख. ग. ङ. च. °द्बाहूथवा शतम् । १० क. ङ. जप्त्वा डमरुकान्नातशत्रं । ११ क. ङ. °ख्य रि° । १२ क. ख. ङ. च. मोचये° । १३ क. ङ. °दिकृत् । १४ क. ङ. वज्रचक्रं १५ क. ङ. वज्रचर्मवहं । १६ ख. °गादिका° । १७ ङ. नूनं । ख. ग. दूर । १८ क. ङ. °सस्य मू° । १९ क. ङ. अनन्ताशब्दनशब्दाजप्तया दत्तवि° ।

( त्रैलोक्यविजयविद्या )

ॐ किलि[1] किलि विकिलि, इच्छाकिलि भूतहनि शङ्खिनि, उमे दण्डहस्ते रौद्रि माहेश्वरि, उल्कामुखि ज्वालामुखि शङ्कुकर्णे शुष्कजङ्घेऽलम्बुषे हर हर सर्वदुष्टान्[2]खन खन, ॐ यन्मां निरीक्षयेद्देवि तांस्तान्मोहय, ॐ रुद्रस्य हृदये स्थिता रौद्रि सौम्येन भावेनाऽऽत्मरक्षां ततः कुरु स्वाहा
बाह्यतो मातृः संलिख्य सकलाकृतिवेष्टिताः । नाग[3]पत्रे लिखेद्विद्यां सर्वकामार्थसाधनीम् ॥ ३४
हस्ताद्यैर्धारिता[4] पूर्वं ब्रह्मरुद्रेन्द्रविष्णुभिः । गुरुसङ्ग्रामकाले तु विद्यया रक्षिताः सुराः ॥ ३५
रक्षया नारसिंह्या[5] च भैरव्या शक्तिरूपया । सर्वे(र्वै)त्रैलोक्यमोहिन्या गौर्या देवासुरे रणे[6]॥ ३६
बीजसंपुटितं नाम कर्णिकायां दलेषु च । पूजाक्रमेण चाङ्गानि रक्षायन्त्रं स्मृतं शुभे ॥ ३७
मृत्युंजयं प्रवक्ष्यामि नामसंस्कारमध्यगम् । +कलाभिर्वेष्टितं पश्चात्सकारेण निबोधितम् ॥ ३८
जकारं बिन्दुसंयुक्तमोंकारेण समन्वितम् । धकारोदरमध्यस्थं वकारेण निबोधितम् ॥ ३९
चन्द्रसंपुटमध्यस्थं सर्वदुष्टविमर्दकम् । अथ वा कर्णिकायां च लिखेन्नाम च कारणम् ॥ ४०
पूर्वे दले तथोंकारं स्वदक्षे चोत्तरे लिखेत् । आग्नेय्यादौ चँ हूंकारदले षोडशके स्वरान् ॥ ४१
चतुस्त्रिंशद्दले काद्यान्[11]वाह्ये मन्त्रं च मृत्युजित् । लिखेद्वै भूर्जपत्रे तु रोचनाकुङ्कुमेन च ॥ ४२
*कर्पूरचन्दनाभ्यां च श्वेतसूत्रेण वेष्टयेत् । सिक्थकेन[12] परिच्छाद्य कलशोपरि पूजयेत् ॥ ४३
यन्त्रस्य धारणाद्रोगाः शाम्यन्ति रिपवो मृतिः । विद्यां तु भैलखीं[13] वक्ष्ये[14] विप्रयोगमृतेर्हरी(रा)म्
ओं(ॐ) वातले वितले बिडालमुखि, इन्द्रपुत्रि, उद्भवो वायुदेवेन खीलि, आः, जी हाजा मयि वाह, इत्यादि[15] दुःखनित्यकण्ठोच्चैर्मुहूर्तान्वया, अह मां यस्महमुपाडि, ॐ भेलखि, ॐ स्वाहा[16]॥
नवदुर्गासप्तजप्तान्मुखस्तम्भो मुखस्थितात् ॥ ४६
ॐ चण्डि, ॐ हूं फट् स्वाहा ॥ ४७
गृहीत्वा सप्तजप्तं तु खड्गयुद्धेऽपराजितः ॥ ४८

इत्यादिमहापुराण आग्नेये युद्धजयार्णवे नानाबलवर्णनं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२३०

---

अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।

---

त्रैलोक्यविजयविद्या ।

ईश्वर उवाच—
त्रैलोक्यविजयां[17] वक्ष्ये सर्वयन्त्रविमर्दिनीम्[18] ॥ १
ॐ हूं क्षूं ह्रूम्, ॐ नमो भगवति दंष्ट्रिणि भीमवक्त्रे महोग्ररूपे हिलि हिलि रक्तनेत्रे किलि

---

+ इदमर्धं क. ङ. पुस्तकयोर्नास्ति । * इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ ग. ङ. किणि किणि इच्छाकिणि भू° । २ ख. ङ. °ष्टान्खादय खादय, ॐ । ३ क. ङ. °गयन्त्रे लि° । ४ क. ङ. °भिः । गुना सङ्ग्रामकाले तु विश्वधारारक्षि° । ५ क. ङ. °सिंहाश्वोद्रेरूच्या श° । ६ क. ङ. °णे । कर्णिका पुटिकं ना° । ७ च. °म् । मन्त्रसं° । ८ क. ङ. °दुःखवि° । ९ क. संदले । ख. संदक्षे । च. सदक्षे । १० ख. ग. च हूंका° । ११ च. °द्यान्वक्ष्ये म° । १२ क. ङ. शिक्यकेन । घ. सिष्ठके° । १३ क. ङ. भैरवीं । १४ क. °क्ष्ये रिपुरोग° । १५ घ. इहादि । १६ क. ङ. °हा । वनमुक्तान्सप्त° । १७ क. ङ. °जयं व° । १८ क. ङ. °मर्दनम् ।

किलि महानिस्वने कुलु, ओं निर्मांसे कट कट गोनसाभरणे चिलि चिलि शवमालाधारिणि द्रावय, ॐ महारौद्रि सार्द्रचर्मकृताच्छदे विजृम्भ, ॐ नृत्यासिलताधारिणि भृकुटीकृतापाङ्गे विषमनेत्रकृतानने वसामेदोविलिप्तगात्रे कह कह, ॐ हस हस क्रुद्ध क्रुद्ध, ॐ नीलजीमूतवर्णेऽभ्रमालाकृताभरणे विस्फुर, ॐ घण्टारवावकीर्णदेहे, ॐ सिंसिस्थेऽरुणवर्णे, ॐ ह्रां ह्रीं ह्रूं रौद्ररूपे ह्रूं ह्रीं क्लीम्, ॐ ह्रीं ह्रूंमोमाकर्ष, ॐ धून धून, ॐ हे हः स्वः, वज्रिणि भिन्द, ॐ महाकाये छिन्द, ॐ करालिनि किटि किटि महाभूतमातः सर्वदुष्टनिवारिणि जये, ॐ विजये, ॐ त्रैलोक्यविजये हूं फट् स्वाहा ॥ २

नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेज्जये । न्यासं कृत्वा तु पश्चाङ्गं रक्तपुष्पाणि होमयेत् ॥
सङ्ग्रामे सैन्यभङ्गः स्यात्त्रैलोक्यविजयापठात् ॥ ३

ॐ बहुरूपाय स्तम्भय स्तम्भय, ॐ मोहय, ॐ सर्वशत्रून्द्रावय, ॐ ब्रह्माणमाकर्षय विष्णुमाकर्षय, ॐ महेश्वरमाकर्षय, ओमिन्द्रं टालय, ॐ पर्वतांश्चालय, ॐ सप्त सागराञ्शोषय, ॐ छिन्द छिन्द बहुरूपाय नमः ॥ ४

भुजंगं नाममृन्मूर्तिसंस्थं विद्यादरिं ततः ॥ ५

इत्यादिमहापुराण आग्नेये युद्धजयार्णवीयत्रैलोक्यविजयविद्यावर्णनं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२३५

---

अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

---

## सङ्ग्रामविजयविद्या ।

ईश्वर उवाच—

सङ्ग्रामविजयां विद्यां पदमालां वदाम्यहम् ॥ १

ॐ ह्रीं चामुण्डे श्मशानवासिनि खट्वाङ्गकपालहस्ते महाप्रेतसमारूढे महाविमानसमाकुले कालरात्रि महागणपरिवृते महामुखे बहुभुजे घण्टाडमरुकिङ्किणि[हस्ते], अट्टाट्टहासे किलि किलि, ॐ हूं फट्, दंष्ट्राघोरान्धकारिणि नादशब्दबहुले गजचर्मप्रावृतशरीरे मांसदिग्धे लेलिहानोग्रजिह्वे महाराक्षसि रौद्रदंष्ट्राकराले भीमाट्टाट्टहासे स्फुरद्विद्युत्प्रभे चल चल, ॐ चकोरनेत्रे चिलि चिलि, ॐ ललज्जिह्वे, ॐ भीं भृकुटीमुखि हुंकारभयत्रासनि कपालमालावेष्टितजटामुकुटशशाङ्कधारिणि, अट्टाट्टहासे किलि किलि, ॐ ह्रूं दंष्ट्राघोरान्धकारिणि सर्वविघ्नविनाशिनि, इदं कर्म साधय साधय, ॐ शीघ्रं कुरु कुरु, ॐ फट्, ओमङ्कुशेन शमय प्रवेशय, ॐ रङ्ग रङ्ग कम्पय कम्पय, ॐ चालय, ॐ रुधिरमांसमद्यप्रिये हन हन, ॐ कुट्ट, ॐ छिन्द, ॐ मारय, ओमनुक्रमय, ॐ वज्रशरीरं पातय, ॐ त्रैलोक्यगतं दुष्टमदुष्टं वा गृहीतमगृहीतं वाऽऽवेशय, ॐ नृत्य, ॐ वन्द, ॐ कोटराक्ष्यूर्ध्वकेश्युलूकवदने करङ्किणि दह, ॐ पच पच, ॐ गृह्ण, ॐ मण्डलमध्ये

---

१ घ. °णि ह्रूं क्षूं क्षां क्षोभरूपिणि प्रज्वल प्रज्वल, ॐ भीमभीषणे भि° । २ ख. ग. °पदात् । ३ क. ङ. पद्मा° । ४ ख. घ. °णि, ॐ करङ्कमालाधारिणि द° ।

प्रवेशय, ॐ किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येनर्षिसत्येनाऽऽवेशय, ॐ किलि किलि ॐ खिलि खिलि विलि विलि, ॐ विकृतरूपधारिणि कृष्णभुजंगवेष्टितशरीरे सर्वग्रहावेशनि प्रलम्बौष्ठिनि भ्रूभङ्गलग्ननासिके विकटमुखि कपिलजटे ब्राह्मि भञ्ज, ॐ ज्वालामुखि स्वन, ॐ पातय, ॐ रक्ताक्षि घूर्णय भूमिं पातय, ॐ शिरो गृह्ण चक्षुर्मीलय, ॐ हस्तपादौ गृह्ण मुद्रां स्फोटय, ॐ फट्, ॐ विदारय, ॐ त्रिशूलेन च्छेदय, ॐ वज्रेण हन, ॐ दण्डेन ताडय ताडय, ॐ चक्रेण च्छेदय च्छेदय, ॐ शक्त्या भेदय दंष्ट्रया कीलय, ॐ कर्णिकया पाटय, ओमङ्कुशेन गृह्ण, ॐ शिरोक्षिज्वरमैकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं डाकिनीस्कन्दग्रहान्मुञ्च मुञ्च, ॐ पच, ओमुत्सादय, ॐ भूमिं पातय, ॐ गृह्ण, ॐ ब्रह्माण्येहि, ॐ माहेश्वर्येहि, [ॐ]कौमार्येहि, ॐ वैष्णव्येहि, ॐ वाराह्येहि, ओमैन्द्र्येहि, ॐ चामुण्ड एहि ॐ रेवत्येहि, ओमाकाशरेवत्येहि, ॐ हिमवच्चारिण्येहि, ॐ रुरुमर्दिन्यसुरक्षयंकर्याकाशगामिनि पाशेन बन्ध बन्ध, अङ्कुशेन कट कट समयं तिष्ठ, ॐ मण्डलं प्रवेशय, ॐ गृह्ण मुखं बन्ध, ॐ चक्षुर्बन्ध हस्तपादौ च बन्ध दुष्टग्रहान्सर्वान्बन्ध, ॐ दिशो बन्ध, ॐ विदिशो बन्ध, अधस्ताद्बन्ध, ॐ सर्वं बन्ध, ॐ भस्मना पानीयेन वा मृत्तिकया सर्षपैर्वा सर्वानावेशय, ॐ पातय, ॐ चामुण्डे किलि किलि, ॐ विच्चे हुं फट् स्वाहा ॥ २

पदमाला जयाख्येयं सर्वकर्मप्रसाधिका । सर्वदा होमजप्याद्यैः पाठाद्यैश्च रणे जयः ॥ ३

अष्टाविंशभुजा ध्येया असिखेटकपट्करौ । गदादण्डयुतौ चान्यौ शरचापधरौ परौ ॥ ४

मुष्टिमुद्गरयुक्तौ च शङ्खखड्गयुतौ परौ । ध्वजवज्रधरौ चान्यौ सचक्रपरशू परौ ॥ ५

डमरुदर्पणाढ्यौ च शक्तिकुन्तधरौ परौ । हलेन मुसलेनाऽऽढ्यौ पाशतोमरसंयुतौ ॥ ६

*ढक्कापणवसंयुक्तावभयौ मुष्टिकान्वितौ । तर्जयन्ती च महिषं घातनी होमतोऽरिजित् ॥
त्रिमध्वाक्ततिलैर्होमो न देया यस्य कस्यचित् ॥ ७

इत्यादिमहापुराण आग्नेये युद्धजजयार्णवे सङ्ग्रामविजयविद्यावर्णनं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२४२

---

अथ षट्त्रिंशदधिकशततमोऽध्यायः ।

---

नक्षत्रचक्रम् ।

ईश्वर उवाच—

अथ चक्रं प्रवक्ष्यामि यात्रादौ च फलप्रदम् । अश्विन्यादौ लिखेच्चक्रं त्रिनाडीपरिभूषितम् ॥ १

अश्विन्यार्द्रादिभिः पूर्वा ततश्चोत्तरफल्गुनी । हस्ता(स्तो) ज्येष्ठा तथा मूलं वारुणं चाप्यजैकपात्

* इदमर्धं च. पुस्तके नास्ति ।

१ क. ख. ग. खल । २ क. ख. ग. च. कर्तक॰ । ३ क. ख. ग. शिरार्तिज्व॰ । ४ क. ङ. ॐ सूतकम॰ । ५ क. छ. ॰वन्तधारि॰ । ६ क. ङ. च. विचे हुं । ७ क. ङ. च. शङ्कुख॰ । ८ क. ङ. ॰भयस्वस्तिका॰ । ९ क. ख. ॰तो विजि॰ । १० च. ॰त् । त्रिशभक्त॰ । ११ क. ङ. ॰र्होमैर्न दे॰ । १२ क. ख. ग. ङ. हस्तज्ये॰ । १३ क. ख. ग. ङ. ॰णं वाऽप्य॰ ।

नाडीयं प्रथमा चान्या याम्यं मृगशिरस्तथा। पुष्यं भाग्यं तथा चित्रा मैत्रं चाऽऽप्यं च वासवम्
अहिर्बुध्नं तृतीयाऽथ कृत्तिका रोहिणी ह्यहिः। चित्रा स्वाती विशाखा च श्रवणा रेवती च भम्
नाडीत्रितयसंजुष्टग्रहाज्ज्ञेयं शुभाशुभम्। चक्रं फणीश्वरं तत्तु त्रिनाडीपरिभूषितम् ॥ ५
*रविभौमार्कराहुस्थमशुभं स्याच्छुभं परम्। देशग्रामयुता भ्रातृभार्याद्या एकशः शुभाः ॥ ६
अ भ कृ रो मृ आ पु पु आ म पू उ ह चि स्वा वि अ ज्ये मू पू उ श्र ध श पू उ रे ॥ ७
अत्र सप्तविंशतिनक्षत्राणि ज्ञेयानि ॥ ८

इत्यादिमहापुराण आग्नेये नक्षत्रचक्रवर्णनं नाम षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२५०

---

अथ सप्तत्रिंशदधिकशततमोऽध्यायः ।

---

## महामारीविद्याकथनम् ।

ईश्वर उवाच—

महामारीं प्रवक्ष्यामि विद्यां शत्रुविमर्दिनीम् ॥ १

ॐ ह्रीं महामारि रक्ताक्षि कृष्णवर्णे यमस्याऽऽज्ञाक(का)रिणि सर्वभूतसंहारकारिणि, अमुकं हन हन, ॐ दह दह, ॐ पच पच, ॐ छिन्द च्छिन्द, ॐ मारय मारय, ओमुत्सादयोत्सादय, ॐ सर्वसत्त्ववशंकरि सर्वकामिके हुं फट्स्वाहेति ॥ २

ॐ मारि हृदयाय नमः। ॐ महामारि शिरसे स्वाहा। ॐ कालरात्रि शिखायै वौषट्। ॐ कृष्णवर्णे खः कवचाय हुम्। ॐ तारकाक्षि विद्युज्जिह्वे सर्वसत्त्वभयंकरि रक्ष रक्ष सर्वकार्येषु ह्रं त्रिनेत्राय वषट्। ॐ महामारि सर्वभूतदमनि महाकालि, अस्त्राय हुं फट् ॥ ३

एष न्यासो महादेवि कर्तव्यः साधकेन तु। शवादिवस्त्रमादाय चतुरस्रं त्रिहस्तकम् ॥ ४
कृष्णवर्णां त्रिवक्त्रां च चतुर्बाहुं समालिखेत्। पटे विचित्रवर्णैश्च धनुः शूलश्च कर्तृकाम् ॥ ५
खट्वाङ्गं धारयन्तीं च कृष्णाभं पूर्वमाननम्। तस्य दृष्टिनिपातेन भक्षयेदग्रतो नरम् ॥ ६
द्वितीययाम्यभागे तु रक्तजिह्वं भयानकम्। +लेलिहानं करालं च दंष्ट्रोत्कटभयानकम् ॥ ७
*तस्य दृष्टिनिपातेन भक्ष्यमाणं हयादिकम्। तृतीयं च मुखं देव्याः श्वेतवर्णं गजादिनुत् ॥ ८
गन्धपुष्पादिमध्वाज्यैः पश्चिमाभिमुखं यजेत्। मन्त्रस्मृतेरक्षिरोगः शिरोरोगादि नश्यति ॥ ९
वश्याः स्युर्यक्षरक्षाश्च(क्षांसि) नाशमायान्ति शत्रवः। समिधो निम्बवृक्षस्य ह्यजारक्तविमिश्रिताः
मारयेत्क्रोधसंयुक्तो होमादेव न संशयः। परसैन्यमुखो भूत्वा सप्ताहं जुहुयाद्यदि ॥ ११

---

* इदमर्धं ग. पुस्तके नास्ति। + इदमर्धं च. पुस्तके नास्ति। * इदमर्धं ग. पुस्तके नास्ति।

---

१ क. ङ. चाग्यं सवा॰। २ क. ॰बुंध्नत॰। ३ ग. मित्रः। ४ क. ङ. च श्रवणं रेवती तु च। ना॰। ५ क. ङ. ॰संदुष्टग्रहैर्ज्ञेयं। ६ क. ङ. ॰रं तद्वत्रिना॰। ७ क. ङ. ॰रिदूषि॰। ८ क. ङ. ॰हुस्था अशुभस्था शुभावहा। दे॰। ९ क. ङ. ॰मसुता। १० क. ङ. एकगाः। ११ ख. ग. क्लीं। १२ ख. ग. ॰हाविर॰। १३ क. ग. ॐ। १४ क. ग. ङ. तु। सर्वादि॰। १५ ख. ग. त्रिरक्तां च। १६ क. ग. ङ. कर्तिकाः॰। १७ क. ङ. शुभदन्तं। १८ ख. ग. त्यजेत्। १९ ङ. ॰रयन्क्रोध॰।

व्याधिभिर्गृह्यते[1] सैन्यं भङ्गो भवति वैरिणः । समिधोऽष्टसहस्रं तु यस्य नाम्ना तु होमयेत् ॥ १२
अचिरान्म्रियते सोऽपि ब्रह्मणा यदि रक्षितः । उन्मत्तसमिधो रक्तविषयुक्तसहस्रकम् ॥ १३
दिनत्रयं ससैन्यश्च नाशमायाति वै रिपुः । राजिकालवणैर्होमाद्भङ्गोऽरेः स्याद्दिनत्रयात् ॥ १४
खररक्तसमायुक्तहोमादुच्चाटयेद्रिपुम् । +काकरक्तसमायोगाद्धोमादुत्सादनं ह्यरेः ॥ १५
वधाय कुरुते सर्वं यत्किंचिन्मनसेप्सितम् । अथ सङ्ग्रामसमये गजारूढस्तु साधकः ॥ १६
कुमारीद्वयसंयुक्तो मन्त्रसंनद्धविग्रहः । दूरशङ्खादिवाद्यानि विद्यया ह्यभिमन्त्रयेत् ॥ १७
महामायापटं[2] *गृह्य उच्छेत्तव्यं रणाजिरे । परसैन्यमुखो भूत्वा दर्शयेत्तं महापटम् ॥ १८
कुमारीर्भोजयेत्तत्र पश्चात्पिण्डीं[3] च भ्रामयेत् । +साधकश्चिन्तयेत्सैन्यं पाषाणमिव निश्चलम् ॥ १९
निरुत्साहं विभग्नं च मुह्यमानं च भावयेत्[4] । एष स्तम्भो मया प्रोक्तो न देयो यस्य कस्यचित् ॥
त्रैलोक्यविजया माया दुर्गेवं भैरवी तथा । कुञ्जिका[5] भैरवी रुद्रो नारसिंह(?) पटादिना ॥ २१

इत्यादिमहापुराण आग्नेये महामारीविद्यावर्णनं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२७१

---

अथाष्टात्रिंशदधिकशततमोऽध्यायः ।

---

षट्कर्माणि ।

ईश्वर उवाच—

षट्कर्माणि प्रवक्ष्यामि सर्वमन्त्रेषु तच्छृणु । आदौ साध्यं लिखेत्पूर्वं चान्ते मन्त्रसमन्वितम् ॥ १
पल्लवः स तु विज्ञेयो महोच्चाटकरः परः । आदौ मन्त्रस्ततः साध्यो मध्ये साध्यः पुनर्मनुः ॥ २
योगाख्यः संप्रदायोऽयं कुलोत्सादेषु योजयेत् । आदौ मन्त्रपदं दद्यान्मध्ये साध्यं नियोजयेत् ३
पुनश्चान्ते लिखेन्मन्त्रं साध्यं मन्त्रपदं पुनः[6] । रोधकः संप्रदायस्तु स्तम्भनादिषु योजयेत् ॥ ४
*अधोऽर्धे याम्यवामे तु मध्ये साध्यं तु योजयेत् । (+संपुटः स तु विज्ञेयो वश्याकर्षेषु योजयेत्
मन्त्राक्षरं यदा साध्यं ग्रथितं चाक्षराक्षरम्[7] । प्रथमः) संप्रदायः स्यादाकृष्टिवशकारकः ॥ ६
मन्त्राक्षरद्वयं लिख्य एकं साध्याक्षरं पुनः । विदर्भः स तु विज्ञेयो[8] वश्याकर्षेषु योजयेत् ॥ ७
आकर्षणादि यत्कर्म वसन्ते चैव कारयेत् । तापज्वरे तथा वश्ये[9] स्वाहा चाऽऽकर्षणे शुभम् ॥ ८
नमस्कारपदं[10] चैव शान्तिवृद्धौ प्रयोजयेत् । पौष्टिकेषु वषट्कारमाकर्षे वशकर्मणि ॥ ९
विद्वेषोच्चाटने मृत्यौ फट्स्यात्खण्डीकृतोऽशुभे । लाभादौ मन्त्रदीक्षादौ वषट्कारस्तु सिद्धिदः १०
यमोऽसि यमराजोऽसि कालरूपोऽसि धर्मराट् । मया दत्तमिमं शत्रुमचिरेण निपातय ॥ ११
निपातयामि यत्नेन निवृत्तो भव साधक । संहृष्टमनसा ब्रूयाद्देशिकोऽरिप्रसूदनः[11][12] ॥ १२

---

+ इदमर्धं क. ङ. पुस्तकयोर्नास्ति । * अस्मिञ्श्लोके गृह्येति पदमार्षम् । + इदमर्धं क. ङ. च. पुस्तकेषु नास्ति ।
* इदमर्धं ग. च. पुस्तकयोर्नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति ।

---

१ क. ङ. °धिभिः पूर्यते । २ क. ङ. °पदं गृ° । ३ क. ङ. °तिपिच्छीं च । ४ ख. भीषयेत् । ५ क. ङ. कुम्भिका । ६ ख. ग. च. °नः । बोध° । ७ क. ङ. °ष्टिरसका° । ८ च. °यो रष्टावर्षे° । ९ क. ङ. वक्ष्ये । १० क. ङ. °परं चै° । ११ च. °को रिपुसूदनम् । अग्निस्वर्णमयं प्रा° । १२ क. ङ. °नः । आग्नि स्वर्णमयं प्रा° ।

पद्मे शुक्रे यमं प्राच्र्य होमादेतत्प्रसिध्यति । आत्मानं भैरवं ध्यात्वा ततो मध्ये कुलेश्वरीम् ॥ १३
रात्रौ वार्ता विजानाति आत्मनश्च परस्य च । दुर्गे दुर्गरक्षणीति दुर्गां प्राच्र्यारिहा भवेत् ॥
जप्त्वा हसक्षमलवरयुं भैरवीं घातयेदरिम् ॥ १४

इत्यादिमहापुराण आग्नेये षट्कर्मकथनं नामाष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२८६

---

अथैकोनचत्वारिंशदधिकशततमोऽध्यायः ।

---

षष्टिः संवत्सराः ।

ईश्वर उवाच—

षष्ट्यब्दानां प्रवक्ष्यामि शुभाशुभमतः शृणु । प्रभवे यज्ञकर्माणि विभवे सुखिनो जनाः ॥ १
शुक्ले च सर्वसस्यानि प्रमोदेन प्रमोदिताः । प्रजापतौ प्रवृद्धिः स्यादङ्गिरा भोगवर्धनः ॥ २
श्रीमुखे वर्धते लोको भावे भावः प्रवर्धते[1] । युना च प्लवते शक्रो धाता सर्वौषधीकरः ॥ ३
ईश्वरे क्षेममारोग्यं बहुधान्यः सुभिक्षदः । प्रमाथी मध्यवर्षस्तु[2] विक्रमे सस्यसंपदः ॥ ४
वृषो वृष्यति सर्वांश्च चित्रभानुश्च चित्रताम् । सुभानुः(नौ) क्षेममारोग्यं तारणे जलदाः शुभाः ॥
पार्थिवे सस्यसंपत्तिरतिवृष्टिस्तथा व्यये । सर्वजित्युत्तमा वृष्टिः सर्वधारी सुभिक्षदः ॥ ६
विरोधी जलदान्हन्ति विकृतिश्च भयंकरः । खरे भवेत्पुमान्वीरो नन्दने नन्दते(ति) प्रजा ॥ ७
विजयः[3] शत्रुहन्ता च शत्रु(जयो) रोगादि मर्दयेत् । ज्वरार्तो मन्मथे लोको दुष्करे दुष्कराः प्रजाः(?)
दुर्मुखे दुर्मुखो लोको हेमलम्बेन संपदः । संवत्सरो[4] महादेवि विलम्बस्तु सुभिक्षदः ॥ ९
विकारी शत्रुकोपाय विजये(शार्वरी) सर्वदा कचित् । प्लवे प्लवन्ति तोयानि शोभने शुभकृत्प्र-
(शुभकृच्छोभने प्र)जा ॥ १०
*राक्षसे निष्ठुरो लोको विविधं धान्यमानने(ले)।सुवृष्टिः पिङ्गले कापि काले ह्युक्तो(लयुक्ते) धनक्षयः
सिद्धार्थे सिध्यते(ति) सर्वं रौद्रे रौद्रं प्रवर्तते । दुर्मतौ मध्यमा वृष्टिर्दुन्दुभिः क्षेमधान्यकृत् ॥ १२
स्रवन्ते(ति) रुधिरोद्गारी रक्ताक्षः(क्षे) क्रोधनो(ने) जयः। क्षये क्षीणधनो लोकः षष्टिसंवत्सराणि तु

इत्यादिमहापुराण आग्नेये युद्धजयार्णवे षष्टिसंवत्सरवर्णनं नामैकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२९८

---

अथ चत्वारिंशदधिकशततमोऽध्यायः ।

---

वश्यादियोगाः ।

ईश्वर उवाच—

वश्यादियोगान्वक्ष्यामि लिखेद्व्यष्टपदे त्विमान् । भृङ्गराजः सहदेवी मयूरस्य शिखा तथा ॥ १

---

*क्रोधयाद्यानन्दान्तैकादशसंवत्सरफलप्रतिपादकाः श्लोकास्त्रुटिताः ।

---

१ घ. °ते । पुरणो पूरते श° । २ क. ख. ङ. °वर्ष तु वि° । ३ ख. ग. विषयः । ४ क. ख. ङ. °त्सरे म° ।

पुत्रं जीवकृतं[1] जाली ह्यधःपुष्पा रुदन्तिका । कुमारी रुद्रजटा स्याद्विष्णुक्रान्ता शि(सि)तोऽर्ककः
लज्जालुका मोहलता कृष्णधत्तूरसंज्ञिता[2] । गोरक्षः कर्कटी चैव मेषशृङ्गी स्नुही तथा ॥ ३
ऋत्विजो वह्नयो नागाः पक्षौ मुनिमनू शिवः । वसवो दिग्रसा वेदा ग्रहर्तुरविचन्द्रमाः ॥ ४
तिथयश्च क्रमाद्भागा ओषधीनां प्रदक्षिणम् । प्रथमेन चतुष्केण[3] धूपश्चोद्वर्तनं परम् ॥ ५
तृतीयेनाञ्जनं कुर्यात्स्नानं कुर्याच्चतुष्कतः । भृङ्गराजानुलोमाच्च चतुर्धा लेपनं स्मृतम् ॥ ६
मुनयो दक्षिणे पार्श्वे युगाद्याश्चोत्तराः स्मृताः । भुजगाः पादसंस्थाश्च ईश्वरा मूर्ध्नि संस्थिताः ७
मध्येन सार्कशशिभिर्धूपः स्यात्सर्वकार्यके । एतैर्विलिप्तदेहस्तु त्रिदशैरपि पूज्यते ॥ ८
+धूपस्तु षोडशाद्यस्तु[4] गृहाद्युद्वर्तने स्मृतः । युगाद्याश्चाञ्जने प्रोक्ता[5] बाणाद्याः स्नानकर्मणि ॥ ९
रुद्राद्या भक्षणे प्रोक्ताः पक्षाद्याः पानके[6] स्मृताः । ऋत्विग्वेदर्तुनयनैस्तिलकं लोकमोहनम् ॥१०
सूर्यत्रिदशपक्षैश्च शैलैः स्त्री लेपतो वशा । चन्द्रेन्द्रफणिरुद्रैश्च योनिलेपाद्वशाः स्त्रियः ॥ ११
तिथिदिग्युगबाणैश्च गुटिका तु वशंकरी । भक्ष्ये भोज्ये तथा पाने दातव्या गुटिका वशे ॥ १२
ऋत्विग्ग्रहाक्षिशैलैश्च शस्त्रस्तम्भे मुखे धृता[7] । शैलेन्द्रवेदरन्ध्रैश्च अङ्गलेपाज्जले वसेत् ॥ १३
बाणाक्षिमनुरुद्रैश्च गुटिका क्षुत्तृषादिनुत् । त्रिषोडशदिशाबाणैर्लेपात्स्त्री दुर्भगा शुभा ॥ १४
त्रिदशाक्षिदिशानेत्रैर्लेपात्क्रीडेच्च पन्नगैः[8] । त्रिदशाक्षेशभुजगैर्लेपात्स्त्री सूयते सुखम् ॥ १५
(* सप्तदिङ्मुनिरन्ध्रैश्च[9] द्यूतजिद्धस्तलेपतः । त्रिदशाक्ष्यब्धिमुनिभिर्ध्वजलेपाद्रतौ सुतः ॥) १६
ग्रहाब्धिसर्पत्रिदशैर्गुटिका[10] स्याद्वशंकरी । ऋत्विक्पदस्थितौ लष(तौष)ध्याः प्रभावः प्रतिपादितः

इत्यादिमहापुराण आग्नेये वश्यादियोगवर्णनं नाम चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३१५

---

अथैकचत्वारिंशदधिकशततमोऽध्यायः ।

---

षट्त्रिंशत्पदकज्ञानम् ।

ईश्वर उवाच—

षट्त्रिंशत्पदसंस्थानामोषधीनां वदे फलम् । अमरीकरणं नॄणां ब्रह्मरुद्रेन्द्रसेवितम् ॥ १
हरीतक्यक्ष्य(क्ष)धात्र्यश्च मरीचं पिप्पली शिफा[11] । वह्निः शुण्ठी पिप्पली च गुडूची[12] वचनिम्बकाः
वासकः शतमूली च सैन्धवं सिन्धुवारकम् । कण्टकारी मो(गो)क्षुरका[13] बिल्वं पौनर्नवं बला ॥ ३
एरण्डमुण्डीरुचको भृङ्गः क्षारोऽथ पर्पटः । धन्याको जीरकश्चैव शतपुष्पी जव(य)वाणि(नि)का ॥ ४
विडङ्गः खादिरश्चैव कृतमालो हरिद्रया । वचा सिद्धार्थ एतानि षट्त्रिंशत्पदगानि हि ॥ ५
क्रमादेकादिसंज्ञानि ह्यौषधानि महान्ति हि । +सर्वरोगहराणि स्युरमरीकरणानि च ॥ ६

---

+ इदमर्धं च. पुस्तके नास्ति । * धनुश्चिह्नान्तगर्तश्लोकः क. ङ. पुस्तकयोर्नास्ति । + इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ ग. °कृता जा° । २ ग. घ. ङ. °ष्णधूस्तुर° । ३ क. ङ. °ण वृषश्चो° । ४ ख. ग. °शापास्तु । ५ क. ख. ग. °क्ता रणाद्याः स्थान° । ६ क. ङ. पारके । ७ क. ङ. च. धृतम् । ८ क. ङ. °शाहिदशनेत्रैस्तेयात्पीडावप° । ९ ग. °श्च द्युतजिद्धस्तलेपनः । त्रि° । १० ख. ग. °हाग्निसर्यत्रि° । ११ क. ङ. शफाः । १२ क. ख. ङ. °ची चव्यनि° । १३ क. ङ. °का विडङ्गो नर्तकं ब° । १४ क. ङ. समानिका ।

वलीपलितभेत्तॄणि सर्वकोष्ठगतानि तु । एषां चूर्णं च वटिका रसेन परिभाविता ॥ ७
अवलेहः कषायो वा मोदको गुडखण्डकः । मधुतो[1] घृततो[2] वाऽपि घृतं तैलमथापि वा ॥ ८
सर्वात्मनोपयुक्तं[3] हि मृतसंजीवनं भवेत् । कर्षार्धं कर्षमेकं वा पलार्धं पलमेककम् ॥ ९
यथेष्टाचारनिरतो[4] जीवेद्वर्षशतत्रयम् । मृतसंजीवनीकल्पे[5] योगो नास्मात्परोऽस्ति हि ॥ १०
प्रथमान्नवकाद्योगात्सर्वरोगैः प्रमुच्यते । द्वितीयाच्च तृतीयाच्च चतुर्थान्मुच्यते रुजः ॥ ११
एवं षट्काच्च प्रथमाद्द्वितीयाच्च तृतीयतः । चतुर्थात्पञ्चमात्षष्ठात्तथा नवचतुष्कतः ॥ १२
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टमतोऽनिलात् । अग्निभास्करषड्विंशसप्तविंशैश्च पित्ततः ॥ १३
बाणर्तुशैलवसुभिस्तिथिभिर्मुच्यते[6] कफात् । वेदाग्निभिर्बाणगुणैः षड्गुणैः स्याद्द्रशे धृते ॥ १४
ग्रहादिग्रहणान्तैश्च[7] सर्वैरेव विमुच्यते । एकद्वित्रिरसैः[8] शैलैर्वसुग्रहशिवैः क्रमात् ॥ १५
द्वात्रिंशत्तिथिसूर्यैश्च[9] नात्र कार्या विचारणा । षट्त्रिंशत्पदकज्ञानं[10] न देयं यस्य कस्यचित् ॥ १६

इत्यादिमहापुराण आग्नेये षट्त्रिंशत्पदकज्ञानाख्यानं नामैकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३३१

---

अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।

---

मन्त्रौषधादि ।

ईश्वर उवाच—

मन्त्रौषधानि चक्राणि वक्ष्ये सर्वप्रदानि च । चौरनाम्नो वर्णगुणो[11] विघ्नो मात्राश्चतुर्गुणाः ॥ १
+नाम्ना हृते[12] भवेच्छेषश्चौरोऽथ जातकं वदे । प्रश्ने ये विषमा वर्णास्ते गर्भे पुत्रजन्मदाः ॥ २
नामवर्णैः समैः काणो वामेऽक्षिण विषमैः पुनः । दक्षिणाक्षि भवेत्काणं[13] स्त्रीपुंनामाक्षरस्य च ॥ ३
मात्रावर्णाश्चतुर्निघ्ना[14] वर्णपिण्डे गुणे कृते । समे स्त्री विषमे ना स्याद्विशेषे[15] च मृतिः स्त्रियाः[16] ॥ ४
प्रथमं रूपशून्येऽथ प्रथमं म्रियते पुमान् । *प्रश्नं सूक्ष्माक्षरैर्गृह्य द्रव्यैर्भोगेऽखिले मतम् ॥ ५
शनिचक्रं प्रवक्ष्यामि तस्य दृष्टिं परित्यजेत् । राशिस्थः सप्तमे दृष्टिश्चतुर्दशशतेऽधिका ॥ ६
एकद्व्यष्टद्वादशमः पाददृष्टिश्च[17] तत्त्यजेत् । दिनाधिपः प्रहरभाक्शेषा[18] यामार्धभागिनः ॥ ७
शनिभागं त्यजेद्युद्धे दिनराहुं वदामि ते । रवौ पूर्वेऽनिले मन्दे गुरौ याम्येऽनले भृगौ ॥ ८
अग्नौ कुजे[19] भवेत्सौम्ये स्थिते राहुर्बुधे[20] सदा[21] । फणिराहुस्तु प्रहरमैशे वह्नौ च राक्षसे ॥ ९
वायौ[22] संवेष्टयित्वा च शत्रुं हन्तीशसंमुखम् । तिथिराहुं[23] प्रवक्ष्यामि पूर्णिमाऽऽग्नेयगोचरे ॥ १०

---

+ इदमर्धं क. ङ पुस्तकयोर्नास्ति । * इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ क. सयुतो । २ क. °तोयाम्भोघृ° । ३ क. ङ. °नोयमुक्तं । ४ क. ङ. °ष्टा वाचिनि° । ५ क. ङ. °नीकोन्यो यो° । ६ ख. °मा न च का° । ७ क. ङ. °शैववसुतिस्ति° । ८ क. ङ. °श्च कुष्ठे रे° । ग. °श्च कुष्ठं रे° । ९ क. ङ. °रथैः शैलैर्धनुर्महाशिरैः क्र° । १० ग. °शप्रकटज्ञा° । ११ क. ङ. °गुणाद्वियामा° । १२ ख. कृते । १३ क. ग. °वेत्कोणः स्त्री° । १४ क. ख ङ. °तुर्विमावर्णपिण्डैर्गुणैर्हृते । १५ क. ख. ङ. °शेषे(षेऽ)थ मृ° । १६ क. ख. ङ. स्त्रियाम् । १७ क. ख. ङ. °श्च तं त्यजे° । १८ क. ङ. भाङ्मेषाया° । १९ ख. ग. कुण्डे । क. ङ. ध्वजे । २० क. ङ. श्रिये । २१ ख. ग. °दा । याति रा° । २२ ख. ग. वायो स वेष्टयित्वाङ्ग शत्रुं हस्ती सं° । २३ च. °थिभर्ग प्र° ।

अमावास्यां वायवे च राहुः संमुखशत्रुहा[1] । काद्या जान्ताः संमुखे स्युर्झाद्या दान्ताश्च दक्षिणे ॥
*शुक्रे त्यजेत्कुजगुणान्धाद्या मान्ताश्च पूर्वतः[2] । याद्या हान्ता उत्तरे स्युस्तिथिदृष्टिं विवर्जयेत्[3] १२
पूर्वाश्च दक्षिणास्तिस्रो रेखा वै मूलभेदके । सूर्यराश्यादि संलिख्य दृष्टौ हानिर्जयोऽन्यथा ॥१३
विष्टिराहुं[4] प्रवक्ष्यामि अष्टौ रेखास्तु पातयेत् । शिवाद्यमं यमाद्वायुं वायोरिन्द्रं ततोऽम्बुपम् ॥१४
नैर्ऋताच्च नयेच्चन्द्रं चन्द्रादग्निं ततो जले । जलादीशे चरेद्राहुर्विष्ट्या[5] सह महाबलः ॥ १५
ऐशान्यां च तृतीयादौ सप्तम्यादौ च याम्यके[6] । एवं कृष्णे[7] सिते पक्षे वायौ राहुश्च हन्त्यरीन्[8] ॥
इन्द्रादीन्भैरवादींश्च ब्रह्माण्यादीन्ग्रहादिकान् । अष्टाष्टकं च पूर्वादौ याम्यादौ वातयोगिनीम् १७
यां दिशं वहते वायुस्तत्रस्थो घातयेदरीन्[9] । दृढीकरणमाख्यास्ये कण्ठे बाह्वादिधारिता[10] ॥ १८
पुष्पोद्धृता काण्डलक्ष्यं[11] वारयेच्छरपुङ्खिका । तथाऽपराजितापाठाद्वाभ्यां खड्गं निवारयेत् ॥१९
ॐ नमो भगवति वज्रशृङ्खले हन हन, ॐ भक्ष भक्ष, ॐ खाद, ओम्, अरे[12] रक्तं पिब कपालेन रक्ताक्षि रक्तपटे भस्माङ्गि भस्मलिप्तशरीरे वज्रायुधे वज्रप्राकारनिचिते पूर्वां दिशं बन्ध बन्ध, दक्षिणां दिशं बन्ध बन्ध, ओमुत्तरां दिशं बन्ध बन्ध पश्चिमां दिशं बन्ध बन्ध (+नागान्बन्ध बन्ध नागपत्नीर्बन्ध बन्ध, ओमसुरान्बन्ध बन्ध, ॐ) यक्षराक्षसपिशाचान्बन्ध बन्ध, ॐ प्रेतभूतगन्धर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्ष रक्ष, ओमूर्ध्वं रक्ष रक्ष, अधो रक्ष रक्ष, ॐ क्षुरिकं बन्ध बन्ध, ॐ ज्वल महाबले घटि घटि, ॐ मोटि मोटि सटावलिवज्राग्निवज्रप्राकारे हुं फट्, ह्रीं ह्रूं श्रीं फट्, ह्रीं हः, फूं फें फः सर्वग्रहेभ्यः सर्वव्याधिभ्यः सर्वदुष्टोपद्रवेभ्यो ह्रीमशेषेभ्यो रक्ष रक्ष ॥ २०
ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत् ॥ २१

इत्यादिमहापुराण आग्नेये मन्त्रौषधादिवर्णनं नाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३५२

---

अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः ।

---

कुब्जिकापूजा ।

ईश्वर उवाच—

कुब्जिकाक्रमपूजां च वक्ष्ये सर्वार्थसाधनीम् । यया़ऽसुरा जिता देवैः शस्त्राद्यै राज्यसंयुतैः[13] ॥ १
मायाबीजं च गुह्याङ्गे षट्कमस्त्रं करे न्यसेत् । काली कालीति[14] हृदयं दुष्टचाण्डालिका शिरः ॥ २
ह्रीं स्फें ह स ख क छ ड ओंकारो भैरवः शिखा । भेलखीकवचं दूतीनेत्राख्या रक्तचण्डिका ३
ततो गुह्यकुब्जिकास्त्रं मण्डले स्थानके यजेत् । अग्नौ[15] कूर्चशिरो रुद्रे नैर्ऋत्येऽथ शिखाऽनिले ॥ ४

---

* इदमर्धं क. ङ. पुस्तकयोर्नास्ति । + धनुश्चिह्नान्तर्गतपाठः क. ङ. च. पुस्तकेषु नास्ति ।

---

१ च. °हा । व्याघाताद्याः पञ्चमे स्युः सीधादा° । २ क. ङ. पश्चिमे । ३ ख. ग. °जेद्ध्वज° । ४ क. ख. ङ. दृष्टिराहुं । ५ क. ङ. °विंध्या स° । ६ क. ङ. यामके । ७ क. ङ. कृष्णशतेज्याप्ये वा° । ८ क. ङ. °न्स्वधीन् । ९ च. °न् । कटीकरणमध्यास्ये क° । १० क. ङ. कण्ठबाह्वादिवारिवा । पु° । ११ क. ङ. °लक्षधारयेच्छरपुंषिका । त° । १२ ग. च. अहे । १३ क. ग. °राक्षसं° । १४ ख. ग. °ति कुब्जतांदु° । १५ क. ङ. °ग्नौ कृत्वा शि° ।

कवचं मध्यतो नेत्रमस्त्रं दिक्षु च मण्डले । द्वात्रिंशता कर्णिकायां स्रौं हसक्षमलनवत्रषट्सचात्मम-
त्रबीजकम् ॥ ५
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री चामुण्डा चन्डिकेन्द्रकात् ६
*यजेद्रवलकसहाञ्शिवेन्द्राग्नियमेऽग्निपे । जले तु कुसुममालामद्रिकाणां च पञ्चकम् ॥ ७
जालंधरं पूर्णगिरिं कामरूपं क्रमाद्यजेत् । (+मरुद्दीशाग्निनैर्ऋत्ये मध्ये वै वज्रकुब्जिकाम् ॥ ८
अनादिविमलः पूज्यः सर्वज्ञविमलस्ततः । * प्रसिद्धविमलश्चाथ संयोगविमलस्ततः ॥ ९
समयाख्योऽथ विमल एतद्विमलपञ्चकम् । मरुदीशाननैर्ऋत्ये वह्नौ चोत्तरशृङ्गके ॥ १०
कुब्जार्थं खिङ्किनी षष्ठी सोपन्ना सुस्थिरा तथा । रत्नसुन्दरी चैशाने शृङ्गे चाष्टाऽऽदिनाथकाः॥
मित्रं औडीशषष्ठ्याख्यौ वर्षा अग्न्यम्बुपेऽनिले । भवेद्गगनरत्नं स्याच्चाऽऽप्ये कवचरत्नकम् १२
ब्रुं मर्त्यः पञ्चनामाख्यो मरुदीशानवह्निगः । याम्याग्नेये पञ्चरत्नं ज्येष्ठा रौद्री तथाऽन्तिका १३
तिस्रो ह्यासां महावृद्धाः पञ्च प्रणवतोऽखिलाः । सप्तविंशत्यष्टाविंशभेदात्संपूजनं द्विधा ॥ १४
ॐ एं गूं क्रमगणपतिं प्रणवं बटुकं यजेत् । चतुरस्रे मण्डले च दक्षिणे गणपं यजेत् ॥) १५
वामे च बटुकं कोणे गुरून्षोडश नाथकान् । वायव्यादौ चाष्ट(ष्टा)दश प्रतिषट्कोणके ततः १६
ब्रह्माद्याश्चाष्ट परितस्तन्मध्ये च नवात्मकः । कुब्जिका कुलटा चैव क्रमपूजा तु सर्वदा ॥ १७

इत्यादिमहापुराण आग्नेये कुब्जिकापूजाकथनं नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३६९

---

अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

---

कुब्जिकापूजा ।

ईश्वर उवाच—

श्रीमतीं कुब्जिकां वक्ष्ये धर्मार्थादिजयप्रदाम् । पूजयेन्मूलमन्त्रेण परिवारयुतेन वा ॥ १
ओम्, ऐं ह्रौं श्रीं खैं ह्रें हसक्षमलचवयं भगवति, अम्बिके ह्रां ह्रीं क्ष्रीं क्षौं क्ष्रूं क्रीं कुब्जिके
ह्राम्, ॐ ङ ञ न ण मेऽघोरमुखि व्रां छ्रां छीं किलि किलि क्षौं विच्चे ख्यों श्रीं क्रोम्, ओं
ह्रोम्, ऐं वज्रकुब्जिनि स्त्रीं त्रैलोक्यकर्षिणि ह्रीं कामाङ्गद्राविणि ह्रीं स्त्रीं महाक्षोभकारिणि, ऐं
ह्रीं क्षौम्, ऐं ह्रीं श्रीं फें क्षौं नमो भगवति क्ष्रौं कुब्जिके ह्रों ह्रों क्रैं ङ ञ णनमेऽघोरमुखि छ्रां
छां विच्चे, ॐ किलि किलि ॥ २
कृत्वा कराङ्गन्यासं च संध्यावन्दनमाचरेत् । वामा ज्येष्ठा तथा रौद्री संध्यात्रयमनुक्रमात् ॥ ३
कुलवागीशि विद्महे । महाकालीति धीमहि । तन्नः कौली प्रचोदयात् ॥ ४

---

* अयं श्लोकः क. ङ. पुस्तकयोर्नास्ति । + धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति । * इदमर्धं क. च. पुस्तकयोर्नास्ति ।

---

१ क. ख. ग. ङ. °त्रिंशार्णाक° । २ ख. ग. पृष्ठः । ३ ख. ग. घ. षष्ठा । ४ ग. °त्रतुद्रीश° । ५ ख. ग. त्रूं । ६ ख. ग. °ह्निगम् । या° । ७ च. हूं । ८ क. ङ. °तिपक्षोंऽशके । ९ क. ङ. कुटिलास्फोकं क्र° । १० क. ङ. °क्ष्यहर्षि° ।

मन्त्राः पञ्च प्रणवाद्याः पादुकां पूजयामि च । मध्ये नाम चतुर्थ्यन्तं द्विनवात्मकबीजकाः ॥ ६
नमोन्ता[1] वाऽथ षष्ठ्या तु सर्वं ज्ञेया वदामि तान् । कौलीशनाथः सुकला जन्मतः कुब्जिका ततः
श्रीकण्ठनाथः कौलेशो गगनानन्दनाथकः । चटुला देवी मैत्रीशी कराली तूर्णनाथकः[2] ॥ ७
अतलदेवी[3] श्रीचन्द्रा देवीत्यन्तास्ततस्त्रिवम्[4] । भगात्मपुंगणदेवमोहनीं[5] पादुकां यजेत् ॥ ८
अतीतभुवनानन्दरत्नाढ्यां पादुकां यजेत् । ब्रह्मज्ञानाऽथ कमला परमा विद्यया सह ॥ ९
विद्या देवी गुरुशुद्धिस्त्रिशुद्धिं[6] प्रवदामि ते । गगनश्चटुली चाऽऽत्मा पद्मानन्दो मणिः कला ॥१०
कमलो[7] माणिक्यकण्ठो गगनः कुमुदस्ततः । श्रीपद्मो भैरवानन्दो देवः कमल इत्यतः ॥ ११
शिवो भवोऽथ कृष्णश्च नव सिद्धाश्च षोडश । चन्द्रपूरोऽथ[8] गुलमश्च शुभः कामोऽतिमुक्तकः[9] ॥
कण्ठो[10] वीरः प्रयोगोऽथ कुशलो देवभोगकः[11] । विश्वदेवः खड्गदेवो[12] रुद्रो धाताऽसिरेव च ॥१३
मुद्रास्फोटो वंशपूरो भोजः षोडश सिद्धकाः । समयान्यस्तु[13] देहस्तु षोढान्यासेन यत्नितः ॥ १४
प्रक्षिप्य मण्डले पुष्पं मण्डलान्यथ पूजयेत् । अनन्तं च महान्तं[14] च सर्वदा शिवपादुकाम् ॥ १५
महाव्याप्तिं च शून्यं च पञ्चतत्त्वात्ममण्डलम् । श्रीकण्ठनाथपादुकां शंकरानन्तकौ[15] यजेत् ॥ १६
सदाशिवः पिङ्गलश्च भृग्वानन्दश्च नाथकः । लाङ्गूलानन्दसंवर्तौ मण्डलस्थानके[16] यजेत् ॥ १७
नैर्ऋत्ये श्रीमहाकालः पिनाकी च महेन्द्रकः । खड्गो भुजंगो बाणश्च[17] अघासिः शब्दको वशः ॥
आज्ञारूपो नन्दरूपो बलिं दत्त्वा क्रमं यजेत् ॥ १९
ह्रीं खं खं हूं सौं बटुकाय, अरु, अरु, अर्घं पुष्पं धूपं दीपं गन्धं बलिं पूजां गृह्ण गृह्ण नमस्तुभ्यम् । ॐ[18] ह्रां ह्रीं ह्रूं क्षें क्षेत्रपालायावतरावतर महाकपिलजटाभार भास्वर त्रिनेत्र ज्वालामुख, एह्येहि गन्धपुष्पबलिपूजां गृह्ण गृह्ण खः खः, ॐ कः, ॐ लः, ॐ महाडामराधिपतये स्वाहा ॥ २०
बलिशेषेऽथ यजेद्ध्रीं ह्रूं ह्रां श्रीं वै त्रिकूटकम् । वामे च दक्षिणे ह्यग्रे याम्ये निशानाथपादुकाः
( * दक्षे तमोरिनाथस्य[19] ह्यग्रे कालानलस्य च । उड्डियाणं जालंधरं पूर्णं वै कामरूपकम् ॥२२
गगनानन्ददेवं च स्वर्गानन्दं सवर्गकम् । +परमानन्ददेवं च सत्यानन्दस्य पादुकाम् ॥ २३)
नागानन्दं च वर्गाख्यमुक्तं ते रत्नपञ्चकम् । सौम्ये शिवे यजेत्षट्कं सुरनाथस्य पादुकाम् ॥२४
श्रीमत्समयकोटीशं विद्याकोटीश्वरं यजेत् । कोटीशं बिन्दुकोटीशं सिद्धकोटीश्वरं तथा ॥ २५
सिद्धचतुष्कमाग्नेय्याममरीशेश्वरं[21] यजेत् । * चक्रीशनाथं कुरङ्गेशं वृत्रेशं चन्द्रनाथकम् ॥ २६

---

* धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तके नास्ति । + इदमर्धं क. ग. ङ. पुस्तकेषु नास्ति । * इदमर्धं क. ङ. पुस्तकयोर्नास्ति ।

---

१ क. ङ. °वाक्कायवान्ता स° । २ क. ङ. दुष्टनाथकः । ३ ख. अतुलादेविश्रीचन्द्रे दे° । ४ ख. ग. °मे । गर्तांघायुक्तणं दे° । ५ क. ङ. °गार्थो मुक्तपांदेवप्रहृणी पा° । ६ क. ङ. गुरुं सिद्धि° । ७ क. ङ. °मलो माणिक्यकण्ठा गगनं कुमुदेस्त° । ८ क. ङ. °न्द्रप्रभोऽथ । ९ क. ख. ग. ङ. °मोऽथ मु° । १० क. ख. ग. ङ. वटो । ११ क. ङ. भोगदायकः । १२ ख. ग. °ड्गदो वा रु° । १३ क. ङ. °मजात्यस्तु । १४ क. ङ. महोत्साऽथ सर्वथा शिवपादुकाः । म° । १५ क. ख. ग. ङ. °न्तको य° । १६ क. ख. ग. ङ. च. °ण्डले स्था° । १७ क. ङ. °श्च आम्रीसः शब्दको रसः आ° । १८ ख. ग. ॐ ह्रूं ह्रीं ह्रैं क्षैं क्षें° । १९ क. ङ. °स्य अग्रे का° । २० क. ङ. च मर्त्यनिन्दस्य पादुकाम् २१ ग. °शेखरं ।

यजेद्गन्धादिभिश्चैतान्याम्ये विमलपञ्चकम् । यजेदनादिविमलं सर्वज्ञविमलं ततः ॥ २७
यजेद्योगीशविमलं सिद्धाख्यं समयाख्यकम् । नैर्ऋत्ये[1] चतुरो[2] देवान्यजेत्कन्दर्पनाथकम् ॥ २८
पूर्वाः[3] शक्तीश्च सर्वांश्च कुब्जिकापादुकां यजेत् । नवात्मकेन मन्त्रेण पञ्चप्रणवकेन वा ॥ २९
सहक्ष्म[4]लवरयं विष्णुं शिवं सदा यजेत् । पूर्वाच्छिवान्तं ब्रह्मादि ब्रह्माणी च महेश्वरी ॥ ३०
कौमारी वैष्णवी चैव वाराही शक्रशक्तिका । चामुण्डा च महालक्ष्मीः पूर्वादीशान्तमर्चयेत्[5] ॥ ३१
डाकिनी राकिनी पूज्या लाकिनी काकिनी तथा । शाकिनी याकिनी पूज्या वायव्यादुग्रषट्सु च
यजेद्ध्यात्वा ततो देवीं द्वात्रिंशद्वर्णकात्म(त्मि)काम् । पञ्चप्रणवकेनापि[6] ह्रींकारेणाथ वा यजेत् ॥
नीलोत्पलदलश्यामा षड्वक्त्रा षट्प्रकाशिका[7] । चिच्छक्तिरष्टादशाख्या[8] बाहुद्वादशसंयुता ॥ ३४
सिंहासनसुखासीना प्रेतपद्मोपरि स्थिता । कुलकोटिसहस्राढ्या कर्कोटो मेखलास्थितः ॥ ३५
तक्षकेणोपरिष्टाच्च गले हारश्च वासुकिः । कुलिकः कर्णयोर्यस्याः कूर्मः कुण्डलमण्डलः ॥ ३६
भ्रुवोः[9] पद्मो महापद्मो वामे नागः कपालकः । अक्षसूत्रं च खट्वाङ्गं शङ्खं पुस्तं च दक्षिणे ॥ ३७
त्रिशूलं दर्पणं खड्गं रत्नमालाऽङ्कुशं धनुः । श्वेतमूर्ध्वं मुखं देव्या ऊर्ध्वश्वेतं तथाऽपरम् ॥ ३८
पूर्वास्यं पाण्डरं[10] क्रोधि दक्षिणं कृष्णवर्णकम् । हिमकुन्देन्दुभं सौम्यं ब्रह्मा पादतले स्थितः ॥ ३९
विष्णुस्तु जघने रुद्रो हृदि कण्ठे तथेश्वरः । सदाशिवो ललाटे स्याच्छिवस्तस्योर्ध्वतः स्थितः ॥
आघूर्णिका कुब्जिकैवं ध्येया पूजादिकर्मसु ॥ ४०

इत्यादिमहापुराण आग्नेये कुब्जिकापूजाकथनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४०९

---

अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

---

## मालिनीमन्त्राः ।

ईश्वर उवाच—

नाना मन्त्रान्प्रवक्ष्यामि षोढान्यासपुरःसरम् । न्यासास्त्रिधा तु षोढा स्युः शाक्तशांभवयामलाः
शांभवे शब्दराशिः षट्षोडशग्रन्थिरूपवान् । (*त्रिविद्या तद्गहो न्यासस्त्रितत्त्वात्माभिधानकः
चतुर्थी[11] वनमालायाः श्लोकद्वादशरूपवान् ) । (+पञ्चमो रत्नपञ्चात्मा नवात्मा षष्ठ[12] ईरितः ॥ ३
शाक्ते पक्षे च मालिन्यास्त्रिविद्यात्मा द्वितीय[13]कः । अघोर्यष्टकरूपोऽन्यो द्वादशाङ्गश्चतुर्थकः ॥ ४
पञ्चमस्तु षडङ्गः स्याच्छक्तिश्चान्याऽस्त्रचण्डिका) । क्लीं ह्रीं क्लीं श्रीं क्रूं फट् त्रयं स्यात्तूर्याख्यं
सर्वसाधकम् ॥ ५
मालिन्या नादि[14]फान्तं स्यान्नादिनी च शिखा स्मृता[15] । अग्रसनी शिरसि स्याच्छिरोमालानिवृत्तिः शः

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थश्च. पुस्तके नास्ति ।

१ क. ङ. °त्ये च यजेद्देवा° । २ ख. °रो वेदान्य° । ३ क. पूर्वान्सशक्तीन्सर्वा° । ४ क. ख. ग. ङ. °हक्षम-लरलयं वि° । ५ क. ङ. °दीशां तु अ° । ६ ख. ग. °पि क्षींका° । ७ क. ङ. °काशका । ग. °काशिका । ८ क. ङ. °स्रा-ख्या क° । ख. ग. च. °स्राद्या क° । ९ क. ङ. तरोः । ख. ग. भ्रुवः । च. तयोः । १० क. ङ. पाण्डुरं । ११ क. ख. ङ. च. °तुर्थो व° । १२ क. ङ. °ष्ठयाऽन्वितः । १३ क. ङ. °कः । आद्याप्याष्ट° । १४ ख. नादिकान्तं । १५ क. ङ. °ता । षड्रनाशि° ।

( मालिनीमन्त्राः )

ट शान्तिश्च शिरो भूयाच्चामुण्डा च त्रिनेत्रगा । ढ प्रियदृष्टिर्द्विनेत्रे च नासागा गुह्यशक्तिनी ॥ ७
न नारायणी द्विकर्णे[2] च दक्षकर्णे त मोहिनी । ज प्रज्ञा[3] वामकर्णस्था वक्त्रे च वज्रिणी स्मृता ८
क करौली दक्षदंष्ट्रा[4][5] वामांसा ख कपालिनी[6] । ग शिवा ऊर्ध्वदंष्ट्रा स्याद् घ घोरा वामदंष्ट्रिका
उ शिखा[7] दन्तविन्यासा ई माया जिह्वया स्मृता । अ स्यान्नागेश्वरी वाचि व कण्ठे शिखिवाहिनी
भ भीषणी दक्षस्कन्धे वायुवेगा म वामके । ड नामा दक्षबाहौ तु ढ वामे च विनायका ॥ ११
प पूर्णिमा द्विहस्ते[9] तु ओकाराद्यङ्गुलीयके । अं दर्शनी वामाङ्गुल्य(?) अः स्यात्संजीवनी करे ॥
ट कपालिनी कपाले शूलदण्डे[10] त दीपनी । त्रिशूले च जयन्ती स्याद्वृद्धिर्यः[11] साधनी स्मृता ॥ १३
जीवे[12] शः परमाख्याद्ध प्राणे च अम्बिका स्मृता । दक्षस्तने छ[13] शरीरा न वामे पूतना स्तने १४
अ स्तनक्षीर आ मोटो[14] लम्बोदर्युदरे च थ । नाभौ संहारिका क्ष स्यान्महाकाली नितम्बे[15](?) म
गुह्ये स कुसुममाला[16] ष शुक्रे शुक्रदेविका । ऊरुद्वये त तारा स्याद् ज्ञाना दक्षजानुनि ॥ १६
वामे स्यादौ क्रिया शक्तिरो गायत्री च जङ्घगा । ओं[17] सावित्री वामजङ्घा दक्षे दो दोहनी पदे
फ फेत्कारी वामपादे नवात्मा मालिनी मनुः । अ श्रीकण्ठः शिखायां स्यादा वक्त्रे स्यादनन्तकः
इ सूक्ष्मो दक्षनेत्रे स्यादी त्रिमूर्तिस्तु वामके । उ दक्षकर्णेऽमरीश ऊ कर्णे[18]ऽर्घांशकोऽपरे ॥ १९
ऋ भावभूतिर्नासाग्रे वामनासा तिथीश ऋ (ॠ) । (*ऌ स्थाणुर्दक्षगण्डे स्याद्वामगण्डे हरश्च ॡ
कटीशो दन्तपङ्क्तावे भूतीशश्चोर्ध्वदन्त ऐ । सद्योजात ओ अधर ऊर्ध्वोष्ठेऽनुग्रहीश औ) ॥ २१
अं क्रूरो घंटकायां[19] स्यादः, महासेनजिह्वया । क क्रोधीशो दक्षस्कन्धे खश्चण्डीशश्च बाहुषु २२
पञ्चान्तकः कूर्परे गो(ग) घ शिखी दक्षकङ्कणे । ङ एकपादश्चाङ्गुल्यो[20] वामस्कन्धे च कूर्मकः ॥ २३
छ एकनेत्रो बाहौ स्याच्चतुर्वक्त्रो ज कूर्परे । (×झ राजसः कङ्कणगो[21] ञ सर्वकामदोऽङ्गुली ॥ २४
ट सोमेशो नितम्बे स्याद्दक्ष ऊरुटं(रौ ठ) लाङ्गली) । ड दारुको दक्षजानौ जङ्घा ढोऽर्धजलेश्वरः
ण उमाकान्तकोऽङ्गुल्यस्त आषाढी नितम्बके । थ दण्डी वाम ऊरौ स्याद् भिदो वामजानुनि ॥
ध मीनो वामजङ्घायां न मेषश्चरणाङ्गुली । प लोहितो दक्षकुक्षौ फ शिखी वामकुक्षिगः ॥ २७
ब गलण्डः पृष्ठवंशे भो(भ) नाभौ च द्विरण्डकः । म महाकालो हृदये य वाणीशस्त्वे[22]वविस्मृतः ॥
र रक्ते स्याद्भुजंगेशो ल पिनाकी च मांसके । व खड्गीशः स्वात्मनि स्याद्बकश्चास्थिनि शः स्मृतः
ष श्वेतश्चैव मज्जायां स भृगुः शुक्रधातुके । प्राणे हो नकुलीशः स्यात्क्ष संवर्तश्च कोषगः ॥
रुद्रशक्तीः प्रपूज्य ह्रीं बीजेनाखिलमाप्नुयात् ॥ ३०

इत्यादिमहापुराणे आग्नेये मालिनीमन्त्रादिन्यासकथनं नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४३९

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. पुस्तकयोर्नास्ति । × धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. पुस्तकयोर्नास्ति ।

१ ख. ग. धः । २ ख. °र्णे न मो° । ३ क. ङ. °ज्ञा रासक° । ४ क. ङ. °रानी दण्डदं° । ५ क. ङ. °ष्ट्रा रामासाक्षादिपा° । ६ च. °नी । साशि° । ७ क. ख. ग. च. °विन्यस्या ई । ८ क. ङ. °ता । आस्येन्ना° । ९ ख. ग. °स्ते रुरुकारी ह्यङ्गु° । १० °ण्डे न दी° । ११ क. ङ. च. °र्यः पावनी । १२ क. ङ. स । १३ क. ङ. च. छ. छ करी° । १४ ख. ग. ङ. च. मोटी । १५ च. °म्ब सः । गु° । १६ क. ख. ग. ङ. °ला अ शु° । १७ ख. ग. ङ. च. ओं । १८ ख. ग. °र्णेऽवामकेऽप° । १९ क. ङ. मुण्डिकायां । च. कण्ठिकायां । २० ख. ग. °ङ्गुले वा° । २१ ख. ग. च. °ञ अज्ञानं वाम° । २२ ख. ग. °स्त्वरिः स्मृ° ।

अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ।

अष्टाष्टकदेव्यः ।

ईश्वर उवाच—

त्रिखण्डीं संप्रवक्ष्यामि ब्रह्मविष्णुमहेश्वरीम् ॥ १
ॐ नमो भगवते रुद्राय नमः । नमश्चामुण्डे नमश्चाऽऽकाशमातॄणां सर्वकामार्थसाधनीनामजरामरीणां सर्वत्राप्रतिहतगतीनां स्वरूपरूपपरिवर्तिनीनां सर्वसत्त्ववशीकरणोत्सादनोन्मूलनसमस्तकर्मप्रवृत्तानां सर्वमातृगुह्यं हृदयं परमसिद्धं परकर्मच्छेदनं परमसिद्धिकरं मातॄणां वचनं शुभम् ॥ २
ब्रह्मखण्डपदे रुद्रैरेकविंशाधिकं शतम् ॥ ३
तद्यथा—ॐ नमश्चामुण्डे ब्रह्माणि, अघोरेऽमोघे[1] वरदे विच्चे स्वाहा । ॐ नमश्चामुण्डे चण्डि, अघोरेऽमोघे वरदे विच्चे[2] स्वाहा । ॐ नमश्चामुण्ड ईशानि अघोरेऽमोघे वरदे विच्चे स्वाहा ॥ ४
यथाक्षरपदानां हि विष्णुखण्डं द्वितीयकम् ॥ ५
ॐ[3] नमश्चामुण्ड ऊर्ध्वकेशि ज्वलितशिखरे विद्युज्जिह्वे तारकाक्षि[4] पिङ्गलभ्रुवे विकृतदंष्ट्रे क्रुद्धे, ॐ मांसशोणितसुरासवप्रिये हस हस, ॐ नृत्य नृत्य, ॐ विजृम्भय विजृम्भय, ॐ मायात्रैलोक्यरूपसहस्रपरिवर्तिनीनामों बन्ध बन्ध, ॐ कुट्ट कुट्ट[5] चिरि चिरि हिरि हिरि भिरि भिरि त्रासनि त्रासनि भ्रामणि भ्रामणि, ॐ द्रावणि द्रावणि क्षोभणि क्षोभणि मारणि मारणि संजीवनि संजीवनि हेरि हेरि गेरि गेरि घेरि घेरि, ॐ सुरि सुरि, ॐ नमो मातृगणाय नमो नमो विच्चे ॥ ६
एकत्रिंशत्पदं शंभोः शतमन्त्रैकसप्ततिः । हे घौं[6] पञ्चप्रणवाद्यन्तां त्रिखण्डीं च जपेद्यजेत् ॥ ७
हे घौं श्रीकुब्जिकाहृदयं पदसंधौ तु योजयेत् । अकुलादित्रिमध्यस्थं कुलादेश्च त्रिमध्यगम् ॥ ८
मध्यमादित्रिमध्यस्थं पिण्डं पादे त्रिमध्यगम्[7] । त्रयार्धमात्रासंयुक्तं[8] प्रणवाद्यं शिखा शिवाम्[9] ॥ ९
ॐ क्ष्रौं शिखाभैरवाय नमः । (+स्खीं स्खीं स्खें स बीजत्र्यक्षरः ) ॥ १०
ह्रां ह्रीं ह्रैं निर्बीजं त्र्यर्णं द्वात्रिंशद्वर्णकं परम्[10] । क्षादयश्च ककारान्ता अकुला च कुलक्रमात्[11] ॥ ११
शशिनी भानुनी चैव पावनी शिव इत्यतः । गान्धारी णश्च पिण्डाक्षी चपला[12] गजजिह्विका[13] ॥
म मृषा भयसारा स्यान्मध्यमा फोऽजराय च । (*कुमारी कालरात्री[14] न संकटा द ध कालिका फ शिवा भव घोरा ण ट बीभत्सा त विद्युता[15] । उ विश्वंभरा शंसिन्या ढ ज्वालामालया तथा) कराली दुर्जया[16] रङ्गी वामा ज्येष्ठा च रौद्रयपि । ख काली क कुलालम्बी अनुलोमा द पिण्डिनी

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. ग. ङ. च. पुस्तकेषु नास्ति । * धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. पुस्तकयोर्नास्ति ।

१ ग. °मोघव° । २ क. ख. ग. ङ. च ऐ । ३ क. ख. ग. च. ऐं । ४ क. ङ. °काक्षः पि° । ५ क. ङ. चिरण्डि चिरण्डि हि° । ६ क. ङ. स्प्रैं । ७ क. ख. ग. ङ. °म् । तयोर्ध° । ८ च. त्रयोऽर्ध° । ९ ख. ग. शिखी । १० क. ङ. च. °म् । काद° । ११ च. °त् । शाक्तिनी मातुनी चैव यावनी सर्वकारुतः । १२ क. ङ. च. °ला नागजि° । १३ ख. °का । मयूखभयमाख्यानमध्य° । १४ ख च. च । १५ ख. ग. °ता । ठविशं भगशिन्याटं ढ° । १६ क. ग. नङ्गा ।

आवेदिनी[1] इ रूपी वै शान्तिमूर्तिः कलाकुला। (*ऋ खड्गिनी[2] उ बलिता लृ कुला लृ तथा यदि
सुभगा (गे)वेदना[3]दिन्या कराली, अं च मध्यमा। अः, [4]अपेतरयाः पीठे पूज्याश्च शक्तयः क्रमात्
+स्खां स्खीं स्खौं महाभैरवाय नमः ॥ १८
अक्षोद्या ह्यृक्षकर्णी च राक्षसी क्षपणक्षया। ) पिङ्गाक्षी चाक्षया क्षेमा ब्रह्माण्यष्टकसंस्थिताः॥१९
इला लीलावती नीला लङ्का लङ्केश्वरी तथा । लालसा विमला माला माहेश्वर्यष्टके स्थिताः ॥
हुताशना विशालाक्षी ह्रूंकारी वडवामुखी । हाहारवा तथा क्रूरा क्रोधा बाला खरानना ॥
कौमार्या देहसंभूताः पूजिताः सर्वसिद्धिदाः । सर्वज्ञा तरला तारा ऋग्वेदा च हयानना ॥ २२
(*सारासारस्वयंग्राहा शाश्वती वैष्णवीकुले । तालुजिह्वा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी ॥
मेघनादा प्रचण्डोग्रा कालकर्णी कलिप्रिया । वाराहीकुलसंभूताः पूजनीया जयार्थिनां ॥ २४
चम्पा चम्पावती चैव प्रचम्पा ज्वलितानना । पिशाची पिचुवक्त्रा च लोलुपा ऐन्द्रीसंभवाः )
पावनी याचनी चैव वामनी दमनी तथा । विन्दुवेला बृहत्कुक्षी विद्युता विश्वरूपिणी ॥ २६
चामुण्डाकुलसंभूता मण्डले पूजिता जये । यमजिह्वा जयन्ती च दुर्जया च यमान्तिका ॥ २७
बिडाली रेवती चैव जया च विजया तथा । महालक्ष्मीकुले जाता अष्टाष्टकमुदाहृतम् ॥ २८

इत्यादिमहापुराण आग्नेयेऽष्टाष्टकदेवीकथनं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४६७

---

अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

---

त्वरितापूजादि ।

ईश्वर उवाच—

ॐ गुह्यकुब्जिके हुं फट्, मम सर्वोपद्रवान्यन्त्रमन्त्रतन्त्रचूर्णप्रयोगादिकं येन कृतं कारितं कुरुते
करिष्यति कारयिष्यति तान्सर्वान्हन हन दंष्ट्राकरालिनि हैं[9] ह्रीं ह्रूं गुह्यकुब्जिकायै स्वाहा
ह्रौम्, ॐ खे वों गुह्यकुब्जिकायै नमः ॥ १
ह्रीं सर्वजनक्षोभणी जनानुकर्षिणी ततः । ॐ खें ख्यां सर्वजनवशंकरी तथा स्याज्जनमोहनी[10] ॥
ॐ ख्यौं सर्वजनस्तम्भनी ऐं खं खां क्षोभणी तथा । ऐं त्रितत्त्वं बीजं श्रेष्ठं कुले पञ्चाक्षरी तथा
फं श्रीं क्षीं श्रीं ह्रीं क्षें वच्छे क्षे क्षे ह्रूं फट्, ह्रीं नमः । ॐ ह्रां क्षे वच्छे क्षे क्षो ह्रीं फट् ॥ ४
नवेयं त्वरिता[प्रोक्ता] पुनर्ज्ञेयाऽर्चिता जये । ह्रौं सिंहायेत्यासनं स्याद्ध्रीं क्षे हृदयमीरितम् ॥५
वच्छेऽथ शिरसे स्वाहा त्वरितायाः शिवः [11]स्मृतः । क्षें ह्रीं शिखायै वौषट्स्याच्चवेत्क्षें कवचाय हुम्
ह्रूं नेत्रत्रयाय वौषड्ढ्रीमन्तं च फडन्तकम् । ह्रींकारी खेचरी चण्डा छेदनी क्षोभणी क्रिया ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ड. पुस्तकयोर्नास्ति । + एतद्द्वयस्य पाठः ख. ग. च. पुस्तकेषु नास्ति । * धनुश्चिह्नान्तर्गतो ग्रन्थः क. ङ. पुस्तकयोर्नास्ति।

---

१ ख. ग. च. °नी ह रू° । २ ख. °नीलवलितात्हत्कुलानन्दयोषिते । सु° । ३ ग. °दवादि° । ४ ख. ग. अद्यवचा पी° । ५ क. ङ. °मारीदे° । ६ क. ङ. तवला नाभा ऋ° । ७ ख. ज. °ना । पद्मा पद्मवती चैव प्रचण्डा ज्व° । ८ ख. °त्रपूर्ण° । ९ क. ङ. फें । १० ग. च. °मोहिनी । ११ क. ङ. च. स्मृतम् ।

पञ्चविंशतिभिः पद्मं ततः पीठमपीठकम् । द्वयं द्वयं रक्षयित्वा उपशोभास्तथाऽष्ट च ॥ ४६
देव्यादिरव्यापकं भद्रं बृहन्मध्ये परं लघु । मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम् ॥ ४७
त्रयोदशपदं शेषं बुद्ध्याधारस्तु मण्डलम् । शतपत्रं षष्ठ्यधिकं बुद्ध्याधारं हरादिषु ॥ ४८

इत्यादिमहापुराण आग्नेये मण्डलविधानकथनं नाम विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

आदितः श्लोकानां समष्ट्यङ्काः—९५६५

---

अथैकविंशत्यधिकत्रिशततमोऽध्यायः ।

---

अघोरास्त्रादिशान्तिकल्पः ।

ईश्वर उवाच—

अस्त्रयागः पुरा कार्यः सर्वकर्मसु सिद्धिदः । मध्ये पूज्यं शिवायास्त्रं वज्रादीन्पूर्वतः क्रमात् ॥ १
पञ्चवक्त्रं दशकरं रणादौ पूजितं जये । (*ग्रहपूजा रविर्मध्ये पूर्वाद्याः सोमकादयः ॥ २
सर्वे एकादशस्थास्तु ग्रहाः स्युर्ग्रहपूजनात् । अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीम् ॥) ३
ग्रहरोगादिशमनीं मारीशत्रुविमर्दिनीम् ) । विनायकोपतापघ्नीमघोरास्त्रं जपेन्नरः ॥ ४
लक्षं ग्रहादिनाशः स्यादुत्पातं तिलहोमतः । दिव्ये लक्षं तदर्धेन व्योमजोत्पातनाशनम् ॥ ५
घृतेन लक्षपातेन उत्पाते भूमिजे हितम् । घृतगुग्गुलुहोमे च सर्वोत्पातादिमर्दनम् ॥ ६
दूर्वाक्षताज्यहोमेन व्याधयोऽथ घृतेन च । सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः ॥ ७
अयुताद्ग्रहदोषघ्नो यवाद्घृतविमिश्रितात् । विनायकार्तिशमनमयुतेन घृतस्य च ॥ ८
भूतवेतालशान्तिस्तु गुग्गुलैरयुतेन च । महावृक्षस्य भङ्गे तु व्यालकङ्के गृहे स्थिते ॥ ९
अरण्यानां प्रवेशे च दूर्वाज्याक्षतहावनात् । उल्कापाते भूमिकम्पे तिलाज्येनाऽऽहुताच्छिवम् १०
+रक्तस्रावे तु वृक्षाणामयुताद्गुग्गुलोः शिवम् । अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे ॥ ११
द्विपदादेर्यदा मारी लक्षार्धाच्च तिलाज्यतः । हस्तिमारीप्रशान्त्यर्थं करिणीदन्तवर्धने ॥ १२
हस्तिन्यां मदहृष्टौ च अयुताच्छान्तिरिष्यते । अकाले गर्भपाते तु जातं यत्र विनश्यति ॥ १३
विकृता यत्र जायन्ते यत्राकालेऽयुतं हुनेत् । तिलाज्यलक्षहोमस्तु उत्तमा(मः)सिद्धिसाधने ॥ १४
मध्यमायां तदर्धेन तत्पादादधमासु च । यथा जपस्तथा होमः सङ्ग्रामे विजयो भवेत् ॥ १५
अघोरास्त्रं जपेद्यस्य ध्यात्वा पञ्चास्यमूर्जितम् ॥ १६

इत्यादिमहापुराण आग्नेयेऽघोरास्त्रादिशान्तिविधानकथनं नामैकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९५८१

---

* धनुश्चिह्नान्तर्गतग्रन्थश्च. पुस्तके नास्ति । + इदमर्धं नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ङ पीठं । २ क. ङ °णे मध्यच° । ३ क. ङ. च. शतत्रयं । ४ क. ङ. °स्त्रयोगः । ५ क. च. जयेत् । ६ क. ङ. दिव्य । ७ क. ङ. ग्गुलेनायु° । ८ क. ङ. °लकाके गृ° । ९ क. ङ. प्रदेशे । १० क. ङ. °र्वाज्यघृतहोमवान् । उ° । ११ क. ङ. °लाज्यहवनाच्छि° । १२ क. ङ. यजेत् । १३ क. ङ. °लाघृल° । १४ ख. ग. °न उत्पा° ।

अथ द्वाविंशत्यधिकत्रिशततमोऽध्यायः ।

---

## पाशुपतशान्तिः ।

ईश्वर उवाच—

वक्ष्ये पाशुपतास्त्रेण शान्तिजापादि पूर्वतः । पादतः पूर्वनाशो हि फडन्तं चाऽऽपदादिनुत् ॥ १
ॐ नमो भगवते महापाशुपतायातुलबलवीर्यपराक्रमाय त्रिपञ्चनयनाय[1] नानारूपाय नानाप्रहरणोद्यताय सर्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तनरताय सर्वसिद्धिप्रदाय भक्तानुकम्पिनेऽसंख्यवक्त्रभुजपादाय तस्मिन्सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे (*पापभञ्जनाय सूर्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यमदण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्वरोगविद्रावणाय ग्रहनिग्रहकारिणे) दुष्टनागक्षयकारिणे, ॐ कृष्णपिङ्गलाय फट्, क्रूराय फट्, वज्रहस्ताय फट्, शक्तये फट्, दण्डाय फट्, (+यमाय फट्, खड्गाय फट्, नैर्ऋताय फट्, वरुणाय फट्, †वज्राय फट्, पाशाय फट्, ध्वजाय फट्, अङ्कुशाय फट्, गदायै फट्, कुबेराय फट्, त्रिशूलाय फट्, ) मुद्गराय फट्, चक्राय फट्, पद्माय फट्, नागास्त्राय फट्, ईशानाय फट्, खेटकास्त्राय फट्, मुण्डाय फट्, मुण्डास्त्राय फट्, कङ्कालास्त्राय फट्, पिच्छिकास्त्राय फट्, क्षुरिकास्त्राय फट्, ब्रह्मास्त्राय फट्, शक्त्यस्त्राय फट्, गणास्त्राय फट्, सिद्धास्त्राय फट्, पिलिपिच्छास्त्राय फट्, गन्धर्वास्त्राय फट्, पूर्वास्त्राय फट्, दक्षिणास्त्राय फट्, वामास्त्राय फट्, पश्चिमास्त्राय फट्, मन्त्रास्त्राय फट्, शाकिन्यस्त्राय फट्, योगिन्यस्त्राय फट्, दण्डास्त्राय फट्, नमोस्त्राय फट्, शिवास्त्राय फट्, ईशानास्त्राय फट्, महादण्डास्त्राय फट्, नागास्त्राय फट्, पुरुषास्त्राय फट्, अघोरास्त्राय फट्, वामदेवास्त्राय फट्, सद्योजातास्त्राय फट्, हृदयास्त्राय फट्, (×महास्त्राय फट्, गरुडास्त्राय फट्, राक्षसास्त्राय फट्, दानवास्त्राय फट्, क्षौं नरसिंहास्त्राय फट्, त्वष्ट्रस्त्राय फट्, सर्वास्त्राय फट्[2], ) =लः फट्, नः फट्, ($भः फट्, पः फट्, मः फट्, स्रा फट्, है फट्, भूः फट्, भुवः फट्, स्वः फट्, महः फट्, जनः फट्, तपः फट्, सत्यं फट्, सर्वलोक फट्, सर्वपाताल फट्, सर्वसत्त्व फट्, सर्वप्राण फट्, सर्वनाडी फट्, सर्वकारण फट्, सर्वदेव फट्, ह्रीं फट्, श्रीं फट्, ह्रूं फट्, [3]स्तूं फट्, आं फट्, लां फट्, वैराग्याय फट्¶ ) मायास्त्राय फट्, कामास्त्राय फट्, क्षेत्रपालास्त्राय फट्[4], हुंकारास्त्राय फट्, भास्करास्त्राय फट्, चन्द्रास्त्राय फट्, विघ्नेश्वरास्त्राय फट्, गौः, गां फट्, स्रौं स्रौं फट्, ह्रौं ह्रौं[5] फट्, भ्रामय भ्रामय फट्, संतापय संतापय फट्, छादय च्छादय फट्, उन्मूलयोन्मूलय फट्, त्रासय त्रासय फट्, संजीवय संजीवय फट्, विद्रावय विद्रावय फट्, सर्वदुरितं नाशय नाशय फट्, ।

---

*धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. पुस्तकयोर्नास्ति । +धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति । † इदं पदद्वयं नास्ति ग. पुस्तके । × धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके नास्ति । = एतदादि भुवः फडित्यन्तग्रन्थस्थाने क. ङ. पुस्तकयोरेवं ग्रन्थो वर्तते—"नः फट्, या फट्, मः फट्, भां फट्, प्रं फट्" इति । $ धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति । ¶ एतत्पुरतोऽधिकं ख. पुस्तके तद्यथा—"नः फट्, यः फट्" इति ।

---

१ क. ङ. त्रिनयनाय । २ छ. ट्, नः फट्, वः फट्, प. । ३ छ. स्तुं । ४ ख. ट्, । ॐ कां । ५ छ. ह्रीं ।

सकृदावर्तनादेव सर्वविघ्नान्विनाशयेत् । शतावर्तेन[२] चोत्पातान्रणादौ विजयो भवेत् ॥ २
घृतगुग्गुलुहोमाच्च असाध्यानपि साधयेत् । पठनात्सर्वशान्तिः स्या[३]दाशु पाशुपतस्य च ॥ ३

इत्यादिमहापुराण आग्नेये पाशुपतशान्तिकथनं नाम द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९५८४

---

अथ त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ।

---

षडङ्गान्यघोरास्त्राणि ।

ईश्वर उवाच—

ओं हूंरूं स इति मन्त्रेण मृत्युरोगादि शाम्यति । लक्षाहुतिभिर्दूर्वाभिः शान्तिं पुष्टिं प्रसाधयेत् १
अथ वा प्रणवेनैव मायया वा षडानन । दिव्यान्तरिक्षभौमानां शान्तिरुत्पातवृक्षके ॥ २
ॐ नमो भगवति गङ्गे कालि कालि महाकालि महाकालि मांसशोणितभोजने रक्तकृष्णमुखि
वशमानय मानुषान् स्वाहा ॥ ३
ॐ लक्षं जप्त्वा दशांशेन हुत्वा स्यात्सर्वकर्मकृत् । वशं नयति शक्रादीन्मानुषेष्वेषु का कथा॥
अन्तर्धानकरी विद्या मोहनी जम्भनी तथा । वशं नयति शत्रूणां शत्रुबुद्धिप्रमोहिनी ॥ ५
कामधेनुरियं विद्या सप्तधा परिकीर्तिता । मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम् ॥ ६
महाभयेषु सर्वेषु स्मर्तव्यं हरपूजितम् । लक्षं जप्त्वा तिलैर्होमः सिध्येदुद्धारक शृणु ॥ ७
ॐ हले शूले एहि ब्रह्मसत्येन (*विष्णुसत्येन रुद्रसत्येन ) रक्ष मां वाचेश्वराय स्वाहा ॥ ८
दुर्गात्तारयते यस्मात्तेन दुर्गा शिवा मता ॥ ९
ॐ हीं चण्डकपालिनि दन्तान्किटि किट क्षिट क्षिट गुह्ये प्राम् ॥ १०
अनेन मन्त्रराजेन क्षालयित्वा तु तण्डुलान् । त्रिंशद्वाराणि जप्तानि तच्चौरेपु प्रदापयेत् ॥ ११
दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ १२
ॐ ज्वलल्लोचन कपिलजटाभारभास्वर विद्रावण त्रैलोक्य डामर डामर दर दरे[११] भ्रम भ्रमाऽऽ-
कट्टाऽऽकट्ट[१२] तोटय तोटय मोटय मोटय[१३] दह दह पच पच, एवं सिद्धिरुद्रो ज्ञापयति यदि
ग्रहोपगतः स्वर्गलोकं देवलोकं वाऽऽरामविहाराचलं तथाऽपि तमावर्तयिष्यामि बलिं गृह्ण गृह्ण
ददामि ते स्वाहेति ॥ १३
क्षेत्रपालबलिं दत्त्वा ग्रहो न्यासा[१४]द्रुदन्व्रजेत् । शत्रवो नाशमायान्ति रणे वै[१५]रगणक्षयः ॥ १४
हंसबीजं तु विन्यस्य विषं तु त्रिविधं हरेत् । अगरुं चन्दनं कुष्ठं कुङ्कुमं नागकेसरम् ॥ १५

---

* धनुश्चिह्नान्तर्गतं नास्ति क. ङ. पुस्तकयोः । विष्णुरुद्रसत्येनेति ख. ग. पुस्तकयोः ।

---

१ ख. ग. सहस्राव° । २ ख. ङ. °र्तें महोत्पा° । ३ ख. ङ. स्यादक्षपा° । ४ क. ङ. ओं सः, इ° । ग ओं हं हूरूं स इ° । च. ओं जुं स इ° । ५ छ. हूरूं हं स । ६ ग. °त्युलोकादि । ७ क. ङ. °षाय स्वाहा । ८ क. ङ. हरिपूजनम् । ख. हरपूजनम् । ९ क. ङ. च. चण्डिक° । १० छ. न्किटि किटि क्षिटि क्षिटि गुह्ये फट् , हरीम् । ११ क. ङ. °र भ्राम भ्रामाऽऽ° । १२ क. ङ. °ट्ट त्रोटय त्रोटय मो° । १३ क. ङ. °य हन हन प° । १४ ख. °साद्रुदं व्रजे° १५ क. ङ. वै सग° । ख. वैरिम° ।

( षडङ्गान्यघोरास्त्राणि )

नखं वै देवदारुं च समं कृत्वाऽथ धूपकः । माक्षिकेण समायुक्तो दे[1]वैवस्त्रादिधूपनात् ॥ १६
विवादे मोहने स्त्रीणां मण्डने कलहे शुभः । कन्यायां वरणे भाग्ये मायामन्त्रेण मन्त्रितः ॥ १७
ह्रीं रोचना नागपुष्पाणि कुङ्कुमं च मनःशिला । ललाटे तिलकं कृत्वा यं पश्येत्स वशी भवेत्
शतावर्यास्तु चूर्णं तु दुग्धपीतं च पु[2]त्रकृत् । नागकेशरचूर्णं तु घृ[3]तपक्वं तु पुत्रकृत् ॥ १९
पालाशबीजपानेन लभते पुत्रकं तथा ॥ २०
ओमुत्तिष्ठ चामुण्डे जम्भय जम्भय मोहय मोहयामुकं वशमानय वशमानय स्वाहा ॥ २१
षड्विंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् । कृ[4]त्वोन्मत्तरसेनैव नामाऽऽलिख्यार्कपत्रके २२
मूत्रोत्सर्गं ततः कृत्वा जपेत्तामानयेत्स्त्रियम् ॥ २३
ॐ क्षुं सः वषट् ॥ २४
महामृत्युंजयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् ॥ २५
[5]ॐ हं सः, ह्रूं, [6]हूं मः, हः, सौं स्कैः ॥ २६
मृतसंजीविनी विद्या अष्टार्णा जयकृद्रणे । मन्त्रा ईशानमुख्याश्च धर्मकामादिदायकाः ॥ २७
ईशानः स[7]र्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्मणश्चाधिपतिर्ब्रह्म शिवो मेऽस्तु सदाशिवः ॥ २८
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २९
ओमघोरेभ्योऽथ घोरेभ्यो घोरतरेभ्यस्तु सर्वतः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः
ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः । सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ३१
ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः
पञ्चब्रह्माङ्गषट्कं च वक्ष्येऽहं भुक्तिमुक्तिदम् ॥ ३३
ॐ नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसंभवाय [8]सर्वकराय कुरु कुरु *सद्य सद्य भव भव भवोद्भव वामदेव सर्वकार्यकर पापप्रशमन सदाशिव प्रसन्न नमोऽस्तु ते स्वाहा ॥ ३४
हृदयं सर्वार्थदं तु सप्तत्यक्षरसंयुतम् ॥ ३५
ॐ शिव शिवाय नमः शिरः, ॐ शिव हृदये ज्वालिनि स्वाहा शिखा, ॐ शिवात्मक महातेजः सर्वज्ञ प्रभु [9]संवर्तय महाघोरकवच पिङ्गल†, नमः । महाकवच शिवाज्ञया हृदयं बन्ध बन्[10]धं (+पूर्णय पूर्णय चूर्णय चूर्णय सूक्ष्मासूक्ष्मवज्रधर वज्रपा[11]शधर वज्रशरीर [12]मच्छरीरमनुप्रविश्य सर्वदुष्टान्स्तम्भय स्तम्भय [13]हूंरूम् ॥ ३६

---

* सद्य सद्येति नास्ति क ङ. पुस्तकयोः । † एतत्परतः—"आयाहि पिङ्गलः" इत्यधिकं क. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. च. पुस्तकेषु नास्ति ।

---

१ क. ख. देहव° । २ क ङ. पुत्रछत् । ३ क. ङ घृतपीतं । ४ क. ङ. °त्वोन्मन्त्रर° । ५ ख. ग ओं ह्रूं सः सौं खौः, मृं । च. ओं स हू ह क्षः सौ खौः, मृं । ६ छ. हुं सः, हः, । ७ क. ङ. °र्वमन्त्राणामी° । ८ क. ङ. सर्वकाराय । ख. ग. सर्वशंकराय । ९ क. ङ. व्यावर्तय । ख. आवर्तय । १० क. ङ. च. °न्ध भक्ट्रप्रवट्र कर्तुं च° । छ. °न्ध घूर्णय घूर्णय चू° । ११ छ. °शधनुर्वज्राशनिव° । १२ छ. मम शरी° । १३ छ. हुम् ।

अक्षराणां तु कवचं शतं पञ्चाक्षराधिकम् ॥ १७
ओमोजसे नेत्रम्, ॐ पुस्फुर पुस्फुर तनुरूप तनुरूप) चट चट प्रचट प्रचट कट कट वम वम
घातय घातय हूं फट्, अघोरास्त्रम् ॥ १८

इत्यादिमहापुराण आग्नेये षडङ्गाघोरास्त्रकथनं नाम त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९६२१

अथ चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ।

## रुद्रशान्तिः ।

ईश्वर उवाच—

शिवशान्तिं प्रवक्ष्यामि कल्पाघोरप्रपूर्वकम् । सप्तकोट्यधिपो घोरा(रो) ब्रह्महत्याद्यघार्दनः ॥ १
उत्तमाधमसिद्धीनामालयोऽखिलरोगनुत् । दिव्यान्तरी(रि)क्षभौमानामुत्पातानां विमर्दनः ॥ २
विषग्रहपिशाचानां ग्रसनः सर्वकामकृत् । प्रायश्चित्तमघो(घौ)घार्तौ दौर्भाग्यार्तिविनाशनम् ॥ ३
एकवीरं तु विन्यस्य ध्येयः पञ्चमुखः सदा । शान्तिके पौष्टिके शुक्लो रक्तो वश्येऽथ पीतकः ॥४
स्तम्भने धूम्र उच्चाटमारणे कृष्णवर्णकः । कर्षणे कपिलो मोहे द्वात्रिंशद्वर्णमर्चयेत् ॥ ५
त्रिंशल्लक्षं जपेन्मन्त्रं होमं कुर्याद्दशांशतः । गुग्गुलघृतयुक्तेन सिद्ध्येत् सिद्धार्थसर्वकृत् ॥ ६
अघोरान्नापरो मन्त्रो विद्यते भुक्तिमुक्तिकृत् । अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ७
अघोरास्त्रमघोरस्तु द्वाविमौ मन्त्रराजकौ । जपहोमार्चनाद्युद्धे शत्रुसैन्यं विमर्दयेत् ॥ ८
रुद्रशान्तिं प्रवक्ष्यामि शिवां सर्वार्थसाधनीम् । पुत्रार्थं ग्रहनाशार्थं विषव्याधिविनष्टये ॥ ९
दुर्भिक्षमारीशान्त्यर्थं दुःस्वप्नहरणाय च । बलादिराज्यप्राप्त्यर्थं रिपूणां नाशनाय च ॥ १०
अकाले फलिते वृक्षे सर्वग्रहविमर्दने । पूजने तु नमस्कारः स्वाहान्ते हवनं तथा ॥ ११
आप्यायने वषट्कारं पुष्टौ वौषण्नियोजयेत् । चकारद्वितयस्थाने जातियोगं तु कारयेत् ॥ १२
ॐ रुद्राय ठ, ॐ वृषभाय नमोऽविमुक्तायासंभवाय पुरुषाय पञ्चपूज्याय ईशपुत्रे पौरुषे पञ्च-
पञ्चोत्तरे विश्वरूपाय करालाय विकृतरूपाय, (+अविकृतरूपाय) ॥ १३
निकृतौ चापरे काले अप्सु माया च नैर्ऋते ॥ १४
एकपिङ्गलाय श्वेतपिङ्गलाय कृष्णपिङ्गलाय नमः ॥ १५
मधुपिङ्गलाय नियतावनन्तायाऽऽर्द्राय शुष्काय पयोगणाय कालतत्त्वे करालाय विकरालाय द्वौ
मायातत्त्वे सहस्रशीर्षाय सहस्रवक्त्राय *सहस्रकरचरणाय सहस्रलिङ्गाय ॥ १६
विद्यातत्त्वे सहस्राक्षाद्विन्यसेद्दक्षिणे दले ॥ १७

+ धनुश्चिह्नान्तर्गतं नास्ति क. ख. ग. ङ. पुस्तकेषु । * इदं पदं नास्ति ख ग. पुस्तकयोः ।

१ ख. ग. अरणार्णक॰ । २ क ङ. च. हुम् । ३ क. ङ. गुग्गुलं घृतसयुक्तं सि॰ । ४ छ. सिद्धोऽसिद्धोऽर्थ॰ । ५ क. ङ. ॰ज्यसिद्ध्यर्थे । ६ क. ङ. ॰हान्तो हवने मनुः । आ० । छ. हान्तो हवने तथा । आ० । ७ ख. ॰त् । ओंका॰ । क. ङ. ॰त् । दका॰ । ८ ग. यातियोगं । ९ क. ङ. ॰य नमः, ॐ । छ. ॰य च चे ॐ । १० क. ङ. ॰क्ताय सं॰ । ११ क. ङ ॰य च सूर्याय । छ. ॰य च पू॰ । १२ ख. ईशपत्रे । छ. ईशानाय । १३ छ. पौरुषाय । १४ छ. ॰ञ्च चोत्त॰ । १५ क. ङ. च. नियतौ । १६ क. ङ. हृष्टपिङ्गलाय । १७ छ. ॰मः । मधुपिङ्गलाय नमः, म॰ । १८ ख. ग. निपातिताय । १९ क. ङ. सहस्रकिरणाय ।

एकजटाय द्विजटाय त्रिजटाय स्वाहाकाराय स्वधाकाराय वषट्काराय षड्रुद्राय ॥ १८
ईशतत्त्वे तु वह्निपत्रे स्थिता गुह ॥ १९
[1]भूपतये[2] *पशुपतये उमापतये कालाधिपतये ॥ २०
सदाशिवाख्यतत्त्वे षट् पूज्याः पूर्वदले स्थिताः ॥ २१
[3]उमायैकरूपधारिणि, [4]ॐ कुरु कुरु रुहिणि रुहिणि रुद्रोऽसि देवानां देव देव विशाख हन हन
दह दह पच पच मथ मथे तुरु तुरु, अरु, अरु[6] मुरु मुरु रुद्रशान्तिमनुस्मर कृष्णपिङ्गल[7], अका-
लपिशाचाधिपतिविश्वेश्वराय नमः ॥ २२
शिवतत्त्वे कर्णिकायां पूज्यौ ह्युमामहेश्वरौ ॥ २३
ॐ व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवायानन्ताय[8] +नाथायानाश्रिताय शिवाय
शिवतत्त्वे नव पदानि व्योमव्याप्यभिधास्य हि ॥ २४
शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहाराय ×नमः । ॐ नमः शिवाय [10]सर्वप्रभवे
शिवाय, ईशानमूर्धाय तत्पु[11]रु[12]षाय पञ्चवक्त्राय ॥ २५
नवपदं पूर्वदले सदाख्ये पूजयेद्गुह ॥ २६
अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तये । [13]ॐ नमो नमः । गुह्यातिगुह्याय गोप्त्रेऽनिधनाय
सर्वयोगाधिकृताय [14]ज्योतीरूपायाग्नि[15]पत्रे हीशतत्त्वे [16]विद्यातत्त्वे [17]तु गम्यते परमेश्वराय[18], अचेतना-
चेतन [19]व्योमन [20]व्यापिन(न) अरूपिन् । [21]प्रमथ तेजस्तेजः ॥ २७
मायातत्त्वे नैर्ऋते तु कालतत्त्वेऽथ वारुणे ॥ २८
[22]ॐ धृ धृं नाना वां वाम[23]निधन निधनोद्भव शिव सर्व परमात्मन् । महादेव सद्भावेश्वर महा-
तेजयोगाधिपते मुञ्च मुञ्च [24]प्रथम प्रथम, ॐ सर्व सर्व, ॐ भव भव, ॐ भवोद्भव सर्वभूतसुखप्रद
वायुपत्रेऽथ नियतौ पुरुषे चोत्तरे नव ॥ ३०
सर्वसांनिध्यकर ब्रह्मविष्णुरुद्र[25]परानर्चितास्तुत[26] स्तुत साक्षिण साक्षिण [27]तुरु तुरु पतङ्ग पतङ्ग
†पिङ्ग पिङ्ग =ज्ञान ज्ञान शब्द शब्द सूक्ष्म सूक्ष्म शिव शिव [28]सर्वप्रद सर्वप्रद, ॐ नमः
शिवाय, ॐ नमो नमः शिवाय, ॐ नमो नमः ॥ ३१
ईशाने प्राकृते तत्त्वे पूजयेज्जुहुयाज्जपेत् । ग्रहरो[29]गादिमायार्तिशमनी सर्वसिद्धिकृत् ॥ ३२

इत्यादिमहापुराण आग्नेये रुद्रशान्तिविधानकथनं नाम चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९६५३

---

* इदं पदं नास्ति क. ङ. च. पुस्तकेषु । + इदं पदं नास्ति ख. ग पुस्तकयोः । × इदं पदं नास्ति क. ङ. च. पुस्तकेषु । † इदं पदद्वयं नास्ति ख. ग. च. पुस्तकेषु । = इदं पदद्वय नास्ति क. ङ. पुस्तकयोः ।

---

१ क. ङ भूतपतये । २ ख. °ये भूतपतये महाभूतपतये प । ३ छ. यै कुरू° । ४ ख. ग. च. ॐ तुरु तुरु । ५ ख. ग. °थ तुर तुर, अ° । ६ ख. ग. रु स्वरु स्वरु रु° । ७ क ख. ङ. च °ल का° । ८ छ. °न्तायाना° । ९ ख. ग. °न तव । १० ख. ग. °वैभावाशि° । ११ ख. ग. °रुषव° । १२ छ. °षादिप° । १३ ख. ग ॐ नमः । १४ क. ङ. ज्योतिरू° । १५ छ. °त्रे हौमत° । १६ छ. °द्यात्वे द्वे याम्यने प° । १७ ख. ग. तु यास्यगेप° । १८ छ. °य चे° । १९ क. ङ. व्योमन् । २० क. ङ. व्यापिन् । छ. व्यापिने । २१ छ. प्रथम । २२ क. ङ. ध ओं नाना ओं वां । २३ क. ङ. छ. °निधान । २४ छ. प्रमथ प्रमथ, ॐ । २५ ख. ग. °पदान° । २६ ख. ग. °त सा° । २७ ख. ग. तरु । २८ क. ङ. सर्वद । ख. ग. पद । २९ क. ङ. च. °गारिमा° ।

अथ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ।

अंशकादिः ।

ईश्वर उवाच—
रुद्राक्षकटकं धार्यं विषमं सुसमं दृढम् । एकत्रिपञ्चवदनं यथालाभं तु धारयेत् ॥ १
द्विचतुःषण्मुखं शस्तमव्रणं तीव्रकण्टकम् । दक्षबाहौ शिखादौ च धारयेच्चतुराननम् ॥ २
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत्।(*हैमी वा मुद्रिका धार्या शिवमन्त्रेण चाऽऽर्च्य तु
शिवः शिखा तथा ज्योतिः सावित्रश्चेति गोचराः)। गोचरं तु कुलं ज्ञेयं तेन लक्ष्यस्तु दीक्षितः ४
प्राजापत्यो महीपालः कापोतो ग्रन्थिकः शिवे । कुटिकाश्चैव वेतालाः पद्महंसाः शिखाकुले ॥ ५
धृतराष्ट्रा बकाः काका गोपाला ज्योतिसंज्ञके । कुटिका साठराश्चैव गुटिका दण्डिनोऽपरे ॥ ६
सावित्री गोचरे चैवमेकैकस्तु चतुर्विधः । सिद्धाद्यंशकमाख्यास्ये येन मन्त्रः सुसिद्धिदः ॥ ७
भूमौ तु मातृका लेख्याः कूटयन्त्रविवर्जिताः । मन्त्राक्षराणि विश्लिष्य अनुस्वारं नयेत्पृथक् ॥८
साधकस्य तु या संज्ञा तस्या विश्लेषणं चरेत् । मन्त्रस्याऽऽदौ तथा चान्ते साधकार्णानि योजयेत्
सिद्धः साध्यः सुसिद्धोऽरिः संज्ञातो गणयेत्क्रमात् । मन्त्रस्याऽऽदौ तथा चान्ते सिद्धिदः
स्याच्छतांशतः ॥ १०
सिद्धादिश्चान्तसिद्धिश्च तत्क्षणादेव सिध्यति । सुसिद्धादिः सुसिद्धान्तः सिद्धवत्परिकल्पयेत् ॥
अरिमादौ तथाऽन्ते च दूरतः परिवर्जयेत् । सिद्धः सुसिद्धश्चैकार्थे अरिः साध्यस्तथैव च ॥ १२
आदौ सिद्धः स्थितो मन्त्रस्तदन्ते तद्वदेव हि । मध्ये रिपुसहस्राणि न दोषाय भवन्ति हि ॥१३
मायाप्रसादप्रणवेनांशकाख्यातमन्त्रके । ब्रह्मांशको ब्रह्मविद्या विष्ण्वंशो वैष्णवः स्मृतः ॥ १४
रुद्रांशको बली वीर इन्द्रांशश्चेश्वरप्रियः । नागांशो नागस्तब्धाक्षो यक्षांशो भूषणप्रियः ॥ १५
गन्धर्वांशोऽतिगीतादि भीमांशो राक्षसांशकः । दैत्यांशः स्याद्युद्धकृच्छ्रीमानी विद्याधरांशकः १६
पिशाचांशो मलाक्रान्तो मन्त्रं दद्यान्निरीक्ष्य च । मन्त्र एकात्फडन्तः स्याद्विद्या पञ्चाशतावधि॥
बाला विंशाक्षरान्ता च रुद्रा द्वाविंशगायुधा । तत ऊर्ध्वं तु ये मन्त्रा वृद्धा यावच्छतत्रयम्॥१८
अकारादिहकारान्ताः क्रमात्पक्षौ सितासितौ । अनुस्वारविसर्गेण विना चैव स्वरा दश ॥ १९
ह्रस्वाः शुक्ला दीर्घाः श्यामास्तिथयः प्रतिपन्मुखाः। उदिते शान्तिकादीनि भ्रमिते वश्यकादिकम्
भ्रामिते संध्यया द्वेषोच्चाटने स्तम्भनेऽस्तकम् । इडावाहे शान्तिकाद्यं पिङ्गले कर्षणादिकम् ॥
मारणोच्चाटनादीनि विषुवे पञ्चधा पृथक् । अधरस्य गृहे पृथ्वी ऊर्ध्वं तेजोऽन्तरा द्रवः ॥ २२

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थानेऽयं पाठो दृश्यते क. ङ. पुस्तकयोः—हैमी धार्योऽसिमन्त्रेण वाच्यं तु शिरसः शिखा । तथा ज्योतिसमावित्रः सावित्रश्चेति गोचरा इति ।

---

१ क. ङ. °येदनुवासरम् । २ क. ङ. शिवाकु° । ३ छ. सागरश्चै° । ४ ख ग. °ण्डिनौ प° । ५ छ. °टष-ण्डवि° । ६ छ. याजयेत् । ७ ख. ग. °द्धः स्वसि° । ८ क. ङ. °देद्धहि: । म° । ९ क. ङ. °नाङ्कस्याङ्कम° । १० क. ङ. विष्ण्वंशो । ११ छ. °को भवेद्वीर । १२ क ङ च. प्रती । १३ क. ङ नागाङ्गो । १४ क. ङ. °गस्तद्रक्षो । १५ क. ङ. °क्षाङ्गो भू° । १६ क. ङ. च. च रन्ध्राद्वात्रिंशतायु° । ख. च. च वर्णा द्वा° । १७ क. ङ. वशका° । १८ ख. ग. भ्रासिते । १९ क. ङ. मध्यया ।

रन्ध्रपार्श्वे बहिर्वायुः सर्वं व्याप्य महेश्वरः । स्तम्भनं पार्थिवे शान्तिर्जले वश्यादि तेजसे ॥
वायौ स्याक्रमणं शून्ये पुण्यं कालं समभ्यसेत् ॥ २१

इत्यादिमहापुराण आग्नेयेंऽशकादिकथनं नाम पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९६७६

---

अथ षड्विंशत्यधिकत्रिशततमोऽध्यायः ।

---

## गौर्यादिपूजा ।

ईश्वर उवाच—

सौभाग्यादेरुमापूजां वक्ष्येऽहं भुक्तिमुक्तिदाम् । मन्त्रध्यानं मण्डलं च मुद्रां होमादिसाधनम् ॥१
चित्रभानुं शिवं कालं महाशक्तिसमन्वितम् । इडाद्यं परतोद्धृत्य सदेवं सविकारणम् ॥ २
द्वितीयं द्वारकाक्रान्तं गौरीगतिपदान्वितम् । चतुर्थ्यन्तं प्रकर्तव्यं गौर्या वै मूलवाचकम् ॥ ३
ॐ ह्रीं सः शौं*गौर्यै नमः । ४
तत्रार्णत्रितयेनैव जातियुक्तं षडङ्गकम् । आसनं प्रणवेनैव मूर्तिं वै हृदयेन तु ॥ ५
ऊहकं च तथा कालं शिवबीजं समुद्धरेत् । प्राणं दीर्घस्वराक्रान्तं षडङ्गं जातिसंयुतम् ॥ ६
आसनं प्रणवेनात्र मूर्तिन्यासं हृदाऽऽचरेत् । यामलं कथितं वत्स एकवीरं वदाम्यथ ॥ ७
व्यापकं सृष्टिसंयुक्तं वह्निमायाकृशानुभिः । शिवशक्तिमयं बीजं हृदयादिविवर्जितम् ॥ ८
गौरीं यजेद्धेमरूप्यां काष्ठजां शैलजादिकाम् । पञ्चपिण्डां तथाऽव्यक्तां कोणे मध्ये तु पञ्चमम् ॥
ललिता सुभगा गौरी क्षोभनी(णी) चाग्नितः क्रमात् । वामा ज्येष्ठा क्रिया ज्ञाना वृत्ते पूर्वादितो यजेत् ॥ १०
सपीठे वामभागे तु शिवस्याव्यक्तरूपकम् । व्यक्ता द्विनेत्रा त्र्यक्षा वा शुद्धा वा शंकरान्विता ॥
पीठपद्मद्वयस्था वा द्विभुजा वा चतुर्भुजा । सिंहस्था वा वृकस्था वा अष्टाष्टादशसत्करा ॥ १२
स्रगक्षसूत्रकलिकाँ गलकोत्पलपिण्डिका । शरं धनुर्वा सव्येन पाणिनाऽन्यतमं महत् ॥ १३
वामेन पुस्तताम्बूलदण्डाभयकमण्डलुम् । गणेशं दर्पणेष्वासान्दद्यादेकैकशः क्रमात् ॥ १४
व्यक्ताव्यक्ताऽथ वा कार्या पद्ममुद्रा स्मृताऽऽसने । लिङ्गमुद्रा शिवस्योक्ता +मुद्रा चाऽऽवाहनी द्वयोः
शक्तिमुद्रा तु योन्याख्या चतुरस्रं तु मण्डलम् । चतुर्हस्तं त्रिपत्राब्जं मध्यकोष्ठचतुष्टये ॥ १६
त्र्यस्रार्धे चार्धचन्द्रं तु द्विपदं द्विगुणं क्रमात् । द्विपदं द्वारकण्ठं तु द्विगुणादुपकण्ठतः ॥ १७
द्वारत्रयं त्रयं दिक्षु अथ वा भद्रके यजेत् । स्थण्डिले वाऽथ संस्थाप्य पञ्चगव्यामृतादिना ॥ १८
रक्तपुष्पाणि देयानि पूजयित्वा मुदङ्मुखः । शतं हुत्वा घृताद्यं च पूर्णादः सर्वसिद्धिभाक् ॥
बलिं दत्त्वा कुमारीश्च तिस्रो वा चाष्ट भोजयेत् । नैवेद्यं शिवभक्तेषु दद्यान्न स्वयमाचरेत् ॥२०

---

* इदं पदं नास्ति क. ङ. च. पुस्तकेषु । + " मुद्रयाऽऽवाहनं तयोः " इत्यपि क्वचित्पाठः ।

---

१ छ. °रीप्रीति° । २ छ. °ङ्गुलम् । ३ क. ख. ग. ङ. °र्घसुरा° । ४ क. ङ. जातसंयुगम् । ५ ख. ग. कांस्यजां । क. ङ. कोष्ठजां । ६ ख. ग. °यस्तारा द्वि° । ७ क. ख. ङ. °का शलाको° । ८ क. ङ. °द्वा स्थिताऽऽ° ९ ख. °ष्टयम् । त्र्य° । १० ख. ग. स्त्रियो ।

कन्यार्थी लभते कन्यामपुत्रः पुत्रमाप्नुयात् । दुर्भगा चैव सौभाग्यं राजा राज्यं जयं रणे ॥ २०
अष्टलक्षैश्च वाक्सिद्धिर्देवाद्या वशमाप्नुयुः । अनिवेद्य न चाश्नीयाद्वामहस्तेन चार्चयेत् ॥ २१
अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः । मृत्युंजयार्चनं वक्ष्ये पूजयेत्कलशोदरे ॥ २२
हूयमानं च प्रणवो मूर्तिरौजूंस ईदृशम् । मूलं च वौषडन्तेन कुम्भमुद्रां प्रदर्शयेत् ॥ २३
होमयेत्क्षीरदूर्वाज्यममृतां च पुनर्नवाम् । पायसं च पुरोडाशमयुतं तु जपेन्मनुम् ॥ २४
चतुर्मुखं चतुर्बाहुं द्वाभ्यां च कलशं दधत् । वरदाभयकं द्वाभ्यां स्नायाद्वै कुम्भमुद्रया ॥ २५
आरोग्यैश्वर्यदीर्घायुरौषधं मन्त्रितं शुभम् । अपमृत्युहरो ध्यातः पूजितो ध्वंत एव सः ॥ २६

इत्यादिमहापुराण आग्नेये गौर्यादिपूजावर्णनं नाम षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७०२

---

अथ सप्तविंशत्यधिकत्रिशततमोऽध्यायः ।

---

देवालयमाहात्म्यम् ।

ईश्वर उवाच—

व्रतेश्वरांश्च सत्यादीनिष्ट्वा व्रतसमर्पणम् । अरिष्टशमने शस्तमरिष्टं सूत्रनायकम् ॥ १
हेमरत्नमयं भूत्यै महाशङ्खं च मारणे । आप्यायने शङ्खसूत्रं मौक्तिकं पुत्रवर्धनम् ॥ २
स्फाटिकं भूतिदं कौशं मुक्तिदं रुद्रनेत्रजम् । धात्रीफलप्रमाणेन रुद्राक्षं चोत्तमं ततः ॥ ३
समेरुं मेरुहीनं वा सूत्रं जप्यं तु मानसम् । अनामाङ्गुष्ठमाक्रम्य जपं भाष्यं तु कारयेत् ॥ ४
तर्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे । प्रमादात्पतिते सूत्रे जप्तव्यं तु शतद्वयम् ॥ ५
सर्ववाद्यमयी घण्टा तस्या वादनमर्थकृत् । गोशकृन्मूत्रवल्मीकमृत्तिकाभस्मवारिभिः ॥ ६
वेश्मायतनलिङ्गादेः कार्यमेवं विशोधनम् । स्कन्दों नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥ ७
गीतः पञ्चाक्षरो वेदे लोके गीतः षडक्षरः । ओमित्यन्ते स्थितः शंभुर्महार्णे वटबीजवत् ॥ ८
क्रमान्नमः शिवायेति ईशानाद्यानि वै विदुः । षडक्षरस्य सूत्रस्य भाष्यं विद्याकदम्बकम् ॥ ९
यदों नमः शिवायेति एतावत्परमं पदम् । अनेन पूजयेल्लिङ्गं लिङ्गे यस्मात्स्थितः शिवः ॥ १०
अनुग्रहाय लोकानां धर्मकामार्थमुक्तिदः । यो न पूजयते लिङ्गं न स धर्मादिभाजनम् ॥ ११
लिङ्गार्चनाद्भुक्तिमुक्तिर्यावज्जीवमतो यजेत् । वरं प्राणपरित्यागो भुञ्जीतापूज्य नैव तम् ॥ १२
रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद्विष्णुपूजनात् । सूर्यः स्यात्सूर्यपूजातः शक्त्यादिः शक्तिपूजनात्
सर्वयज्ञतपोदाने तीर्थे वेदेषु यत्फलम् । तत्फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः ॥ १४
त्रिसंध्यं योऽर्चयेल्लिङ्गं कृत्वा बिल्वेन पार्थिवम् । शतैकादशिकं यावत्कुलमुद्धृत्य नाकभाक् ॥ १५
भक्त्या वित्तानुसारेण कुर्यात्प्रासादसंचयम् । अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥ १६
भागद्वयं च धर्मार्थे कल्पयेज्जीवनाय च । धनस्य भागमेकं तु अनित्यं जीवितं यतः ॥ १७

---

१ क. ङ. 'न चाऽर्चे' । २ ख. ग. जूमासनं । क ङ. युग्मासनं । ३ क. ङ. भुवि । ४ क. ङ. अथापने । ५ क. ङ. 'मात्रेण न । ६ क. ङ. 'ह्रार्थे बहुवी' । ख. 'ह्रार्थे व' ।

त्रिसप्तकुलमुद्धृत्य देवागारकृदर्थभाक् । मृत्काष्ठेष्टकशैलाद्यैः क्रमात्कोटिगुणं फलम् ॥ १८
अष्टेष्टकसुरागारकारी स्वर्गमवाप्नुयात् । पांशुना क्रीडमानोऽपि देवागारकृदर्थभाक् ॥ १९

इत्यादिमहापुराण आग्नेये देवालयमाहात्म्यवर्णनं नाम सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२१

---

अथाष्टाविंशत्यधिकत्रिशततमोऽध्यायः ।

---

छन्दःसारः ।

अग्निरुवाच—

छन्दो वक्ष्ये[1] मूलैर्जैस्तैः[2] पिङ्गलोक्तं यथाक्रमम् । सर्वादिमध्यान्तगणौ [3]म्लौ भ्यौ [4]ज्रौ स्तौ त्रिका गणाः ॥ १
ह्रस्वो[5] गुरुर्वा पादान्ते पूर्वयोगाद्विसर्गतः । अनुस्वाराद्व्यञ्जनात्स्याज्जिह्वामूलीयतस्तथा ॥ २
उपध्मानीयतो दीर्घो गुरु[6]र्ग्लौ नौ गणाविह । वसवोऽष्टौ च चत्वारो वेदा[7]दीन्यादिलोके[8]तः ॥ ३

इत्यादिमहापुराण आग्नेये छन्दःसारकथनं नामाष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२४

---

अथैकोनत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

छन्दःसारः ।

अग्निरुवाच—

छन्दोधिकारे गायत्री देवी चैकाक्षरा भवेत् । पञ्चदशाक्षरा सा स्यात्प्राजापत्याऽष्टवर्णिका ॥ १
यजुषां षडर्णा गायत्री साम्नां स्याद्द्वादशाक्षरा । ऋचामष्टादशार्णा स्यात्साम्नां वर्धे[10]त च द्वयम् २
ऋचां त्रयं च वर्धेत प्राजापत्याचतुष्टयम् । वर्धेदेकैककं शेषे आसुर्या एकमुत्सृजेत् ॥ ३
उष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगत्यपि । तानि ज्ञेयानि क्रमशो गायत्र्यो ब्राह्म्य[11] एव ताः ॥ ४
तिस्रस्तिस्रः सनाम्न्यः स्युरेकैका आर्ष्य[12] एव चै[13] । प्राग्यजुषां च संज्ञाः स्युश्चतुःषष्टिपदे लिखेत्

इत्यादिमहापुराण आग्नेये छन्दःसारकथनं नामैकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७२९

---

१ क. ङ. छन्दान्वक्ष्ये । २ ख. ग. °लशब्दैः पि° । ३ क. ङ. म्नौ । ख. ग. म्रौ । ४ क. ङ. ज्मौ । ५ ख. ग. °स्वो लघुर्वा । ६ ख. ग. °रु लौ सगलावि° । ७ ख. ग. °दा इत्यादि । ८ छ. °लोपतः । ९ क. ङ. °दश्यासुरी रम्या प्राजा° । १० क. ङ. °र्धेद्वयं द्व° । ११ क ङ. °ह्मय देव° । १२ छ. आर्य । १३ छ. च । ऋग्य° ।

अथ त्रिंशदधिकत्रिशततमोऽध्यायः ।

छन्दःसारः ।

अग्निरुवाच—

पाद आपादपूरणे गायत्र्यो वसवः स्मृताः । जगत्या आदित्याः पादो विराजो दिश ईरिताः
त्रिष्टुभो रुद्राः पादः स्याच्छन्द एकादिपादकम् । आद्यं चतुष्पाद्दतुभिस्त्रिपात्सप्ताक्षरैः क्वचित् २
(*सा गायत्री पादनिचृत्प्रतिष्ठाष्टाद्रिषट्त्रिपात् । वर्धमाना षडष्टाष्टा त्रिपात्षड्वसुभूधरैः ॥ ३
गायत्र्यतिपादनिचृन्नागी नवनवर्तुभिः । वाराही रसद्विरन्ध्रैश्छन्दश्चाथ तृतीयकम् ॥ ४
द्विपाद्द्वादशवस्वर्णैस्त्रिपात्तु त्रैष्टुभैः स्मृतम् । उष्णिक्छन्दोऽष्टवस्वर्कैः पादैर्वेदे प्रकीर्तितः ॥ ५
ककुबुष्णिग्गष्टसूर्यवस्वर्णैस्त्रिभिरेव सः । पुर उष्णिक्सूर्यवसुवस्वर्णैश्च त्रिपाद्भवेत् ) ॥ ६
परोष्णिक्परतस्तु स्याच्चतुर्भिद्वाषिभिर्भवेत् । साष्टाक्षरैरनुष्टुप्स्याच्चतुष्पाच्च त्रिपात्क्वचित् ॥ ७
अष्टार्कसूर्यवर्णैः स्यान्मध्येऽन्ते च क्वचिद्भवेत् । बृहती जगतस्त्रयो गायत्र्याः पूर्वको यदि ॥ ८
तृतीयः पथ्या भवति द्वितीया न्यङ्कुसारिणी । स्कन्धो ग्रीवा क्रौष्टुके स्याद्यास्कस्योरो बृहत्यपि
उपरिष्टाद्बृहत्यन्ते पुरस्ताद्बृहती पुनः । क्वचिन्नवकाश्चत्वारो दिग्विदिक्वष्टवर्णिका ॥ १०
महाबृहती जागतैः स्यात्त्रिभिः सतो बृहत्यपि । ताण्डिनः पङ्क्तिश्छन्दः स्यात्सूर्यार्काष्टाष्टवर्णकैः ॥
पूर्वौ चेदयुजौ सतः पङ्क्तिश्च विपरीतकौ । प्रस्तारपङ्क्तिः पुरतः परोदास्तारपङ्क्तिकः ॥ १२
+विस्तारपङ्क्तिरन्तश्चेद्बहिः संस्तारपङ्क्तिका । अक्षरपङ्क्तिः पञ्चकाश्च चत्वारश्चाल्पशो द्वयम् ॥ १३
पदपङ्क्तिः पञ्च भवेच्चतुष्कं षट्ककत्रयम् । षट्कपञ्चभिर्गायत्रैः षड्भिश्च जगती भवेत् ॥ १४
एकेन त्रिष्टुब्ज्योतिष्मती तथैव जगतीरिता । पुरस्ताज्ज्योतिः प्रथमे मध्येज्योतिश्च मध्यतः १४
उपरिष्टाज्ज्योतिरन्त्यादेकस्मिन्पञ्चके तथा । भवेच्छन्दः शङ्कुमती षट्के छन्दः ककुद्मती ॥ १६
त्रिपादशिशुमध्या स्यात्सा पिपीलिकमध्यमा । विपरीता यवमध्या त्रिवृदेकेन वर्जिता ॥ १७
भूरिजैकेनाधिकेन विहीना च विराड्भवेत् । स्वराट्स्याद्द्वाभ्यामधिकं संदिग्धे दैवतादितः ॥१८
आदिपादान्निश्चयः स्याच्छन्दसां देवताः क्रमात् ।(†अग्निः सूर्यः शशी जीवो वरुणश्चन्द्र एव च
विश्वे देवाश्च षड्जगत्याः स्वराः षड्जो वृषः क्रमात्) । गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा
निषादो वर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः । कृष्णो नीलो लोहितश्च गौरो गायत्रिमुख्यके ॥ २१

---

* धनुश्चिह्नान्तर्गतग्रन्थश्च. पुस्तके नास्ति । + इदमर्धं नास्ति क. घ. ङ. पुस्तकेषु । † धनुश्चिह्नान्तर्गतग्रन्थो नास्ति क. ङ. पुस्तकयोः ।

---

१ ख. °पूरेण गा° । २ छ विष्णुतो । ३ छ. °त्री पदे नीवृत्तप्रतिष्ठाद्रि° । ४ छ. °त्षड्वसुभू° । ५ छ. °यत्रीतिपदनीवृन्ना° । ६ क. °द्विनवकं वर्धमानत्वंगष्टभिः ॥ वस्वश्वषट्कवर्णैश्च प्रतिष्ठा तु प्रकीर्तिता ॥ द्वि° । ७ क. ङ. °पात्वर्णैर्जुनैः स्मृ° । ८ ख. °गनुष्टप्सूर्य° । ९ ख. ग. °स्वर्णाड्ग्रिभि° । छ °स्वर्णात्रिभि° । १० क. ङ. °ष्पान्मुनिभिर्भ° । छ. °ष्पादात्रिभि° । ११ क. °तीजागतत्र° । १२ छ. °गत्यत्र । १३ छ. स्कन्धौ । १४ छ स्यायक्षे स्याद्रो बृ° । १५ क. ङ. °स्योरबृ° । १६ ख. ग. दिग्दिगष्टाष्ट° । १७ छ. मण्डिलः । १८ घ. ङ. च. °वौ वेदयु° । घ. °वौ देवयु° । १९ ख. ङ. पश्चादा° । २० क. ङ. °दास्वासप° । २१ क. ङ. निछेदैकेन । ख. ग. निवृदेकेन । २२ छ. भूमिजै° । २३ ङ. द्विहीना । २४ छ. षड्जायाः । २५ क. ङ. °यव्यमुच्यते । गौ° ।

गोरोचनाभाः कृतयो ध्रृतिश्छ(च्छ)न्दो हि श्यामलम् । अग्निवैश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात्
भार्गवः कौशिकश्चैव वासिष्ठो गोत्रमीरितम् ॥ २३

इत्यादिमहापुराण आग्नेये छन्दःसारकथनं नाम त्रिशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८५२

---

अथैकत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## छन्दोजातिनिरूपणम् ।

अग्निरुवाच—

चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत् । अभिसंख्या प्रत्यकृतिस्तानि च्छन्दांसि वै पृथक्॥१
कृतिश्चातिधृतिर्धात्री अत्यष्टिश्चाष्टिरित्यतः । अतिशर्करी शैकरीति अतिजगती जगत्यपि ॥ २
छन्दोऽत्र लौकिकं स्याच्च आर्षमात्रैष्टुभात्स्मृतम् । त्रिष्टुप्पङ्क्तिर्बृहती अनुष्टुबुष्णिगीरितम् ॥ ३
गायत्री स्यात्सुप्रतिष्ठा प्रतिष्ठा मध्यया सह । अन्युक्तात्युक्त आदिश्च एकैकाक्षरवर्जितम् ॥ ४
चतुर्भागो भवेत्पादो गणच्छेन्दः प्रदर्श्यते । तावन्तः समुद्रा गणा ह्यादिमध्यान्तसर्वगाः ॥ ५
चतुर्वर्णाः पञ्च गणा आर्यालक्षणमुच्यते । स्वरार्धं च आर्यार्धं स्यादार्यायां विषमेण जः ॥ ६
षष्ठो जो न लघुर्वा स्याद्द्वितीयादिपदं नले । सप्तमेऽन्ते प्रथमा च द्वितीये पञ्चमे नले ॥ ७
अर्धे पदं प्रथमादि षष्ठ एको लघुर्भवेत् । त्रिषु गणेषु पादः स्यादार्यापश्चार्धके स्मृता ॥ ८
विपुलान्यथ चपला गुरुमध्यगतौ च जौ । द्वितीयचतुर्थौ पूर्वे च चपला मुखपूर्विका ॥ ९
द्वितीये जघनपूर्वा चपलायां प्रकीर्तिता । उभयोर्महाचपलौ गीतवार्याधतुल्यकौ ॥ १०
अन्त्येनार्धेनोपगीतिरुद्गीतिश्चोत्क्रमात्स्मृता । अर्धे रक्षगणा आर्या गीतिच्छन्दोऽथ मात्रया॥११
वैतालीयं द्विशस्ता स्याच्चतुष्पादे समे नलः । वसवोऽन्ते वनगाश्च गोपुच्छं दशकं भवेत् ॥ १२
भगणान्ता पातलिका शेषे परे च पूर्ववत् । साकं षड्वा मिश्रयुजि प्राच्यवृत्तिः प्रदर्श्यते ॥ १३
पञ्चमेन पूर्वसाकं तृतीयेन सहस्रयुक् । उदीच्यवृत्तिराद्या स्याद्युगपच्च प्रवर्तकम् ॥ १४
अयुक्चारुहासिनी स्याद्युगपच्चान्तिका भवेत् । सप्तार्चिर्वसवश्चैव मात्रासमकमीरितम् ॥ १५
भवेन्नलरमौ लश्च द्वादशो वा नवासिका । विश्लोकः पञ्चमाष्टौ मो चित्रा नवमकश्च लः ॥ १६
परयुक्ते नोपचित्रा पादाकुलकमित्यतः । गीत्यार्यालोपश्चेत्सौम्या लपूर्वा ज्योतिरीरिता ॥ १७

---

१ छ. ज्योतिश्छन्दो । २ क ङ. तिर्बृहती अ । छ तिवृत्ती अ । ३ क ङ. अष्टिप्रत्यष्टि । ४ क. ङ. छ. अतिशक्करी । ५ क. ङ. छ. शर्करी । ६ क. ङ. आर्यामात्रैष्टतान्स्मृत । ख. ग आर्यामात्रैस्थमस्मृत । ७ क. ङ. °कैकोत्तर° । ८ ख. ग. °र्वाधित । ९ क. ङ गणछन्दं । १० क ङ. प्रशस्यते । ११ ख. ग. °ते । भवेन्तः । १२ ख. ङ. °मे नरः । ष° । १३ ख. ग. °श्चाद्यके । १४ क. ङ. °ला शीतवार्यर्धे । १५ ख. ग. °का । आद्येना° । १६ क. ङ. अनन्तेनो° । १७ क. ङ. °र्धे च खगणमार्या° । ख ग. °र्धे वसुगण आ° । १८ ख ग. °ली पङ्क्तिः सुरास्या° । १९ छ. द्विस्वरा स्यादयुष्पा° । २० क. ङ °वो तेन नागा° । २१ छ पाटलिका । २२ ख. ग. अमुकचारहा° । २३ क. ङ. °युष्मारु° । २४ क. ङ. °त् । गर्ताद्विर्व° । ख. ग. °त् । गताद्विर्वे° । २५ क ङ. °वेत्तु नवमो नश्च द्वास्योवामन° । २६ क. ङ. विष्णोः कपञ्चमाष्टौमोचिन्नवमकश्चनः । प° २७ क. ख. ङ. °पवित्रा । २८ २ क. ङ. °लोगश्चेत्सौम्या नः पूर्वो ज्यो° ।

स्याच्छिखा विपर्यस्तार्धा[1] तूलिका[2] समुदाहृता । एकोन[3]त्रिंशदन्ते गः स्याज्ज्ञे[4]न न समावलौ १७
गुं[5] इत्येकगुरुं संख्या वर्णादे[8]श्च विपर्ययात् ॥ १८

इत्यादिमहापुराण आग्नेये छन्दोजातिनिरूपणं नामैकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७७०

---

अथ द्वात्रिंशदधिकत्रिशततमोऽध्यायः ।

---

विषमकथनम् ।

अग्निरुवाच—

वृत्तं समं चार्धसमं विषमं च त्रिधा वदे[9] । समं तावे[10]त्कृंत्वकृतमर्धं समं च कारयेत् ॥ १
विषमं चैव वा स्यूनमतिवृत्तं समान्यपि[11] । लग्नौ चतुष्प्रमाणी स्यादाभ्यामन्यद्वितानकम् ॥ २
*पादस्याऽऽद्यं तु वक्त्रं स्यात्सनौ न प्रथमा स्मृतौ । वान्यमुश्चतुर्थाद्वर्णात्पथ्यावक्त्रं स्वयोजतः
विपरीतपथ्या न्यासाच्चपला वायुजस्त्वनः । +विपुलौ[12] युग्मसप्तमः सर्वे तस्यै तस्य च[13] ॥ ४
भौतो वा विपुलानेका वक्त्रजातिः समीरिता । भवेत्पदं चतुरूर्ध्वं चतुर्वृद्ध्या पदेषु च ॥ ५
गुरु[14]द्वयात्तु आपीडः प्रत्यापीडो[15] गणादि[16]कः । प्रथमस्य विपर्यासे मञ्जरी लवणी[17] क्रमात् ॥ ६
भवेदमृतधाराख्या उद्धतेत्यु[18]च्यतेऽधुना । एकतः[19] ससजसा नः स्युर्नसौ जो गोऽथ भौ न जौ॥
[20]नो गोऽथ सजसा गो गस्तृतीयचरणस्य च । सौरभे[21] केचन[22] भगा[23] ललितं च नमौ जसौ ॥ ८
उपस्थितं प्रचुपितं प्रथमाद्यौ समौ जसौ[24] । गोगथो मलजा रो गः समौ च रजयाः पदे ॥ ९
वर्धमानं[25] मलौ[26] स्वोन[27] सौ अथो तोजोर ईरिता । शुद्धविराडार्षभाख्यं वक्ष्ये चार्धसमं ततः ॥

इत्यादिमहापुराण आग्नेये विषमकथनं नाम द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९७८०

---

* अस्मिञ्श्लोकेऽयं पाठः क. ख पुस्तकयोः—यादष्टं नष्टवक्त्रं स्यात्मनौ तत्प्रथमा स्मृतौ । वान्यद्यश्चयथाव-र्णापख्यावक्त्रं युयोज न इति । +एतदर्धस्थाने क. ङ. पुस्तकयोः 'विपुलायुग्मसयूर्मोः सर्वतः सैतवस्य च' इति ।

---

१ क. ङ. विस्तरार्धा । २ क. ङ गुप्तिका । ख. ग. मृलिका । ३ क. ङ. एकेन विंशदन्ते शः स्याजनन-समहाबलाः । गु । ४ घ. 'ज्ज्ञेजन । ५ क ङ. °ला । लई इत्येवं गुरुसं । ६ ख. ग. ग । ७ °र्णादिशवि° । ८ छ. 'देशवि° । ९ ख. ग. °वद् हृदृहृतमर्धस° । च. 'वद् हृदत्कृतधर्मस° । १० क. ङ. °त्कृद्वहृदमर्धस° । ११ ख ग. °पि । गलौ च° । च. °पि । नगौ च° । १२ ख ग. °लाप्रश्नस° । १३ ख. ग. च डौ तौ वा । १४ ख. ग. °रुत्वेऽस्य तु आ° । १५ क. ङ. °पीडीगकादि° । १६ ख. ग. °णाधिकः । १७ क. ङ. च. नवली । ख. ग लवनी । १८ ख. ग. उद्गतेत्यु° । १९ क. ङ. °तः शजसा नस्युर्नसौ गो जोऽर्थभोजमौ । नागो । ख. ग. °तः सजसा नस्युर्नमौ ज्यौ गोऽ° । २० ख. ग. लो । २१ क. ङ. सौरभं । २२ ख. ग. °भे रनभागाललडितौ च नलौ च सौ । २३ क ङ केचन भयानालितं तत्वशोदशौ । उ° । २४ ख. ग. जभौ । २५ क. ङ. °मानौस्तौ च नसौ अथोभ्येयो नद्रीरितम् । शु° । २६ ख. ग. तनौ । २७ छ. °लौ स्वौ न अथो भो जोव ई° ।

अथ त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः।

---

## अर्धसमनिरूपणम्।

अग्निरुवाच—

उपचित्रकं[1] ससमनामथभोज[2] भगामथ। द्रुतमध्या[3] ततभगा गथोननजयाः स्मृताः॥ १

वेगवती ससमगा भभभ गोगथो स्मृता। रुद्रविस्तारस्तो सभगासमजा गोगथा स्मृता[4]॥ २

रजसा गोगथो[5] द्रोणौ[6] गोगौ वै केतुमत्यपि। आख्यानिकी ततजगा गथा[7] जगतजगागथ॥ ३

विपरीताख्यानकीतिर्जयागा[8][9] तौ जगोगथ। सीमलौगथ लभभांरो[10] भवेद्धरिणवल्लभा[11]॥ ४

लौ वनौ गाथ नजजा यः स्यादपराक्रमम्(?)। पुष्पिताग्रा[12] नलवया नजजौ[13] रो गथो रंजौ[14]॥ ५

वोजथो जवजवागो मूले पनमती शिखा। अष्टाविंशतिनागाभा[15] त्रिंशन्नागं ततो युजि॥

खञ्जा तद्विपरीता स्यात्समवृत्तं प्रदर्श्यते[16]॥ ६

इत्यादिमहापुराण आग्नेयेऽर्धसमनिरूपणं नाम त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः॥ ३३३॥

आदितः श्लोकानां समष्ट्यङ्काः—९७८६

---

अथ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः।

---

## समवृत्तनिरूपणम्।

अग्निरुवाच—

यतिर्विच्छेद इत्युक्तस्तत्तन्मध्यान्तयौ गणौ। यौ सः कुमारललिता तौ गौ चित्रपदा स्मृता॥ १

विद्युन्माला[17] सभागस्य गणौ रतलगैर्भवेत्[18]। माणवकाक्रीडितकं वनौ[19] हलमुखौ[20] वसः[21]॥ २

स्याद्भुजंगशिशुसृता नौ मोहं सरुतं ननौ[22]। भवेच्छुद्धविराड्वृत्तं[23] प्रतिपादं समौ जगौ[24]॥ ३

प्रणवो[25] नतयामः स्याज्जौ गौ मयूरसारिणी[26]। संतामभसगा[27] वृत्तं भजताद्युपरि स्थिता॥ ४

रुक्मवन्ती भससगात्रिन्द्रवज्रा तजौ[28] जगौ[29]। जतौ जगौ तूपपूर्वा[30] वाद्यन्ताद्युपजातयः॥ ५

दोधकं भग(भ)भागौ[31] स्याच्छालिनी मतभौगगौ[32]। यतिः समुद्रा ऋषयो वातोर्मी मभतागगौ[33]॥ ६

चतुःस्वरा स्याद्भ्रमरी विलसिता मभौ नलौ। समुद्रा अथ ऋषयो वनौ लौ गौ रथोद्धता॥ ७

---

१ ख. ग. °पचित्रं समसनागथभोडभगागथो। छ.°पाचित्र°। २ क. ङ. समसनाभासश्वमभौभद्रथ। ३ ख. ग. °ध्या भभभ°। ४ ख ग. समसगाभभोभगो। ५ क. ड. °ता। सजगागोगथोभौ वोगोगवेके°। ६ ख. ग. °थो औ नौ गो°। ७ ख. ग थोथ जजगागथ। छ. °थो तत°। ८ छ. °ख्यानिको तौ जया°। ९ ख. ग. °तिर्जमगोतौ। १० छ. °भावौ भ°। ११ ख. ग. °णप्लुता। नौषणौगथ। १२ क. ङ. ननरजारोजोगथोवसौ। रजथोरजगः जोरो-मूलेजवयती। छ. ननव°। १३ छ. °जावोग°। १४ ख. ग. °जौ। रोजथो जरजारो गोमूलयेवम°। १५ ख. ग. °तिला-गन्तात्रिं°। १६ ख. ग. प्रदर्श्ये। १७ क. ङ. °लाममगणाङ्कणैर्भत°। छ. °मममा गणैर्भूतगणैर्भ°। १८ ख रनौ। १९ ख. च. रसः। २० च. °शुभृता रौ मोहं मरु°। छ. °शुसुतानौमेहं नमरु°। २१ च. ततौ। २२ ख. °वेच्छब्ददिराववृत्तं। २३ ख. ग. °द्धविराड्वृत्तं। २४ छ. °गौ। पणवो मलयो मः। २५ क. ङ. °वोमनजागः स्यादष्टौ गोम°। २६ ख. ग. °णी। संतानभस°। २७ क. ङ. सताभव समावृ°। २८ क. ङ. ननौ। २९ क. ङ. सगौ। ३० छ भूपपूर्वा। ३१ क. ङ. °नी यतनाग°। ३२ ख. °भाभगौ। ३३ क. °भभाग°।

स्वागतो धनभा गो गो वृत्तानननसमाश्च सः । श्येनीवै जवना गः स्याद्रम्या नपरगा गगः ।। ८
जगती वंशस्था वृत्तं जतौ जावथ तौ जैवौ । इन्द्रवंशा तोटकं सैश्चतुर्भिः प्रतिपादितम् ।। ९
भवेद्द्रुतविलम्बिता नभौ भरावथो नलौ । स्यौ श्रीपरो वसुवेदाञ्जलोद्धतगतिर्जलौजसौ ।। १०
जसौ वसर्वेवश्चाथ ततं ननमैराः स्मृतम् । कुसुमविचित्रा यौनौ च नौ रम्याचलाक्षिका ।। ११
भुजंगप्रयातं यैः स्याच्चतुर्भिः स्रग्विणी तु रैः । प्रमिताक्षरा गजौ सौ कान्तोत्पीडा मतौ समौ ।।
वैश्वदेवी ममयया: पञ्चाङ्गा नवमालिनी । नजौ भयौ प्रतिपादं गणा यदि जगत्यपि ।। १३
प्रहर्षिणी मंवजवा गोपतिर्वह्निदिक्षु च । रुचिरा जंभसजगा छिन्ना वेदैर्ग्रहैः स्मृता ।। १४
मत्तमयूरं मतया सैतौ वेदग्रहैर्यतिः । गौरी नैलेनसा गः स्यादसंबाधा नतौ नगौ ।। १५
गो ग इन्द्रियनवकौ ननौ रसलगाः स्वराः । स्वराश्चापराजिता स्यान्ननभा नलगाः स्वराः १६
द्विः प्रहरणकलिता वसन्ततिलका नभौ । जौ गौ सिंहोन्नता सा स्यान्मुनेरुद्धर्षिणी च सा।। १७
चन्द्रावर्ता ननौ सोमावैर्ततुनवकः स्मृतः । मणिगुणनिकराऽसौ मालिनी नौ मयौ यैसः ।। १८
यतिर्वसुस्वरा भौ वौ नतलैमित्रसग्रहाः । ऋषभगजविलसितं ज्ञेया शिखरिणी जैगौ ।। १९
रसभालभृगुरुद्राः पृथ्वीजसजसा जैनौ । गावसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा ।। २०
वंशपत्रपतितं स्याद्वनवना भौ नगौ सदिक् । हरिणी नसमा रः सो नैगौ रसचतुःस्वराः ।। २१
मन्दाक्रान्तो समभतं नगौ राब्धिवसुः स्वराः । कुसुमितलता वेल्लिता मैतना ययया: शराः २२
रैथाः स्वराः प्रतिरथससजाः सतताश्च गः । शार्दूलविक्रीडितं स्यादादित्यमुनयो यतिः ।। २३
कृतिः सुवदना मो रो भनया भनगाः सुराः । यतिर्मुनिरसाश्चाथ इति वृत्तं क्रमात्स्मृतम्।। २४
स्रग्धरा मरैता नो मो यपौ त्रिःसप्तका यतिः । सैमुद्रकं भरैजा नो वनगा दश भास्कराः ।। २५
अश्वललितं नजभा जभैजा भनमीशतः । मत्तक्रीडा ममनैना नौ नग्नौ गोष्टमातिथिः ।। २६
तन्वी भनतसा भो भो लयो बाणसुरार्ककाः । क्रौञ्चपदा भमतता नौ नौ बाणशराष्टतः।। २७
भुजंगविजृम्भितं ममतना ननवार्सनौ । गष्टेशमुनिभिश्छेदो ह्युपहावाख्यमीदृशम् ।। २८
मनना ननता नः सो गणैर्ग्रहरसो रसात् । नौ सप्त रो दण्डदः स्याच्चण्डवृष्टिप्रपातकम् ।। २९
रेफैर्वृद्ध्या ननवाः स्युर्व्यालजीमूतमुख्यकाः । शेषे वै प्रतितो ज्ञेयो गाथा प्रस्तार उच्यते ।। ३०

इत्यादिमहापुराण आग्नेये समवृत्तनिरूपणं नाम चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ।। ३३४ ।।

आदितः श्लोकानां समष्ट्यङ्काः—९८१६

१ छ. सामता । २ क. ङ. °ता रणभा । ३ ख. घ. °नीरजरदागः स्याद्रस्यानपरगागनः । ज° । ४ ख. ग. जरौ । ५ छ. श्रीपुटो वसुवेदा जलोद्गतिजलौ जमौ । ज° । ६ ख. ग. °सौ रसतव° । ७ क. ङ. °मवास्मृ° । ८ छ. °त्रा न्यौ यौ नौ नौ रो स्याच्चलाम्बिका । ९ क. ङ. कालोत्पीनामभौस° । १० ख. ग. °त्पीला म° । ११ ख. ग. मरजरा गो° । १२ क. ङ. °रा गभ° । १३ ख. ग. जभजसगा । १४ क. सगौ । १५ ख. ग. नननसा मः स्या° । १६ ख. नसौ । १७ ख. ग. °तेभव° । १८ छ. यय: । १९ ख. ग. °लमद्रिस° । २० ख. ग. °भजगजत्रि° । २१ ख. ग. यसौ । २२ क. ङ. °गौ । नसभानगृहं तु रु° । २३ क. ङ. °थ्वी सजयसापरौ । गा° । २४ ख. ग. °नौ । गोव° । २५ क. ङ. °पन्नप° । २६ क. ङ. स्याद्रचनाद्वौ म° । २७ ख. ग. °द्धरतो भौ लगोस° । २८ ख. ग. लभौ । २९ ख. ग. °न्ता नभननं न° । छ. °न्ता मभमत । ३० ख. ग. मतोयमयया: पराः । ३१ क. ङ. रसासुराप्रतिरथमशताः शतजास्वगः । ३२ ख. ग. °श्चाथाभिभिवृत्तं । ३३ क. ङ. °रभारोयो यथौ त्रिः । ३४ क. ग. सप्तकण्ठवनीरोनोरामगा । ३५ ख. ग. °रनागौतौनोन° । ३६ ख. ग. °भजलभर्मा° । ३७ ख. ग. °नवा नौ मग्नौ श्चोष्ट° । ३८ ख. ग. नौ यानश° । ३९ क. ङ. °तं सोसमतना नरसा लगौ । ग° । ४० क. ङ. °नौ । अष्टाष्टमु° । ख. ग. नौ । अष्टेश मुनिभिरश्छे° । ४१ ख. ग. °प्रपात° । ४२ क. ङ. °फवल्गाभ्रववर्णा वाश्यु° ।

अथ पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः।

प्रस्तारनिरूपणम्।

*अग्निरुवाच—

छन्दोऽत्र सिद्धं गाथा स्यात्पादे सर्वगुरौ तथा। प्रस्तार आद्येगाथो नः परतुल्योऽथ पूर्वगः ॥
लष्टमध्ये समेऽङ्के नः समेऽर्धेविषमे गुरुः। प्रतिलोमगुणं नाद्यं द्विरुद्दिष्टग एकनुत् ॥ २
संख्याद्विरर्धे रूपे तु शून्यं शून्ये द्विरीरितम्। तावदर्धे तद्गुणितं द्विद्व्यूनं च तदन्ततः ॥ ३
परे पूर्णं परे पूर्णं मेरुप्रस्तारतो भवेत्। नगसंख्या वृत्तसंख्या चार्धाङ्गुलैमधोर्ध्वतः ॥ ४
संख्यैव द्विगुणैकोना छन्दःसारोऽयमीरितः ॥ ५

इत्यादिमहापुराण आग्नेये प्रस्तारनिरूपणं नाम पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८२१

अथ षट्त्रिंशदधिकत्रिशततमोऽध्यायः

शिक्षानिरूपणम्।

अग्निरुवाच—

वक्ष्ये शिक्षां त्रिषष्टिः स्युर्वर्णा वा चतुरा(र)धिकाः। स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः। अनुस्वारो विसर्गश्च ≍क ≍पौ चापि पराश्रितौ॥
दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव चँ। रङ्गश्च खे अरं प्रोक्तं हकारः पञ्चमैर्युतः ॥ ३
अन्तस्थाभिः समायुक्त औरस्यः कण्ठ्य एव सः। आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ ४
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ ५
प्रातः सवनयोगं तु च्छन्दो गायत्रमाश्रितम्। कण्ठे माध्यंदिनयुतं मध्यमं त्रैष्टुभानुगम् ॥ ६
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥ ७
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः। स्वरतः कालतः स्थानात्प्रयत्नार्थप्रदानतः ॥ ८
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥
अनुस्वारो विसर्गश्च शषसा रेफ एव च। जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १०
पद्यो भावप्रसंधानमुकारादि परं पदम्। स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ ११
कुतीर्थादागतं दग्धमपवर्णं च भक्षितम्। एवमुच्चारणं पापमेवमुच्चारणं शुभम् ॥ १२
सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम्। सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ १३
न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः। गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ १४

* अयमध्यायो नास्ति ख. पुस्तके।

१ क. ङ. आद्यो गो धो नः। २ ग. 'यगाद्यो लः प'। ३ क. ङ. 'गुणामाद्यं। ४ क. ङ. 'लतदार्धे'। ५ ख. ग. एकारः। ६ क. ङ. च। वक्ष्ये मुखेऽक्षरं प्रो'। ७ ख. ग. प्रोक्तमको'। ८ ख. ग. कण्ठ एकलः। आ'।

(*यथा व्याघ्री हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । १५
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ) । उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ॥ १६
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अपि(चि) । कण्ठ्या कु(व)हाविचुयशास्तालव्या ओष्ठजावुपू ॥ १७
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः।जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः
ए ऐ तु कण्ठतालव्या ओ औ कण्ठ्यौ(ण्ठो)ष्ठजौ स्मृतौ।अर्धमात्रा तु कण्ठस्य एकारैकारयोर्भवेत्
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः।अचोऽस्पृष्टा यणस्त्वीषन्नेमाः(म) स्पृष्टाः शलः स्मृताः
शेषाः स्पृष्टा हलः प्रोक्ता निबोधात्र प्रधानतः।अमोऽनुनासिका नह्रो(ह्रौ) नादिनो हझषः स्मृताः
ईषन्नादो(दा) यणश्चैव श्वासिनश्च खफादयः । ईषच्छ्वासं शरं विद्याद्गोर्धामैतत्प्रचक्षते ॥ २२

इत्यादिमहापुराण आग्नेये शिक्षानिरूपणं नाम षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८४२

---

अथ सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ।

---

## काव्यादिलक्षणम् ।

अग्निरुवाच—

काव्यस्य नाटकादेश्च अलंकारान्वदाम्यथ । ध्वनिर्वर्णाः पदं वाक्यमित्येतद्वाङ्मयं मतम् ॥ १
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते । शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता ॥ २
अभिधायाः प्रधानत्वात्काव्यं ताभ्यां विभिद्यते । नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ॥ ३
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा । व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ॥ ४
सर्वं शास्त्रमविद्वद्भिर्मृग्यमाणं न सिध्यति । आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकाः ॥ ५
वर्गेषु वर्णवृन्दं स्यात्पदं सुप्तिङ्प्रभेदतः । संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥ ६
काव्यं स्फुरदलंकारं गुणवद्दोषवर्जितम् । योनिर्वेदश्च लोकश्च सिद्धमन्नादयो निजम् ॥ ७
देवा[illegible]नां संस्कृतं स्यात्प्राकृतं त्रिविधं नृणाम् । गद्यं पद्यं च मिश्रं च काव्यादि त्रिविधं स्मृतम्
अ[illegible]ः पदसंतानो गद्यं तदपि गद्यते । चूर्णकोत्कलिकावृत्तसंधिभेदात्त्रिरूपकम् ॥ ९
अल्पाल्पविग्रहं नातिमृदुसंदर्भनिर्भरम् । चूर्णकं नामतो दीर्घसमासोत्कलिका भवेत् ॥ १०
भवेन्मध्यमसंदर्भं नातिकुत्सितविग्रहम् । वृत्तच्छायाहरं वृत्तसंधिनैतत्किलोत्कटम् ॥ ११
आख्यायिका कथा खण्डकथा परिकथा तथा । कथानिकेति मन्यन्ते गद्यकाव्यं च पञ्चधा॥१२
कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात् । कन्याहरणसङ्ग्रामविप्रलम्भविपत्तयः ॥ १३
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः । उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥ १४

---

* धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. पुस्तकयोर्नास्ति ।

---

१ ख. ग. 'निवर्णप' । २ ख. ग. 'तदाश्रयं' । ३ क. ङ. तिष्ठता । ४ च. 'प्राणाः स्वरूपकाः । क. ङ. 'प्राणाः शाकारकाः । ५ ख. ग. 'मर्थादे' । ६ ख. ग. वेदादीनां । ७ क. ङ. 'स्पान्यविग्रहं जाति' । ८ क. ख. ग. छ. 'सगन्धिनै' ।

वक्त्रं वाऽपरवक्त्रं वा यत्र साऽऽख्यायिका स्मृता । श्लोकैः स्ववंशं संक्षेपात्कविर्यत्र प्रशंसति ॥
मुख्यस्यार्थावताराय भवेद्यत्र कथान्तरम् । परिच्छेदो न यत्र स्याद्भवेद्वा लम्बकैः क्वचित् ॥ १६
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् । भवेत्खण्डकथा याऽसौ कथा परिकथा तयोः॥१७
अमात्यं सार्थकं वाऽपि द्विजं वा नायकं विदुः । स्यात्तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः॥१८
समाप्यते तयोर्नाऽऽद्या सा कथामनुधावति । कथाख्यायिकयोर्मिश्रभावात्परिकथा स्मृता ॥ १९
भयानकं सुखपरं गर्भे च करुणो रसः । अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका ॥ २०
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसंख्येयमुक्थं तत्कृतिशेषजम् ॥ २१
मात्राभिर्गणना यत्र सा जातिरिति काश्यप । सममर्धसमं वृत्तं विषमं पैङ्गलं त्रिधा ॥ २२
सा विद्या नौस्तितीर्षूणां गभीरं काव्यसागरम् । महाकाव्यं कलापश्च पर्याबन्धो विशेषकम् २३
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम् । सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ॥ २४
तादात्म्यमजहत्तत्र तत्समं नातिदुष्यति । इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ॥ २५
मन्त्रदूतप्रयाणाजिनियतं नातिविस्तरम् । शक्वर्याऽतिजगत्याऽतिशक्वर्या त्रिष्टुभा तथा ॥ २६
पुष्पिताग्रादिभिर्वक्त्राभिजनैश्चारुभिः समैः । *मुक्ता तु भिन्नवृत्तान्ता नातिसंक्षिप्तसर्गकम्॥ २७
अतिशक्वरिकोष्टुभ्यामेकसंकीर्णकैः परः । मात्रयाऽप्यपरः सर्गः प्राशस्त्येषु च पश्चिमः ॥ २८
कल्पोऽतिनिन्दितस्तस्मिन्विशेषानादरः सताम् । नगरार्णवशैलर्तुचन्द्रार्काश्रमपादपैः ॥ २९
उद्यानसलिलक्रीडामधुपानरतोत्सवैः[६] । दूतीवचनविन्यासैरसतीचरिताद्भुतैः ॥ ३०
तमसा मरुताऽप्यन्यैर्विभावैरतिनिर्भरैः । सर्ववृत्तिप्रवृत्तं च सर्वभाव[७]प्रभावितम् ॥ ३१
सर्वरीतिरसैः स्पृष्टं पुष्टं[८] गुणविभूषणैः । अत एव महाकाव्यं तत्कर्ता च महाकविः ॥ ३२
वाग्वैदग्ध्यप्रधानेऽपि रस एवा[९]त्र जीवितम् । पृथक्प्रयत्नं[१०] निर्वर्त्यं वाग्विक्रमणि(?) रसाद्वपुः ३३
चतुर्वर्ग[११]फलं विश्वग्व्या[१२]ख्यातं नायकाख्यया । समानवृत्ति[१३]निर्व्यूढः कौशिकीवृत्तिकोमलः ॥ ३४
कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः । सविशेषकं प्राप्त्यादि संस्कृतेनेतरेण च ॥ ३५
( +श्लोकैरनेकैः कुलकं स्या[१४]त्संदानितकानि तत् । मुक्तकं श्लोक एकैकश्चमत्कारक्षमः सताम् )॥
सूक्तिभिः कविसिंहानां सुन्दरीभिः समन्वितः । कोषो ब्रह्मापरिच्छिन्नः स विदग्धाय रोचते॥
आभासोपमशक्तिश्च सर्गे यद्भिन्नवृत्तता । मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा ॥ ३८
( †श्रव्यं चैवाभिनेयं च प्रकीर्णं सकलोक्तिभिः ॥ ३९

इत्यादिमहापुराण आग्नेये काव्यादिलक्षणकथनं नाम सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८८१

---

* एतदर्धस्थाने—" युक्ता तु भिन्नवृत्ताख्या नातिसंक्षिप्तसङ्गकम् " इति क. ङ. पुस्तकयोः । + धनुश्चिह्नान्तर्गतग्रन्थश्च.' पुस्तके नास्ति । † धनुश्चिह्नान्तर्गतग्रन्थः क. ङ. पुस्तकयोर्नास्ति ।

१ ख. ग. लम्भकैः । २ छ. त्रिधा । ३ क. ङ. 'रसंक्षेपं युज्यते तद्विशेषणम् । ४ ख. ङ. °कायाभ्यामे' । ५ ख. ग. °गरान्तरशै° । ६ ख. ग. °वैः । कृतीव° । ७ क. ङ. °वविभाववित् । शर्वरीतिरजैर्जुष्टं पुणिर्गुण° । ८ ख. ग. °ष्टं गण° । ९ क. ङ. °वानुजीवनम् । १० क. ङ. 'यत्ननिवृत्त्यै वासुकिन्निर° । ११ क. ङ. °तुर्वक्त्रं च संधिश्च व्याख्या° । १२ ख. ग. °श्चव्या° । १३ ख. ग. 'वृत्तनि° । १४ क. ङ. स्याच्छन्दानितकादि त' ।

अथाष्टात्रिंशदधिकत्रिशततमोऽध्यायः ।

---

नाटकनिरूपणम् ।

अग्निरुवाच—

नाटकं सप्रकरणं डिम ईहामृगोऽपि वा । ज्ञेयः समवकारश्च भवेत्प्रहसनं तथा ॥ १
व्यायोगभाणवीथ्यङ्कत्रोटकान्यथ नाटिका ) । सट्टकं शिल्पकः कर्णा एको दुर्मल्लिका तथा ॥ २
प्रस्थानं भाणिका भाणी गोष्ठी हल्लीशकानि च । काव्यं श्रीगदितं नाट्यरासकं रासकं तथा ३
उल्लाप्यकं प्रेङ्क्षणं च सप्तविंशतिरेव तत् । सामान्यं च विशेषश्च लक्षणस्य द्वयी गतिः ॥ ४
सामान्यं सर्वविषयं विशेषः क्वापि वर्तते । पूर्वरङ्गे निवृत्ते द्वौ देशकालावुभावपि ॥ ५
रसभावविभावानुभावा अभिनयास्तथा । अङ्कः स्थितश्च सामान्यं सर्वत्रैवोपसर्पणात् ॥ ६
विशेषोऽवसरे वाच्यः सामान्यं पूर्वमुच्यते । त्रिवर्गसाधनं नाट्यमित्याहुः करणं च यत् ॥ ७
इतिकर्तव्यता तस्य पूर्वरङ्गो यथाविधि । नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्वरङ्गके ॥ ८
देवतानां नमस्कारो गुरूणामपि च स्तुतिः । गोब्राह्मणनृपादीनामाशीर्वादादि गीयते ॥ ९
नाद्य(न्द्य)न्ते सूत्रधारोऽसौ रूपकेषु निबध्यते । गुरुपूर्वक्रमं वंशप्रशंसा पौरुषं कवेः ॥ १०
संबन्धार्थौ च काव्यस्य पञ्चैतानेष निर्दिशेत् । नटी विदूषको वाऽपि पारिपार्श्वक एव च ॥ ११
सहिताः सूत्रधारेण संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थै(त्थैः) प्रस्तुताक्षेपिभिर्मिथः ॥ १२
आमुख्यं तत्तु विज्ञेयं बुधैः प्रस्तावनाऽपि सा । प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा ॥ १३
आमुख्यस्य त्रयो भेदा बीजांशेषूपजायते । कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ॥ १४
तदाश्रयस्य पात्रस्य प्रवेशस्तत्प्रवृत्तकम् । सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ॥ १५
गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स उच्यते । प्रयोगेषु प्रयोगं तु सूत्रधृग्यत्र वर्णयेत् ॥ १६
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः । शरीरं नाटकादीनामितिवृत्तं प्रचक्षते ॥ १७
सिद्धमुत्प्रेक्षितं चेति तस्य भेदावुभौ स्मृतौ । सिद्धमागमदृष्टं च सृष्टमुत्प्रेक्षितं कवेः ॥ १८
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च । अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात् ॥ १९
प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च । नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ २०
मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव च । तथा निर्हरणं चेति क्रमात्पञ्चैव संधयः ॥ २१
अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते ॥ २२
यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा । काव्ये शरीरानुगतं तन्मुखं परिकीर्तितम् ॥ २३
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः । रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥ २४
आश्चर्यवदभिख्यातं प्रकाशानां प्रकाशनम् । अङ्गहीनो नरो यद्वन्न श्रेष्ठं काव्यमेव च ॥ २५
देशकालैर्विना किंचिन्नेतिवृत्तं प्रवर्तते । अतस्तयोरुपादानं नियमात्पदमुच्यते ॥ २६

---

१ ख. ग. समरकारश्च । २ ख. ग. °ङ्कतोट° । ३ ख. ग. दुर्मणिका । ४ ख. ग. हन्दीसकानि । ५ क. ख. ग. °र्वे वीथ्यङ्कैरन्यथाऽपि वा । आ° । ६ क. ङ. वर्तयेत् । ७ क. ख. ग. बिन्दु । ८ क. ङ. प्राकरी । ९ छ. निर्वहणं । १० क. ख. ग. °गता तन्मु° । ११ क. ङ. श्रेयः । १२ क. ख. ग. °दानपि° ।

